अधुना विष्णोर्जीवजडात्मकप्रपंचादत्यंतभिन्नतांसाधयितुंतृतीयसौरभमुपक्रमते ॥ सर्ववस्त्वात्मकत्वंचेति ॥ सत्यंज्ञानमनंतंब्रह्मेतिश्रुतौविद्यमानमनंतत्वं सर्ववस्त्वात्मकत्वमितियदुच्यते तदितिसंबंधः । मायावादिनोह्यनंतशब्दस्य देशतःअंतराहित्यं कालतःअंतराहित्यं वस्तुतःअंतराहित्यंचेत्यनंतशब्दार्थः । तत्रवस्तुतोंतराहित्यंनाम सकलवस्तुभेदराहित्यमितिवदंति । तदयुक्ततममितिभावः ॥ १ ॥ कुतोनयुक्तमित्यतआह ॥ समस्तेति ॥ अनृतजडविरोधिरूपमंतत्रयमलबंधनदुःखताविरुद्धमितिग्रंथे

सर्ववस्त्वात्मकत्वंचयदनंतत्वमीरितं ॥ तदयुक्ततमंमन्येयुक्तायुक्तविचारणे ॥ १ ॥
समस्तवस्तुरूपत्वंनतावत्स्वस्यशोभते ॥ जडानृतविरोधित्वंयद्ब्रह्मणिजगौस्वयं ॥ २ ॥
श्रुतिःप्राग्ज्ञानमित्याहयतस्तज्जडरूपता ॥ नतस्याश्चमतानापिशब्दस्यहृदयंगमा ॥ ३ ॥
यद्देशतोव्याप्तिमाहदेशतस्सोंतशून्यतां ॥ कालतोव्याप्तिमाचष्टकालतश्चांतशून्यतां ॥ ४ ॥

ब्रह्मणोनृतसमस्तवस्तुविरोधित्वकथनात् इदानींसमस्तवस्तुभेदराहित्यकथनमिदं स्वमतविरुद्धत्वादयुक्तमितिभावः ॥ २ ॥ दूषणांतरंचाह ॥ श्रुतिरिति ॥ यतश्श्रुतिः सत्यंज्ञानमनंतमितिश्रुतिः । प्राक्पूर्वभागे ज्ञानमितिज्ञानरूपतामाह । तत्तस्मात्तस्याश्श्रुतेः । उपलक्षणंचैतत् । सत्यमितिब्रह्मणःप्राक्सत्यत्वोक्तेरधुनाऽनृतजगद्रूपत्वांगीकारेपरमतेश्रुतिविरोधश्चेत्यपिद्रष्टव्यं । दोषांतरंचवक्तुमारभते ॥ नापीति ॥ शब्दस्या नंतशब्दस्य । हृदयंगमा अभिप्रेता ॥ ३ ॥ कुतइत्यतआह ॥ यदिति ॥ यद्य



स्मा त्सशब्दः देशतोंतशून्यतां देशतोव्याप्तिमाह । तथोक्त्यापीममेवार्थमाहेतियावत् । अंतोह्यवधिः । तच्छून्यतानाम सकलदेशवर्तित्वरूपव्याप्तिरेवेतिभावः । कालतोंतशून्यतांच कालतोव्याप्तिमाचष्टेतियोजना । भावस्तुपूर्ववदेव ॥४॥ तत्तस्माद्विभोस्सकलदेशव्याप्तत्वापरपर्यायमहापरिमाणस्य अणुरूपत्व मणुपरिमाणघटपटादिरूपत्वं नित्यस्य सकलकालव्याप्तत्वापरपर्यायनित्यत्ववतोऽनित्यरूपतामनित्यघटपटादिरूपतांचासावनंतशब्दःपुन र्देशव्याप्तत्वकालव्याप्तत्वकथनानंतरमेवकथंब्रूयादितिसंबंधः। पूर्वार्धद्वयेव्याप्तत्वनित्यत्वेउक्त्वा तृतीयार्धेस्मिंस्तद्विरुद्धमणवनित्यपदार्थैक्यंचकथंसशब्दः संघटयेदितिभावः । तत्रहेतुः सश

विभोस्तदणुरूपत्वंनित्यस्यानित्यरूपतां ॥ कथंपुनरसौब्रूयान्नहिसस्वात्मघातकः ॥ ५ ॥
देशकालव्याप्ततोक्त्यायत्तद्भिन्नमभूत्पुरा ॥ कथंपुनर्वस्तुरूपात्ततएवतदेकता ॥ ६ ॥

ब्दस्स्वात्मघातकोनहीति । स्वोक्तार्थघातकोपि स्वाप्रामाण्यहेतुत्वात्स्वघातकएवेतिभावेनोक्तंस्वात्मघातकइति । पूर्वोत्तरविरुद्धार्थभाषित्वात्शब्दस्यस्वघातकत्वेनाप्रामाण्यंस्या दतोनायंशब्दस्याप्यभिमतोर्थइतिभावः । अत्रचाणुत्वमहत्त्वप्राप्त्यानित्यत्वानित्यत्वप्राप्त्याचविरोधद्वयंद्रष्टव्यं ॥ ५ ॥ विरोधांतरंचाह ॥ देशेति ॥ यद्ब्रह्म देशकालव्याप्तत्वोक्त्यापुरापूर्वमर्धद्वयकथनसमये तद्भिन्न देशकालाभ्यांभिन्नं व्याप्यव्यापकयोर्भेदावश्यंभावादितिभावः । पुनर्वस्तुरूपात् ततएव देशकालतएव । तदेकता तस्यब्रह्मणःएकता । स्यादितिशेषः । सकलवस्त्वात्मकत्वकथनेवस्तुरूपतन्मध्यपतितगगनकालैक्यस्याप्युक्तत्वादितिभावः ।

देशकालव्याप्तत्वोक्तिदशायांब्रह्मणो देशकालभेदमुक्त्वापुनस्सकलवस्त्वात्मकत्वोक्तिदशायांताभ्यामेवदेशकालाभ्यामैक्यकथना च्चपूर्वोत्तरविरोधइतिसाक्षाद्वाचनिकतयातिप्रबलंविरोधांतरंद्रष्टव्यं ॥६॥ दोषांतरमप्याह ॥ **सकृच्छ्रुतेति** ॥ स्थलद्वये देशेकालेच । तदैव परिच्छेदकथनकालएव । एकत्र वस्तुतोभेदराहित्यकथनस्थले । सःअनंतशब्दः । सकलवस्त्वात्मकत्वकथनसमयेंऽतश ब्देनभेदस्यैववक्तव्यत्वादितिभावः ॥ ७ ॥ कुतोनवक्तीत्यतआह ॥ **नहीति** ॥ असावनंतशब्दः । द्विजिह्वः द्वेजिह्वेयस्येति व्युत्पत्त्याद्विजिह्वोनहि । एकदैकमेवार्थंशब्दोवक्तीतितावत्स्वभावः । तथाचस्थलद्वयेपरिच्छेदाख्यमर्थमंतशब्देनवदंस्तदैवान्यत्र

**सकृच्छ्रुतांतशब्देनपरिच्छेदंस्थलद्वये ॥ वदंस्तदैवभेदंचकथमेकत्रवक्तिसः ॥ ७ ॥ नहिद्विजिह्वःशब्दोसौ
नापित्रिक्षणवर्तिनः ॥ विरम्यव्यापृतिर्युक्तानापिसाविदुषांमता ॥ ८ ॥ देशकालांतशून्यत्वंदेशेकालेच
वर्तनं ॥ यथा वस्त्वंतशून्यत्वंतथावस्तुषुवर्तनं ॥ भवेत्परं द्विधानैकपङ्क्तौयत्परिवेषणं ॥ ९ ॥ ॥**

भेदमपिवक्तुंजिह्वाद्वयवत्त्वेसतिप्रभवति । अन्यथानेतिविनोदितोक्तिरियं । ननुसकृत्प्रयुक्तएवशब्दःप्राक्परिच्छेदमुक्त्वानंतरंभे दंचसएववदतु कोदोषइत्यतआह ॥ **नापीति** ॥ विरम्य एकार्थकथनंसमाप्य । व्यापृतिः तदनंतरमर्थांतरकथनव्यापारइत्यर्थः । त्रिक्षणावस्थायिनःशब्दस्यतदयोगादितिभावः । अस्माकंमतेशब्दस्यनित्यत्वेपिव्यंजकध्वनौसत्येवार्थकथनाख्यफलांगोकारात् । तस्यचत्रिक्षणावस्थायित्वात्दोषोयंसमानइतिद्रष्टव्यं । सा विरम्यव्यापृतिः ॥ ८ ॥ कस्तर्हिवस्तुतोनंतत्ववादिनोमतेयुक्तार्थइत्य

तःप्रसंगात्तमप्याह ॥ देशकालेति ॥ देशेकालेचवर्तनंयथा तथेतिसंबंधः । वस्तुषुसकलवस्तुषु । परंकेवलं । देशकालांतशून्य त्वंयथासकलदेशकालवर्तित्वं तथावस्तुतोंतशून्यत्वमपिसकलवस्तुषुवर्तनमेवस्यात् । परिच्छेदशून्यत्वस्यत्रिषुस्थानेष्वपिएकैवि ध्येनभाव्यत्वादितिभावः । यद्यस्मात् । एकपङ्क्तौभोक्तृणां लोकेद्विधाप्रकारद्वयेन परिवेषणमन्नशाकादिदानं न उचितं न निषिद्ध मितियावत् । तस्मात्तद्वत्स्थलद्वयेंऽतशब्देनयोर्थःकथितस्सएवापरत्रापिकथनीयः । अन्यथाप्रायपाठविरोधादितिभावः ॥ ९ ॥ संभावितमर्थांतरंचाह ॥ बहुवास्त्विति ॥ बहुवस्त्वाश्रयत्वं अपरिच्छिन्नवस्त्वाधारत्वंवा भवेत् अनंतशब्दस्यार्थोभवेत्

बहुवस्त्वाश्रयत्वंवाभवेल्लोकनिदर्शनात् ॥ रत्नतोनंतइत्याहुर्यतोर
त्नाकरंजनाः ॥ तथागुणानंतताचस्याद्गुणैःपूर्णताहरेः ॥ १० ॥

लोकनिदर्शनात् लौकिकदृष्टांतात् । तदेवदर्शयति ॥ रत्नतइति ॥ यतःयस्मा ज्जनाः रत्नाकरं सकलरत्नाधारंसमुद्रं रत्नतो नंतइत्याहुः । यथारत्नतोनंतइत्युक्तेसकलरत्नाधारइत्यर्थोभवति तथावस्तुतोनंतइत्युक्तेसकलवस्त्वाधारइत्यप्यर्थोभवति । परि च्छेदशून्यत्वंहिशब्दलभ्योर्थः । वस्तुतइतिचयोग्यतयागृह्यते । तच्चसकलवस्तुषुब्रह्मणः परिच्छेदाभावेवा सकलवस्तूनांब्रह्मणि परिच्छेदाभावेवास्यादेव । वस्तुपरिच्छेदाभावस्योभयथापिसंभवात् । सकलवस्तुभेदशून्यत्वंतु नशब्दस्यप्रागुक्तार्थद्वयमर्या दया । नलोकमर्यादयापीतिभावः । प्रासंगिकार्थकथनस्यप्रकृतोपयोगमाह ॥ तथेति ॥ तथा रत्नाकरस्यरत्नतोनंतत्ववत् ।

हरेर्गुणानंतताच । गुणै स्सकलशुभगुणैःपूर्णता सकलशुभगुणाधारतेतियावत् । अनेनदेशकालयोरधिकरणयोर्ब्रह्मणआश्रितत्वा द्गुणेष्वपिब्रह्मणआश्रितत्वमेवसिद्ध्येत् । गुणानांब्रह्मण्याश्रितत्वंतुकथंसिद्ध्येदितिचोद्यमपिपरिहृतं । नापिप्रायपाठविरोधः । शब्द पठितस्यपरिच्छेदस्यस्थलत्रयेप्यपरित्यागात् । योग्यतयागृहीतस्यवैचित्र्येपितस्यसाक्षाच्छब्दतोऽपरिपाठेनप्रायपाठविरोधस्या नवकाशादित्येकंसमाधानं ॥ १० ॥ ग्रंथकारस्त्वेतावदपिवैषम्यमसहमानस्सर्वत्राप्येकप्रकारतामेवविशदयति ॥ अंतइति ॥ अंतोनेत्येव अंतोनयस्येत्येवशब्दार्थः । अनंतशब्दपदमर्यादयालभ्योर्थः । सतु शब्दार्थस्तु योग्यः येनयेनांतशून्यत्वंयुज्यतेस

अंतोनेत्येवशब्दार्थस्सतुयोग्योविमृ(ग्य)श्यते॥ देशतःकालतश्चांतो नाम देशाचकालतः ॥ ११ ॥
परिच्छेदस्सचेयत्तासाचक्वचिदसंगतिः ॥ क्वचिच्चसंगतिस्ताभ्यांशून्यतासर्वसंगमः ॥ १२ ॥

सर्वोपीत्यर्थः । विमृश्यते विचारमर्यादयाऽऽनीयते । नतुशब्दशक्त्यैवलभ्यते । विचारलभ्योर्थस्तु विचारेक्रियमाणे यस्यपदा र्थस्याधारत्वंसतथैवाऽऽनीयते । यस्यचब्रह्मण्याधेयत्वं सतुतथैवानीयतइतिभावः । तत्रदेशकालयोःकथंयोग्यतेत्यतस्तांदर्श यति ॥ देशतइति ॥ सचपरिच्छेदश्चेयत्ता । साचक्वचिदसंगतिः क्वचिच्चसंगतिरितियोजना । कयोश्चिद्देशकालयोरसंबंधः कयोश्चिद्देशकालयोस्संबंधश्चदेशकालपरिच्छेदोनामेत्यर्थः । ताभ्यां क्वाचित्कदेशकालसंबंधक्वाचित्कतदसंबंधाभ्यां शून्यता रहितता तयोरभावइतियावत् । अयमेवशाब्दःसर्वसंगमः सकलदेशकालसंबंधः । अयमार्थः देशेकालेचक्वाचित्कसंबंधक्वाचि

त्कासंबंधयोरभावोनाम सकलदेशकालसंबंधएवेत्यर्थतोलब्धः ॥ ११ ॥ १२ ॥ तत्तस्मात् । अनंतता देशकालानंतता । सकल देशकालसंबंधएवदेशकालानंततायथेत्यर्थः । तथाविभोर्नारायणस्यगुणानंत्यं गुणतोनंतत्वंच समस्तगुणसंबंधएव । यथादेशतोनंत इत्युक्तेसमस्तदेशसंबंधआयाति तथागुणतोनंतइत्युक्तेपिसर्वगुणसंबंधएवायाति । एतावत्यर्थेनकुत्रापिवैचित्र्यमितिभावः ॥१३॥ अतस्सर्वत्रापिसाम्यात् । पङ्क्तिपावनपङ्क्तिषु । पङ्क्तिपावनानामाचार्याणांपङ्क्तिषु । पङ्क्तिभेदः पङ्क्तौपरिवेष्यमाणान्नभेदइत्यर्थः । यथा स्तिकशिरोमणेराचार्यस्यपङ्क्तिषुपङ्क्तिभेदोनास्तितथाऽऽचार्यैरुच्यमानशब्दार्थेष्वपिप्रायपाठविरोधोनास्तीतिध्वनितोप्यर्थऊह्यः ।

तत्सर्वदेशकालेषुसंबंधोनंततायथा ॥ समस्तगुणसंबंधोगुणानंत्यंतथाविभोः ॥ १३ ॥
अतोनपङ्क्तिभेदोस्तिपाङ्क्तिपावनपाङ्क्तिषु ॥ अंतस्यतन्निषेधस्यसर्वत्रैकाविधत्वतः ॥ १४ ॥
संबंधश्चयथायोगंसंयोगोद्रव्ययोस्तयोः ॥ गुणानांगुणिनश्चैवंगुणगुण्यात्मतापरं ॥ १५ ॥

तत्रहेतुमाह ॥ अंतस्येति ॥ एकविधत्वतः परिच्छेदरूपत्वेनैकविध्यात् ॥ १४ ॥ संबंधश्च देशकालगुणानांसंबंधः । यथायोगं योग्यतामनतिक्रम्य । यत्रयत्रयोयोयोग्योभवतिसएवग्राह्यइत्यर्थः । तदेवदर्शयति ॥ संयोगइति ॥ आधाराधेयभावइतिया वत् । तयोर्देशकालयोः । परंकेवलंगुणगुण्यात्मता गुणगुणिभावाख्यस्संबंधः । आधाराधेयभावइतियावत् । एवंचदेशकाला दिभिस्त्रिभिरपिहरेराधाराधेयभावएवार्थोपिसंबंधः । सचक्वचिदाधारत्वपूर्वकःक्वचिदाधेयत्वपूर्वइतिननाम्नापिविशेषः । इयत्तारू

पपरिच्छेदाभावस्सर्वत्रानंततेतिनकुचोद्यानवकाशः ॥ १५ ॥ आर्थेचार्थेईषद्वैषम्यमात्रान्नप्रायपाठविरोधइत्यत्रदृष्टांतमाह ॥ शिशोरिति ॥ यथायोग्यं शिशोरत्यल्पंवृद्धस्याल्पंयूनश्चबहुलंचेत्यर्थः । तर्हिकदापङ्क्तिभेदइत्यतआह ॥ भिन्नभिन्नान्नेति ॥ एकत्रसदन्नमपरत्रकदन्नंचदीयतेचेत्तदापङ्क्तिभेदः ॥ १६ ॥ एकस्यैवान्नस्यतत्तद्भोक्त्रनुसारेणदाने नपङ्क्तिभेदः । एवंशब्दार्थ भूतसंबंधस्ययत्रयत्रयथायोवक्तुंशक्यते तथातथाग्रहणेनप्रायपाठविरोधोपीतिभावः । अतः पूर्वोक्तपरिच्छेद भेदाख्यार्थद्वयरूप ग्रहणदूषणात् । वस्तुपरत्वोक्ति श्श्रुतेर्वस्तुतःपरिच्छेदराहित्यपरत्वोक्तिरित्यर्थः । वस्तुतत्वाज्ञतावशात् वस्तुनोयथार्थज्ञानाभा

शिशोर्वृद्धस्ययूनश्चयथायोग्यंहिभोजनं ॥ भिन्नभिन्नान्नदानेहिपङ्क्तिभेदंविदुर्बुधाः ॥ १६ ॥ एकान्नस्ययथायोगं दानेकोनेतिशंसति ॥ अतोवस्तुपरत्वोक्तिर्वस्तुतत्वाज्ञतावशात् ॥ १७ ॥ किंचांतशून्यतैवात्रशक्योर्थोयोग्य तावशात् ॥ आनेयमन्यद्योग्यंचनैतदुक्तप्रकारतः ॥ १८ ॥ महत्त्वस्यविरोधित्वादपिनैतदिहोचितं ॥ १९ ॥

वादित्यर्थः । वस्तुतःपरिच्छेदराहित्यं सकलवस्त्वात्मकत्वमितियावत् । परेणोक्तंयत्तस्वाज्ञानविजृंभितमितिभावः । अथवा या ऽनंतश्रुतौवस्तुपरत्वोक्ति र्वस्तुनस्सकलवस्तुनःपरत्वोक्तिः परब्रह्मत्वोक्तिःपरेषां सा वस्तुतत्वाज्ञतावशादितियोजना ॥ १७ ॥ दूषणांतरंचाह ॥ किंचेति ॥ अत्रानंतशब्दे शक्यस्साक्षाच्छब्दवाच्यः । अन्यद्देशकालादिकं । एतत् वस्तु । उक्तप्रकारतः । सर्वात्मकत्वस्यस्वमतादिविरुद्धत्वात्योग्यंनेतिसंबंधः ॥ १८ ॥ प्रकारांतरेणाप्ययोग्यतामाह ॥ महत्त्वस्येति ॥ एतत्सर्वात्मक



त्वं । सर्वात्मकत्वेब्रह्मणोमहत्त्वासंभवः । सचब्रह्मविदाप्नोतिपरमितिपूर्ववाक्योक्तपरशब्देनविरुद्धः । अतोपिनोचितमितिसंबंधः ॥ १९ ॥ प्रकारांतरेणापिप्रायपाठविरोधंपरिहरति ॥ आधारेति ॥ यद्यस्मात् । अखिलवस्तुनःआधारभूतावितिसंबंधः । अत्रे दमिदानींवर्ततइतिसर्वत्रव्यवहाराद्देशकालौसर्वस्याप्याधारावितिभावः । ताभ्यांदेशकालाभ्यां । नोस्माकंप्रभोर्नारायणस्येत्यर्थः । अस्मिन्नर्थे । आधारभूतेदेशेकालेचहरेरवध्यभावः सकलदेशकालेषुआहितत्वमेवयोग्यतावशादानीयते । नतुतदर्थंपृथक्प्रयतनी

आधारभूतौयद्देशकालावखिलवस्तुनः ॥ ताभ्यामवध्यभावस्तुतौद्वौसर्वौचनःप्रभोः ॥
आधारभूतावित्यर्थेफल त्याधाररूपिणः ॥ २० ॥ गुणाश्चाधेयरूपास्तैरवध्युज्झिति
हरेः ॥ सर्वस्यगुणराशेश्चस्वस्मिन्नाहिततांनयेत् ॥ २१ ॥ यद्धर्मीस्वयमाधारोधर्मास्त्वा
धेयरूपिणः ॥ अतोंतशब्दस्त्रिस्थान्यामप्यवध्यर्थकोभवेत् ॥ २२ ॥

यमितिभावः । आधाररूपिणोहरेर्गुणास्त्वाधेयरूपाः । तैर्गुणैरवध्युज्झितिःअवधेरभावः । स्वस्मिन्हरौ । आहिततांआश्रितत्वं ॥ २० ॥ २१ ॥ तत्रहेतुमाह ॥ यदिति ॥ यद्यस्मा द्धर्मीस्वयंधर्मिभूतपदार्थोघटादिः । धर्मा स्तद्धर्मभूतारूपरसाद्याः । तस्मा द्धरिरपिस्वधर्माणामाधारः । तद्धर्मास्तुसार्वज्ञपूर्वाआधेयाइतितैरवध्युज्झिति स्सर्वस्यगुणराशेश्चस्वस्मिन्योग्यतावशादेवाहिततां नयेत् । नतुतदर्थंपृथक्प्रयतनीयमितिभावः । अस्त्वेवंततःकिमित्यतआह ॥ अतइति ॥ त्रिस्थान्यां देशकालगुणाख्यस्थान

त्रये ॥ २२ ॥ तत स्सर्वत्राप्येकार्थत्वा दर्थभेद स्सकृत्प्रयुक्तशब्दस्यनानार्थत्वं । किंत्वेकत्रसाक्षाच्छ्रुतांतशब्दस्यैवभेदार्थकत्वंव दतःपरस्यैवेतिसूचयितुमस्मन्मतइत्युक्तं । एतादृशदोषंपरमतेदृष्ट्वासुजनास्तत्परित्यज्यास्मन्मतमेवसंगृह्णंतीतिभावेनोक्तंसुजनस म्मतइति । वस्तुस्वभावानुगुण्यात् तत्तद्वस्तुस्वभावानुसारात् । फलं देशकालयोर्भगवतआहितत्वं स्वगुणान्प्रतित्वाधारत्वमिति फलं । तत्रदृष्टांतः ॥ स्वात्यंबुकार्यवदिति ॥ यथैकमेवस्वात्यंबु शुक्तौपतितंमणिर्भवति पद्मपत्रेपतितंमणिवद्बिंदूभवति । तप्ता यःपिंडपतितंनष्टंभवति । तथाशब्दस्यैकत्वेपितत्तत्पदार्थस्वभावादेवात्रापिवैचित्र्यमितिभावः ॥ २३ ॥ परकीयार्थेदोषांतरंचाह ।

नार्थभेदस्ततोस्माकंमतेसुजनसंमते ॥ वस्तुस्वभावानुगुण्यात्फलंस्वात्यंबुकार्यवत् ॥ २३ ॥
महद्गुणत्वाद्यमनंतमाहुरितिचस्फुटं ॥ यतोभागवतेप्रोक्तंततोप्येतदसंगतं ॥ २४ ॥

॥ महद्गुणत्वादिति ॥ यतःयस्मात् । ततोपि भागवतेभगवतोगुणैरंतरहितत्वेनानंतपदवाच्यत्वोक्तेरपि । एतत् वस्तुतोनंतत्वं । अयमाशयः । अंतत्रयशून्यत्वंअनंतत्वमित्यावयोरुभयोरपिसंमतं । देशकालयोश्च कालानंत्यंदेशानंत्यमितिद्विप्रकारतापिसंप्रति पन्नैव । तृतीयप्रकारश्चोक्तभागवतवाक्यानुसारेणगुणानंत्यमेववक्तुमुचितं । नतुस्वकपोलकल्पितंवस्तुतोनंतत्वमिति । महच्छ ब्दस्यांतेआकारेणविकाराभावस्तदर्थस्यमहत्त्वस्याप्यंतेसावधिकत्वरूपविकाराभावज्ञापनार्थं अगुणेतिपदच्छेदभ्रमनिवारणार्थंच । एतेनैतदपिपरास्तं । परोक्तवस्तुतोनंतत्वस्यविरुद्धत्वेपि गुणतोनंतत्ववत्सकलवस्त्वाधारतयाभगवतिवस्तुतोनंतत्वमेवकुतोनो

क्तमिति । भागवतोक्तस्यगुणानंत्यस्यावश्यंसंग्राह्यत्वात् । उक्तविधयास्यचसंग्रहेप्रकारचतुष्टयत्वापातेनसर्वसंमतत्रित्वभंगप्रसं
गात् ॥ २४ ॥ सर्वस्रष्टृत्वसर्वाधारत्वापरपर्यायसर्वपालकत्वसर्वसंहर्तृत्वाख्यार्थत्रयप्रतिपादकसत्यशब्देनगतार्थत्वापाताच्च । तर्हि
भागवतेभगवताव्यासेनकिमर्थमेकमेवोदितमित्यतआह ॥ अर्थेति ॥ यतःअर्थद्वये । देशतोऽनंतत्वकालतोनंतत्वाख्यार्थद्वये ।
तृतीयेअर्थे अनंतपदार्थे । संशयः गुणानंत्यंवावस्तुतआनंत्यंवेतिसंदेहः । अतः वादिविवादसद्भावात् । तं गुणानंत्यरूपार्थं ।
निर्णयाय स्वचरणकमलचंचरीकमध्वमुनिनोक्तार्थनिर्णयाय । वस्तुतस्तु व्याप्तत्वनित्यत्वयोरपिगुणत्वात्गुणानंत्यमेवानंतश

अर्थद्वये नसंदेहस्तृतीयेर्थेहिसंशयः ॥ अतोविशिष्यतंव्यासोनिर्णयायान्ववर्णयत् ॥ २५ ॥
सद्भावंयापयेद्यस्मात्सत्यस्तस्मात्किलप्रभुः ॥ भावप्रधानोनिर्देशोस्त्यंतर्णीतोयतश्चणिच् ॥ २६ ॥

ब्दार्थइतिगुरुशिष्ययोर्व्यासमध्वयोर्हृद्गमितिज्ञेयं ॥ २५ ॥ अधुनासत्यंज्ञानमनंतंब्रह्मेतिमंत्रवर्णोक्तलक्षणत्रयव्याख्यानरूपोत्तर
ग्रंथार्थपर्यालोचनयाप्यस्मदुक्तगुणानंत्यमेवानंतशब्दार्थो नपरोक्तइतिवक्तुं लक्षणानिविवृण्वन्नुत्तरप्रबंधार्थेनसंगमयति ॥ सद्भा
वमित्यादिना ॥ सतोभावस्सद्भावः । सत्त्वं । सृष्टिरित्यर्थः । यापये त्सर्वस्यजगतःप्रापयेत् । तस्मा ज्जगत्सृष्टिप्रापकत्वात् ।
सत्य स्सत्यशब्दवाच्यः । ननुकथमनेनपदेनायमर्थोलभ्यतइत्यतश्शब्दमर्यादयैवतंदर्शयति ॥ भावेति ॥ यतःयस्मात् । वैया
करणमतेभावप्रधानोनिर्देशोप्यस्ति । भवितृवाचितयाप्रयुक्तोपियश्शब्दःतन्निष्ठंभावंप्रधानीकृत्यवर्तते सभावप्रधानः । यथाक्ष्वेक

योर्द्विवचनैकवचनइतिसूत्रे ह्येकशब्दौद्वित्वैकत्वार्थौ । यतश्चांतर्णीतोणिच्चप्रयोगेषुवर्तते । साक्षात्कर्तृवाचिनापदेनकारयितुर्ग्र हर्णेऽतर्णीतोणिजित्युच्यते । यथा मामयंप्रचलिष्यतीत्यादौ । अत्रचलिष्यतीत्यस्यचलयिष्यतीत्यर्थस्यसर्वैरंगीकारात् । ततस्स द्भावंयापयेद्यस्मादितिपूर्वेणान्वयः ॥ २६ ॥ नन्वेवमपिसत्त्वंविद्यमानत्वमेवस्यात् । सृष्टिःकथमित्यतस्तदागमनप्रकारंविवेचयि तुमर्थांतरमपिप्रतिजानीते ॥ सत्त्वमिति ॥ विदांज्ञानिनां । प्रकारमेवदर्शयति ॥ कार्यात्मनेति ॥ कारणस्यमृदादेः कार्या

सत्त्वं सृष्टिस्संहृतिश्चजीवनंचविदांमते ॥ कार्यात्मनाविशरणंकारणस्यंजनिर्मता ॥ २७ ॥
सद्लृधातोर्विशरणंचार्थइत्यपिसंमतं ॥ यतःप्रागसतस्सत्त्वमुत्पत्तिरितिचोच्यते ॥२८॥ अव
सादनमप्युक्तंतद्धात्वर्थतयायतः ॥ ततस्सत्त्वंसंहृतिश्चभवेच्छब्दविदांमते ॥ २९ ॥ विद्य
मानत्वमप्याहुस्सत्त्वं जीवनमेवतत् ॥ इदंचाद्यैःप्रकरणैस्त्रिभिर्विव्रियतेकिल ॥ ३० ॥

त्मनाघटाद्यात्मनायद्विशरणंपृथुबुध्नोदरीभावादिः । सैवजनिर्मतेतिसंबंधः । सद्लृधातो स्सद्लृितिधातोः । सद्लृविशरणगत्यवसादने ष्वितिधातुव्याख्यानादितिभावः । प्रकारांतरेणापिसत्त्वशब्दस्यसृष्टिवाचकतांदर्शयति ॥ यतइति ॥ उच्यते तार्किकैः । प्राग सतइतिविशेषणयोजनेपि सत्तासंबंधस्यैवजनित्वकथनात्सत्त्वमेवजनिरितिभावः ॥ २७ ॥ २८ ॥ तद्धात्वर्थतया सद्लृधात्वर्थत या । ततः अवसादनापरपर्यायसंहारस्यापिधात्वर्थत्वात् ॥ २९ ॥ यतश्चविद्यमानत्वमपिसत्त्वं तत्विद्यमानत्वंचजीवनमाहुरिति



योजना । अतस्स्थितिरपिसत्त्वशब्देनोच्यतइत्यध्याहृत्ययोजनीयं । सृष्टिस्थितिसंहाराइतित्रितयमपिसत्त्वं । तदेतत्त्रितयंचजगतः यापयतीतिसत्यशब्दोदितोभगवानितिसमुदायार्थः । ततःकिंप्रकृतइत्यतआह ॥ इदंचेति ॥ त्रिभिः । तस्माद्वाएतस्मादात्मन आकाशःसंभूतइइतिसृष्टिप्रकरणेन । सवाएषपुरुषोन्नरसमयइत्यन्नमयप्रकरणेन । तस्माद्वाएतस्मादन्नरसमयात् । अन्योंतरआ त्माप्राणमयइतिप्राणमयप्रकरणेनचेत्यर्थः । आद्यैर्ब्रह्मवल्लीप्रथमभागस्थैः ॥ ३० ॥ विवरणप्रकारमेवदर्शयति ॥ यतइति ॥ परात्परमात्मनः । भूतजनिं पंचमहाभूतजनिं । तेनसृष्टिस्सत्यमितिलक्षणवाक्येप्रागुक्तासृष्टिः ॥ ३१ ॥ ननुकिमर्थमिदंविकरण

यतआत्मनआकाशइतिभ्रूतजनिंपरात् ॥ आहसृष्टिर्महासृष्टिस्तेननाल्पेतिशंसति ॥ ३१ ॥
ब्रह्मणोलक्षणंनोचेत्कुंभकारेपिगच्छति ॥ अबाध्यत्वमपीतोन तत्सृष्टिकथयापिन ॥ ३२ ॥

मित्यतआह ॥ ब्रह्मणइति ॥ नोचेत् प्रागुक्तसृष्टेर्महासृष्टित्वेनविवरणंनक्रियतेचेत् । लक्षणंसत्यत्वाख्यलक्षणं । सत्यपदेनोक्तसृ ष्टिकर्तृत्वाख्यलक्षणस्यैवंविवरणाकरणेकुंभकारेपितल्लक्षणमतिव्याप्तंस्यात्तेनेदंविवरणमितिभावः । उपलक्षणंचैतत् । अद्यतेऽत्ति चभूतानितस्मादन्नंतदुच्यतइतिसंहारस्यापिभूतसंहाररूपत्वे नमहासंहारत्वं पालनस्यापि प्राणंदेवाअनुप्राणंतीत्यादिनादेवादिपा लनरूपत्वेनमहापालनत्वंचविवृत्तं । तेन भेकसंहर्तरिसर्पेस्वकुटुंबरक्षकेगृहिणिचातिव्याप्तिःपरिहृतेतिद्रष्टव्यं । अस्यसर्वस्यापिप र्यालोचनयाप्रागस्माभिर्जगतइतिविशेषणंदत्तमितिमंतव्यं । स्वाभिमतलक्षणस्यातिव्याप्त्यभावमुत्तरग्रंथसंगतिंततएवासंभवासं

भवंचदर्शयित्वा पराभिमताबाध्यत्वाख्यलक्षणस्यातिव्याप्तिमुत्तरग्रंथासंगतिंचदर्शयति ॥ अबाध्यत्वमिति ॥ इतोपि कुंभ कारेऽतिव्याप्तेरपि । तत्सृष्टिकथया तस्यब्रह्मणःसृष्टिकथयासृष्टिकर्तृत्वकथया । अबाध्यत्वंसत्यत्वंचेदुत्तरत्रब्रह्मणस्सृष्टिकर्तृत्वक थनंप्रकृतानुपयुक्तत्वेनासंगतंस्यादितिभावः ॥ ३२ ॥ प्रागुक्तातिव्याप्तिंप्रमाणेनदृढीकुर्वन्प्रपंचमात्रेऽतिव्याप्तिमाह ॥वागिति॥ विश्वंसत्यमित्याद्यावागितिसंबंधः । यद्यस्मात् जगदबाध्यंजगाविति संबंधः । प्रपंचस्यसर्वस्याप्यबाध्यत्वेपिकुतोब्रह्मलक्षणमलक्षण मित्यतआह ॥ यतइति ॥ अन्यत्र लक्ष्यादन्यत्र । ब्रह्मसूत्रतत्सूचितश्रुतिभ्यांविरुद्धत्वाच्चनेदंलक्षणमित्याह ॥ सूत्रइति ॥

वाग्विश्वंसत्यमित्याद्यायदबाध्यंजगज्जगौ ॥ ततोपिन यतोन्यत्रगतंप्राहुरलक्षणं ॥ सूत्रेज न्मादिहेतुत्वलक्षणोक्तेश्चनेतरत् ॥३३॥ अतश्श्रुतिमतंवेत्तिप्राणोसौभारतीपतिः॥ अन्यस्ता मन्यथीकुर्वंच्छून्येतमसिपात्यते ॥ ३४ ॥ अतस्स्वेतरसर्वस्यस्रष्टृतासत्यताभवेत् ॥ ३५ ॥ पुनरन्नमयत्वोक्त्यामहासंहर्तृतोच्यते ॥ अद्यतेत्तिचभूतानीत्युक्तेस्संहर्तृतान्नता ॥ ३६ ॥

सूत्रइत्युपलक्षणं । यतोवाइमानिभूतानिजायंतइतिसूत्रसूचितश्रुतौचेत्यपिग्राह्यं । इतरत् अबाध्यत्वलक्षणं ॥३३॥ अतः परोदीरि तार्थस्यश्रुतिसूत्रादिविरुद्धत्वात् आचार्योक्तार्थस्यश्रुतिसूचितत्वाच्च । असौ सद्भावंयापयेद्यस्मात्सत्यस्तस्माज्जनार्दनइत्यादिना एतच्छ्रुत्यर्थंवर्णयन् । अन्यःमायावादी । तांश्रुतिं । अन्यथीकुर्वन्असंगतार्थेयोजयन् ॥ ३४ ॥ अतः पूर्वोक्तप्रकारात् । स्वेत रसर्वस्य स्वव्यतिरिक्तस्यसर्वस्यजगतइत्यर्थः ॥ ३५ ॥ सत्यशब्दस्यार्थांतरंचश्रुतिराहेत्याह ॥ पुनरिति ॥ महासंहर्तृता स्वेत

रसकलजगत्संहर्तृता । तत्कथमित्यतआह ॥ अद्यतइति ॥ संहर्तृता अत्तृत्वापरपर्यायाऽत्तीतिश्रुत्युक्ता अन्नता अन्नशब्दप्रवृत्तिनिमित्तमित्यर्थः ॥ ३६ ॥ तस्यमहत्त्वप्राप्तिप्रकारमाह ॥ प्राचुर्यार्थइति ॥ सूत्रकृता विकारशब्दान्नेतिचेन्नप्राचुर्यादित्यानंदमयेमयट्शब्दार्थवदता । नन्वानंदमयशब्दस्थमयट्प्रत्ययस्यप्राचुर्यार्थत्वेप्यन्नमयेतदर्थत्वंकुतइत्यतआह ॥ सूचनादिति ॥ अत स्सूत्रस्यसूचकत्वात्तंमयट्प्रत्ययार्थं पंचस्वन्नमयादिपंचके । अतःअन्नमयस्थमयट्शब्दोपिप्राचुर्यार्थएव अन्यथाप्रायपाठविरोधादितिसूत्रकृतोहृदयं । उपलक्षणंचैतत् । अद्यतेत्तिचभूतानीतिश्रुतावेवभूतात्तृत्वकथनेनमहासंहर्तृत्वलाभाच्चेत्यपिद्रष्टव्यं

प्राचुर्यार्थोमयट्प्रोक्तस्स्वयंसूत्रकृतैवहि ॥ सूचनात्खलुतत्सूत्रमतःपंचसुतंनयेत् ॥३७॥
इतिलक्षणसूत्रोक्तंतृतीयंलक्षणंश्रुतिः ॥ प्राहान्नमयतावाचानिंद्यदेहस्तुतिर्नसा ॥३८॥

॥ ३७ ॥ लक्षणसूत्रे जन्माद्यस्ययतइतिसूत्रे । उक्तंतृतीयं जगत्संहर्तृत्वाख्यं । इत्युक्तप्रकारेणान्नमयतावाचाप्राहेतिसंबंधः । ननुदेहस्यैवप्रस्तावोत्रकुतोनेत्यतआह ॥ निंद्येति ॥ सा । सवाएषपुरुषोन्नरसमयइत्यादिना अन्नाद्वैप्रजाःप्रजायंते । याःकाश्चपृथिवींश्रिताः । अथोअन्नेनैवजीवंति । अथैनदपियंत्यंतइतितत्रैवोक्तश्लोकेनचक्रियमाणस्तुतिः निंद्यदेहस्तुतिर्नहीतियोजना । निंद्येत्यनेन त्वक्श्मश्रुलोमनखकेशपिनद्धमंतर्मांसास्थिरक्त(कृ)क्रिमिविड्भरितात्रवीतं । जीवच्छवंभजतिकाममतिर्विमूढायातेपदाब्जमकरंदमजिघ्रतीस्त्री । इत्यादिभागवतवचनंस्मारयति । नहिसकलप्रजास्रष्टृत्वमंतेदेहपातानंतरंसकलप्रजाप्राप्यत्वंच एषपुरु

षइत्युक्तदृश्यमानदेहस्योक्तविधयानिंदार्हस्यसंभवतीतिभावः ॥ ३८ ॥ ननुद्वितीयव्यापारंपालनंविहायकुतस्तृतीयस्यसंहारस्य मध्येग्रहणमित्यतआह ॥ रौद्रेति ॥ अस्यसंहारस्य रौद्रव्यापारताशंकाछेदाय रुद्रेणक्रियमाणव्यापारत्वशंकापनोदाय । उपलक्षणंचैतत् । परमतनिराकरणएवबहुसाहसवतीश्रुतिश्चतुर्मुखव्यापारत्वेनप्रसिद्धसृष्टिं रुद्रव्यापारत्वेनप्रसिद्धसंहारंच क्रमेणविष्णौप्रसाध्य विष्णुव्यापारत्वेनप्रसिद्धपालनमंतेनिबबंधेत्यपिद्रष्टव्यं । आदितःपालनादप्यादौ । कथाकथनं ॥ ३९ ॥ अधुनासकलजगत्पालकत्वंचसत्यशब्दार्थइतिवक्तुमारभते ॥ प्राणनमिति ॥ सत्त्वंजीवनमितिप्रागुपपादितं । जीवनंप्राणनमितिच जीव

रौद्रव्यापारताशंकाछेदायास्यादितःकथा ॥ ३९ ॥ प्राणनंजीवनंप्रोक्तप्राचुर्यार्थे
यतोमयट् ॥ अतःप्राणमयत्वोक्त्यामहापालकतोच्यते ॥ ४० ॥ सर्वसामान्यवे
त्तृत्वंज्ञानत्वमितिचश्रुतिः ॥ मनोमयगिराप्राहयतोधातुस्सबोधने ॥ ४१ ॥

प्राणधारणइतिवचनेनजीवधातोःप्राणधारकत्वार्थकथनात्पर्यायः । प्रकृष्टमननं चेष्टा यस्मादितिचव्युत्पत्त्याप्राणोजीवनहेतुः । सत्त्वंजीवनंयापयतीचसएवोच्यते । अतःप्राणसत्यशब्दयोरैकार्थ्यमितिभावः । यतःयस्मात् । अतः पूर्वोक्तनिमित्तात् ॥ ४० ॥ अधुनाज्ञानपदेनस्वोक्तलक्षणंविवृण्वंतीश्रुतिर्मनोमयविज्ञानमयप्रकरणेप्रास्तावयदित्याह ॥ सर्वेति ॥ सः मनु इतिधातुर्बोधने अवबोधनेवर्तते । मनुअवबोधनइतिधातोरित्यर्थः । विज्ञानमयप्रकरणेज्ञानस्यवीत्युपसर्गेणविशेषणात् अत्रचतदभावात् प्रत्यु



तावेत्युपसर्गेणनिकृष्टत्वकथनात् प्राचुर्यार्थकमयट्प्रयोगाच्च सर्वसामान्यवेत्तृत्वंज्ञानत्वमितिज्ञानपदेनोक्तंलक्षणमिति मनोमयगिरा तस्माद्वाएतस्मात्प्राणमयादन्योंतरआत्मामनोमयइतिमनोमयशब्देनप्राहेतियोजना ॥ ४१ ॥ ननुसामान्यवेत्तृत्वंअस्मदादिसाधारणत्वात्कथंलक्षणमित्यतस्तदपिभगवत्यसाधारणंकर्तुमाह ॥ यतइति ॥ यतश्चित्रेषुवस्तुषु ब्रह्मांडबहिरंतर्गतानंतपदार्थेषु । अनंतान्यसंख्यानि । तत्तस्मात् । तद्वेत्ता अनंतघटपटत्वादिसामान्यवेत्ता विचित्रानंतपदार्थेषुविद्यमानान्यनंतसामान्यानितद्वैचित्र्यप्रकारांश्चयथाऽतिस्पष्टंभगवान्वेद नतथापरइतिहेतोः इदमपिलक्षणमसाधारणमेवेतिभावः । अतएव ज्ञानविज्ञान

यतोघटपटत्वादिसामान्यान्यपिवस्तुषु ॥ संतिचित्रेष्वनंतानितत्तद्वेत्तापिसर्ववित्
॥ ४२ ॥ विशिष्यसर्ववेत्तृत्वंज्ञानत्वमितिसापुनः ॥ विज्ञानमयतोक्त्यावीत्यु
पसर्गयुताऽब्रवीत् ॥ ४३ ॥ प्रागुक्तज्ञानतामात्रंसर्वज्ञत्वेनयत्ततः ॥ नचेद्धटादिवृत्ते
श्चज्ञानत्वात्स्यादलक्षणं ॥ ४४ ॥ सृष्ट्युक्त्याप्राप्तसार्वज्ञलक्षणस्येदमीरणं ॥ ४५ ॥

योश्चैवेत्यत्र ज्ञानपदेनोक्तसामान्यज्ञानस्यापिसमग्रस्य षण्णांभगइतीरणेतिभगशब्देनोत्कीर्तनं ॥ ४२ ॥ साश्रुतिः पुनर्मनोमयप्रस्तावानंतरं वीत्युपसर्गयुतासेतिपूर्वेणान्वयः । शेषंपूर्ववत् ॥ ४३ ॥ ततः एवंस्वयमेवव्याख्यानात् । प्रागुक्तज्ञानतामात्रं ज्ञानमित्यत्रोक्तज्ञानत्वमात्रमित्यर्थः । सर्वज्ञत्वेऽनयत्नीतवती । पूर्वोक्तज्ञानत्वमेवसर्वज्ञत्वंयथाभवतितथाकरोदितिभावः । एवंव्याख्यानाकरणेकोदोषइत्यतआह ॥ नचेदिति ॥ ४४ ॥ ननुसूत्रोक्तजन्मादिहेतुत्वाख्यलक्षणेषुअस्याभावात्कुतश्श्रुतिरिदंलक्षण

मुदाजहारेत्यतआह ॥ सृष्टीति ॥ सृष्टयुक्त्या सकलजगत्सृष्टयुक्त्या । सकलजगत्स्रष्टृत्वादिनाऽर्थात्प्राप्तंयद्भगवतस्सार्वज्ञ्यंतदेवल
क्षणंतस्येरणंकथनं । सर्वज्ञत्वात्तस्यैवजगत्स्रष्टृत्वादिकंनान्यस्येतिस्वोक्तलक्षणस्थिरीकरणायप्रकरणद्वयेनसार्वज्ञ्यंवर्णितवतीति
भावः ॥ ४५ ॥ आनंदमयप्रकरणेनमंत्रवर्णातोक्तानंतत्वाख्यलक्षणंप्रपंचयतीत्याह ॥ आनंदमयेत्यादिना ॥ अंते मंत्रवर्ण
व्याख्यानांते । साश्रुतिः । तत्तस्मा दानंदमयप्रकरणेनप्रपंचनात् । आनंत्यं प्रागुक्तानंतत्वं । त त्प्रागुक्तं आनंत्यमितिवा । आ
नंदादिगुणैर्नकिं भवत्येव । अंतेप्रोक्तानंतत्वलक्षणस्यांतिमेनानंदमयप्रकरणेनप्रपंचनात् आनंदादिगुणपूर्णत्वमेवानंतत्वंनपरोदीरि

आनंदमयवाचांतेस्वोक्तानंतत्वमेवसा ॥ जगौकिलतदानंत्यमानंदादिगुणैर्नकिं ॥ ४६ ॥ य(द्या)
दानंदोभवेन्नासौकथंसृज्यंसृजेदिति ॥ श्रुत्युक्तंसाजगौसृष्ट्यैपूर्णानंदाख्यलक्षणं ॥ ४७ ॥
सृष्ट्याद्यष्टकमध्यस्थज्ञानमोक्षप्रदत्वयोः ॥ उपयुक्ततयाचैतद्वयंसूत्रकृतोमतं ॥ ४८ ॥ ॥

तसकलवस्त्वैक्यं । उक्तप्रपंचनप्रकरणासंगतत्वात् । प्रत्युतसइदंसर्वमसृजत तत्सृष्ट्वातदेवानुप्राविशत् । तदनुप्रविश्येतिस्वसृष्टजग
दनुप्रवेशस्यैवकथनेनोत्तरविरुद्धत्वाच्चेतिभावः ॥ ४६ ॥ अस्यापिलक्षणस्यप्राथमिकलक्षणसंगतिंश्रुत्यैवाह ॥ यदिति ॥ अर्थ
तस्संगृहीतया कोह्येवान्यात्कःप्राण्यात्दे षआकाशआनंदोनस्यादितिश्रुत्या उक्तंपूर्णानंदाख्यलक्षणं । सृष्ट्यै प्रागुक्तसृष्टिसमर्थ
नाय । सा मंत्रवर्णश्रुतिः । जगौ अनंतमितिवाचाजगौ । साऽऽनंदमयश्रुतिः । तदेवपूर्णानंदत्वलक्षणंप्रपंचयित्वाजगावितिच
योजना ॥ ४७ ॥ प्रकारांतरेणापिमनोमयप्रकरणत्रयोक्तलक्षणद्वयस्यसंगतिमाह ॥ सृष्टीति ॥ सृष्ट्याद्यष्टकस्य सृष्टिस्थितिसं

हारनियमनज्ञानाज्ञानबंधमोक्षाख्याष्टकस्य मध्येस्थितौयौज्ञानमोक्षौ तत्प्रदत्वयोः ज्ञानप्रदत्वमोक्षप्रदत्वाख्यलक्षणयोरित्यर्थः । एतद्द्वयं सर्वज्ञत्वपूर्णानंदादिगुणभरितत्वाख्यलक्षणद्वयं । सूत्रकृतःव्यासस्य मतमभिप्रेतं । स्वस्यसर्वज्ञत्वाभावेकथंभगवतःज्ञानप्रदत्वं स्वस्यपूर्णानंदत्वाभावेकथंपूर्णानंदाख्यमोक्षदातृत्वंचयुक्तंस्यात् । अतोजन्माद्यष्टकमध्यस्थोक्तलक्षणद्वयसमर्थकसर्वज्ञत्वपूर्णानंदत्वाख्यलक्षणयोरपिसूत्रकृदभिमतत्वाच्छ्रुतिरपितत्प्रपंचनंकृतवतीतिजन्मादिकारणत्वाख्यसौत्रलक्षणसंगतिर्वैतिभावः ॥ ४८ ॥ ननुतर्हिश्रुत्यापिसत्यंज्ञानमानंदंब्रह्मेत्येववक्तव्यं । अनंतपदेनगुणपूर्णत्वंकिमर्थमुक्तमित्यतआह ॥ व्याप्तत्वेति ॥

व्याप्तत्वसर्वशक्तत्वदयालुत्वादिकान्गुणान् ॥ सृष्ट्यर्थान्संग्रहीतुंसाप्रागनंतगुणान्जगौ ॥ ४९ ॥ तत्तत्पूर्त्यैतत्रचैकंगुणंपूर्णमवर्णयत् ॥ ५० ॥ जन्मादिकर्तृतोक्त्याचसूत्राभिप्रेतलक्षणं ॥ गुणानंत्यंकिलहरेस्ततोप्यानंत्यमाहसा ॥ ५१ ॥ ॥

आदिपदेनेच्छाप्रयत्नादिगुणास्संगृह्यंते । सृष्ट्यर्थान्सृष्टिप्रयोजनकान्सृष्ट्युपयुक्तानित्यर्थः । प्राक्प्रथमप्रस्तावे । सकलजगत्स्रष्टुर्हि सर्वव्याप्तत्वसर्वशक्तत्वदयालुत्वसिसृक्षादिगुणाअपेक्षिताः । तेषांसर्वेषामपिसंग्रहायश्रुतिरनंतपदेनानंदादिगुणानंत्यमेवोक्तवतीनत्वानंदमात्रमितिभावः ॥ ४९ ॥ तर्हिप्रपंचनसमयेआनंदमयपदेनानंदमात्रस्यकुतस्संकीर्तनमित्यतआह ॥ तत्तदिति ॥ तत्तत्पूर्त्यैतेषांगुणानांपूर्त्यै । तत्रगुणसमुदाये । एकमानंदाख्यं । सकलगुणानामपिपृथक्पृथक्पूर्णतासमर्थनेग्रंथगौरवभियासकलगुणाग्रेसरमानंदाख्यगुणंगुणांतरोपलक्षणतयापूर्णमवर्णयदितिभावः ॥ ५० ॥ प्रकारांतरेणापिगुणानंत्यकथनस्योपयोगमाह ॥ जन्मा

दीति ॥ सूत्राभिप्रेतलक्षणं जन्मादिसूत्राभिप्रेतलक्षणंहरेर्गुणानंत्यंकिलेतियोजना । आदिसूत्रेपूर्णत्वाभिधायकब्रह्मपदप्रयोगात् उत्तरत्रचाध्यायशेषेणसकलपदसमन्वयद्वाराऽनंतपदवाच्यानंतगुणपूर्णत्वस्यैवसमर्थनाच्चसूत्रकृतोप्यनंतगुणपूर्णत्वमेवब्रह्मलक्षण मभिमतं । जन्मादिकारणत्वलक्षणंतुतस्यासंभावनापरिहारायसंभावकतयोक्तमितिप्राचांसंप्रदायं किलेत्यनेनस्मारयति । ततोप्युक्त विधयामुख्यलक्षणत्वादपि । आनंत्यंगुणानंत्यं । सामंत्रवर्णश्रुतिः ॥ ५१ ॥ नन्वनंतगुणपूर्णत्वंलक्षणमितिवदतोपिएकैकगुण पूर्णत्वमपिलक्षणमभिप्रेतं । आनंदाख्यगुणपूर्णत्वमात्रस्यापिभगवतोन्यत्राभावेनातिव्याप्त्यादिदोषाभावात् । एवंचानंतगुणपूर्ण

**यद्यप्येकैकसुगुणसंपूर्तिरपिलक्षणं ॥ जीवात्यंतविभेदायतथापिबहुकीर्तनं ॥ ५२ ॥ पृथक्पृ**
**थग्लक्षणतांवक्तुंवा नंतविस्तृतेः ॥ अशक्त्यावासर्व(सि)शुद्ध्यैतत्राद्यगुणशोधनं ॥ ५३ ॥**

त्वंवदंत्याऽनंतश्रुत्याऽनंतलक्षणानिकिमर्थमभिहितानीत्यतआह ॥ यद्यपीति ॥ तथाप्येकैकगुणपूर्तेर्लक्षणत्वेपि जीवेभ्योत्यंत विभेदायात्यंतवैलक्षण्यायेत्यर्थः । बहुकीर्तनं बहुलक्षणकथनं । एकैकलक्षणेनभगवतस्सजातीयविजातीयव्यावृत्तिसिद्धावप्यनं तप्रकारैर्जीवेभ्योत्यंतवैलक्षण्यबोधनायानंतगुणपूर्णत्वाख्यलक्षणकथनमितिभावः ॥ ५२ ॥ उपादानेएकगुणसंग्रहस्योक्तानुवाद पूर्वकंप्रयोजनांतरमप्याह ॥ पृथक्पृथगिति ॥ पृथक्पृथक्लक्षणतां एकैकगुणपूर्तेरपिलक्षणतांवक्तुंवेत्येकंनिमित्तं । अनंतविस्तृतेः अनंतगुणपूर्णत्वविस्तारस्याशक्त्यावेत्यपरं । सर्वशुद्ध्यै सर्वेषांगुणानांपूर्णत्वशोधनाय । तत्रगुणसमुदाये । आद्यगुणआनंदः॥५३॥



तदेवविशदयति ॥ गुणाइति ॥ इत्यनेनहेतुना । सर्वा आत्मनआकाशइत्यादिका आनंदमयंप्रपंचनांताषट्प्रकरणी यंश्रुतिः अंतिमस्तुतिः अंतिमस्य अनंतपदोक्तांतिमलक्षणस्यस्तुतिर्वा प्रपंचनरूपावेत्यर्थः । यद्यस्मात् गुणान्जगत्स्रष्टृत्वादिगुणान् अगृ णात्अस्तौदितियोजना । सत्यपदोदितंप्रथमलक्षणंप्रकरणत्रयेणप्राक्प्रतिपाद्य ज्ञानपदोक्तद्वितीयलक्षणंप्रकरणद्वयेनतदनंतरंप्र तिपाद्य पुनरनंतपदोदितसकलगुणपूर्णतांप्रतिपादयितुंषष्ठप्रकरणांतासर्वापीयंश्रुतिःसिंहावलोकनन्यायेनप्रवृत्ता । पंचषान्गुणा न्प्रस्ताव्येयमेवदिगन्यत्रापीत्युपरताच । अतःप्रस्तावप्रपंचनयोर्नवैषम्यमितिभावः ॥ ५४ ॥ किंचास्यांषट्प्रकरण्यामानुषंगिकत

**गुणास्सर्वेपिसिद्धास्स्युरानंदस्यप्रपंचने ॥ इत्यानंदमयंस्तौति सर्वेयंवांऽतिमस्तुतिः ॥ यदि**
**यंषट्प्रकरणीगुणानेवागृणात्प्रभोः ॥ ५४ ॥ साकारत्वविदुःखत्वाप्राकृतत्वास्तितादयः ॥**
**एकैकांगबृहत्त्वाद्याःकिंनसिद्ध्यंतितत्स्तुतौ ॥ यतःप्रियशिरस्त्वाद्याअपितस्यस्तुतौस्तुताः ॥ ५५ ॥**

यागुणांतरस्तुतिरप्यस्ति । अतोपिनप्रस्तावप्रपंचयोर्वैषम्यमित्याह ॥ साकारत्वेति ॥ अन्नमयादिपंचरूपाणामपि तस्येदमेवशि रइत्यादिनाशिरःपाण्याद्यवयवसमर्थनात् सवाएषपुरुषविधएवेत्यादिनास्पष्टंपुरुषविधत्वोक्त्याचसाकारत्वं । प्रियमेवेत्यवधार णात्विदुःखत्वं । आनंदरूपत्वकथनादप्राकृतत्वं । अस्तिब्रह्मेतिचेद्वेदेतिअस्तिता । आदिपदेनात्मब्रह्माकाशादिपदबोध्यगुणाः । अन्नंहिभूतानांज्येष्ठमित्यत्रोक्तभूतज्येष्ठत्वं विज्ञानंदेवास्सर्वेब्रह्मज्येष्ठमुपासतइत्यत्रोक्तदेवज्येष्ठत्वदेवोपास्यत्वे । यतोवाचोनिव

र्तते अप्राप्यमनसासहेत्यत्रोक्तवाङ्मनसागोचरत्वं शरीरेपाप्मनोहित्वासर्वान्कामान्समश्नुतइत्यत्रोक्तपापनाशकत्वसर्वकामप्रदत्वादयोगुणाश्चसंग्राह्याः । ब्रह्मपुच्छमितिपुच्छपदोक्तपादस्यपूर्णत्वोक्त्याऽर्थात्सर्वावयवानामपिबृहत्त्वलाभात्एकैकांगबृहत्त्वाद्याइत्युक्तं । अत्राप्याद्यपदेन मुदःप्रमुदआसतइत्यादिनोक्तमुदादिरूपत्वंग्राह्यं । तत्स्तुतौपादस्तुतौ । नन्विदमानंदमयेनश्रूयतइत्यतआह ॥ यतइति ॥ यतःयस्मात् । तस्याऽनंदमयस्य । अत्राप्याद्यपदेन मोददक्षिणपक्षत्वादिकंग्राह्यं ॥ ५५ ॥ मंत्रवर्णस्योत्तरप्रकरणस्यचयेयमेकवाक्यताकृतासानस्वकपोलकल्पिता । किंतुसूत्रकृतोप्यभिमतेतिवक्तुंसूत्रमेवार्थतोदर्शयति ॥ यतइति ॥

यतस्सूत्रकृतामांत्रवर्णिकंगीयतेत्विति ॥ प्रोक्तैकवाक्यतातस्मान्मत्रार्थोन्यःकथंवद ॥ ५६ ॥
एवंश्रुत्यर्थकुशलास्सर्वत्राप्येकवाक्यतां ॥ कुर्युस्त्वाचार्यवंतश्चेत्तिरस्कुर्युर्नचेच्छ्रुतिं ॥ ५७ ॥
सूत्रोक्तसूचितान्येवंलक्षणानिश्रुतिस्सती ॥ प्राक्प्रस्ताव्यपुनश्चैवंविचार्योपरताकिल ॥ ५८ ॥

यतःयस्मात् । मांत्रवर्णिकंगीयतेत्वित्यनेन मांत्रवर्णिकमेवचगीयतेइतिसूत्रंसंगृह्णाति । तुशब्दएवार्थेचशब्दार्थेच । मांत्रवर्णिकमित्यनेनसंबध्यते । तस्मात्सूत्रविरुद्धत्वात् । अन्यःमायावाद्युदीरितः ॥ ५६ ॥ एवंचसूत्रानुकूलभाष्यकर्तृत्वात्आचार्यवान्पुरुषोवेदेत्युपनिषद्वाक्यस्यमध्वाचार्यवानित्येवार्थइतिसूचयन्स्वाचार्यचरणानुसारिणःटीकाकारादीन्स्तौति ॥ एवमिति ॥ सर्वत्रश्रुतिपुराणादिवाक्येषु । आचार्यवंतश्चेदस्मदाचार्यवंतश्चेत् । नचे दस्मदाचार्यचरणानुसारिणोनचेत्श्रुतिंतिरस्कुर्युः पूर्वोत्तरविरुद्धायोग्यार्थपरत्वेनयोजयंतीत्यर्थः ॥ ५७ ॥ श्रुत्यर्थकथनमुपसंहरति ॥ सूत्रोक्तेति ॥ सूत्रोक्तानि जन्मकारणत्वादीनि

सूचितानि सर्वज्ञत्वगुणपूर्णत्वादीनि सूत्रोक्तसूचितानि । एवमुक्तप्रकारेण । प्राक्मंत्रवर्णे । पुनः उपरिषट्प्रकरण्यामित्यर्थः ॥ ५८ ॥ उक्तमेवविशदयंश्छ्रुत्युक्तलक्षणक्रमस्यद्वेधाकारणमाह ॥ प्राक्सर्वकर्तृतामिति ॥ तत्सिद्ध्यै सर्वकर्तृत्वसिद्ध्यै । सुख शक्तिकृपाद्याप्त्यै सर्वकर्तृत्वोपयुक्तसुखशक्तिकृपादिगुणपूर्णतायै । अंततःअंते । आद्यंजगत्कर्तृत्वंप्राक्प्रतिज्ञाय कर्तृत्वोपयुक्तज्ञा

प्राक्सर्वकर्तृतांपश्चात्तत्सिद्ध्यैसर्ववेत्तृतां ॥ सुखशक्तिकृपाद्याप्त्यैसांततोनंततांजगौ ॥ ५९ ॥
मुखतस्सूत्रकारोक्तंप्रागुक्तंब्रह्मलक्षणं ॥ पश्चात्तत्सूचितेवाद्वेलक्षणेसान्वशिक्षत ॥ ६० ॥
इमांहिशास्त्रमर्यादामाचार्यस्तत्ववादिनां ॥ वेद तस्मात्तदुदितंतत्वंनान्यदितिस्थितं ॥ ६१ ॥
इतोप्यनंतशब्दार्थोनपरोदीरितोभवेत् ॥ अनंतमितिचैकत्रश्रुतिराह स्थलांतरे ॥ ६२ ॥

नेच्छाप्रयत्नादिषुज्ञानस्यादिमत्वात्मध्येतत्प्रस्ताव्यां तेंऽतिममुदाजहारेतिभावः । मुखतइत्युत्तरश्लोकेच साक्षादुक्तस्यप्राक्कीर्तनं । सूचितयोःपश्चात्कीर्तनमितिप्रकारांतरेणक्रमोवर्णितः । अतएववाशब्दः । द्वे सर्वज्ञत्वानंतत्वे । साश्रुतिः ॥ ५९ ॥ ६० ॥ अधु नास्वाचार्यस्तौति ॥ इमामिति ॥ ६१ ॥ श्रुत्यंतरसमाख्ययापिअस्मदुक्तएवानंतशब्दार्थोनपरोदीरितइत्याह ॥ इतइति ॥ इतःवक्ष्यमाणनिमित्तात् । एकत्र तैत्तिरीयशाखायां । स्थलांतरे सत्यंज्ञानमानंदंब्रह्मेतिशाखांतरवाक्ये । तत्स्थाने अनंतत्वस्थाने

आनंदमितियतःप्राहेतियोजना । तेन अनंतत्वस्थानेआनंदाख्यगुणकथनेन । अत्राप्यनंतपदोदिततृतीयलक्षणे । गुणस्यैव आनंदादिगुणस्यैवयोग्यतास्ति । तत्त्यागेगुणत्यागे । अनंतपदस्यआनंदादिगुणपूर्णत्वार्थत्यागइत्यर्थः । दोष स्समाख्योल्लंघनाख्य दोषः । गुणत्यागेदोषस्स्यादितिलौकिकमर्यादयाध्वनिश्च ॥ ६२ ॥ ६३ ॥ ननुशाखांतरेआनंदएवश्रूयतेनगुणानंत्यं । अतःकथं समाख्ययेत्यतआह ॥ यतइति ॥ एकपदस्य काकेभ्योदधिरक्ष्यतामित्यत्रकाकपदस्य । अन्येषु दध्युपघातकमार्जालादिषु अजहत्स्वार्थलक्षणा स्वमुख्यार्थमपरित्यज्यान्यार्थेषुलक्षणास्तिलोके । तस्मा दजहत्स्वार्थलक्षणायाःलोकसिद्धत्वात् । इदमानंदपद

आनंदमितितत्स्थानेप्राह तेनात्रयोग्यता ॥ गुणस्यैवास्तितत्त्यागेदोषस्स्यादितितर्कये ॥ ६३ ॥ यतोस्त्येकपदस्यान्येष्वजहत्स्वार्थलक्षणा ॥ आनंदादिगुणैस्तस्मादानंत्यंस्या दिदंप्रभोः ॥ ६४ ॥ श्रुत्योरेकार्थतैवंस्यादन्यथाभिन्नवाक्यता ॥ ६५ ॥ ॥

बोध्यं आनंदादिगुणैरानंत्यंस्यादितिसंबंधः । आनंदपदस्याजहत्स्वार्थलक्षणयागुणांतरोपलक्षकत्वात्गुणानंत्यमप्यर्थोभवत्येवेति भावः ॥ ६४ ॥ लक्षणाश्रयणेकिंबीजमित्यतआह॥ श्रुत्योरिति ॥ एवं लक्षणयात्रापिगुणानंत्यकथनेसत्येव । अन्यथा लक्षणानाश्रयणे । शाखांतरेगुणकीर्तनात्तत्समाख्ययात्रगुणस्यैवप्राप्तिः । नवस्तुतोनंतत्वस्य । एतत्समाख्ययाचशाखांतरेलक्षणयागुणानंत्यप्राप्तिरितिसमाख्ययोःपरस्परोपकारित्वमितिभावः । युक्तिवैभवप्रदर्शनायेदमुदितं । वस्तुतस्तुशाखांतरेगुणस्योक्तत्वादत्रापिगुण



कथनमेवोचितंनान्यदित्येतावतैवपरमुखस्यमुद्रितत्वादित्यपिद्रष्टव्यं॥६५॥ प्रकारांतरेणापिसमाख्यावाक्ययोस्संगतिमाह ॥ नाल्प इति ॥ यद्यस्मात् । नाल्पेसुखमितिश्रुत्या अल्पे अपूर्णेसुखंनेत्यपूर्णेसुखनिषेधात्पूर्णत्वंसुखकारणमुच्यते । ततस्तस्मात् । इहतैत्तिरीयश्रुतौ । आनंदत्वस्य शाखांतरोक्तानंदरूपत्वस्य हेतुत्वेनप्रयोजकत्वेनदेशकालसद्गुणपूर्णताकीर्त्यतइतियोजना । संगति र्हेतुहेतुमद्भावरूपा । एवमपिवाक्यभेदःपरिहर्तुंशक्यतइतिभावः ॥६६॥६७॥ हेतुहेतुमद्भावमेवस्फोरयति ॥ सौंदर्येणेति ॥ विभोः देशव्या

नाल्पेसुखमितिश्रुत्यापूर्णत्वंसुखकारणं ॥ यदुच्यतेततोदेशकालसद्गुणपूर्णता ॥ ६६ ॥ आनंदत्वस्यसिद्ध्यर्थंहेतुत्वेनेहकीर्त्यते ॥ इतिवासंगतिर्वाच्यासमाख्यावाक्ययोस्तयोः ॥ ६७ ॥ सौंदर्येणसमग्रेणज्ञानेनचबलेनच ॥ पूर्णस्यह्याप्तकामस्यविभोर्नित्यस्यचप्रभोः ॥ ६८ ॥ सुखमेवभवेत्पूर्णंदुःखस्यावसरोपिन ॥ तत्पूर्णसौख्यसिद्ध्यर्थमानंत्योक्तिश्चशोभते ॥ ६९ ॥ अतोदेशाचकालाचगुणतश्चांतशून्यता ॥ श्रुत्युक्तंतदनंतत्वंनान्यत्तत्त्वमितिस्थितं ॥ ७० ॥ ॥

प्तस्य । समग्रेणेतियथायोग्यंसंबंधः । अन्यत्स्पष्टं । सौंदर्यादिगुणभरितस्यसदासुखमेवभवेत् । दुःखस्यावसरोपिन । स्वस्मादधिकसौंदर्यादिगुणभरितपुरुषदर्शनेसतीर्ष्ययास्वगुणह्रासादिनाजातचिंतयावा एकस्मिन्देशेकालेचसत्त्वेपिदेशकालांतरेऽभावचिंतयावा दुःखंस्यात् । समग्रसौंदर्यादिगुणभरितस्यतु केननिमित्तेनकदादुःखंस्यात् । किंतुसर्वदासुखमेवभवेत् । तत्तस्मात् । आनंत्योक्तिःदेशकालगुणपूर्णत्वोक्तिश्शोभते शाखांतरोक्तानंदरूपत्वसाधकतयासंगच्छतइतिसमुदायार्थः ॥६८॥६९॥ अतःपूर्वोक्तयुक्तिभिः । तद

नंतत्वं । तस्यब्रह्मणःअनंतत्वं । अन्य त्सकलवस्त्वात्मकत्वंतत्वंनेतिस्थितमितिसंबंधः ॥ ७० ॥ एवंपरोदीरितैक्यार्थखंडनेन स्वाभिमतार्थकथनेसत्यानुषंगिकतयाऽतीतसौरभद्वयार्थोपिसिद्धइत्याह ॥ अनंतेति ॥ अनंतगुणत्वसिद्ध्यागुणसौरभसंगतिः । नैर्गुण्याख्यदोषदूषणेनशुद्धिसौरभसंगतिश्चद्रष्टव्या ॥ ७१ ॥ पूर्वंब्रह्मणस्सकलदेशकालेष्वाश्रितत्वंसकलसद्गुणाधारत्वंचानंतशब्दस्यपर्यवसितोर्थइत्यंगीकृत्य सकलगुणाधारत्ववत्सकलवस्त्वाधारत्वमपिकुतोनोच्यतइत्यस्यद्वेधापरिहारउक्तः । अधुनासकल

अनंतश्रुतितश्चैवह्यनंतगुणतायतः ॥ सिद्धाततश्चनैर्गुण्यवादोमोदायनेष्यते ॥ ७१ ॥ किंचो क्तरीत्यादेशाच्चकालाच्चगुणतस्तथा ॥ नांतइत्युदितेसर्वदेशकालगुणैस्सदा ॥ संबंधइतिशब्द स्यशक्यार्थस्त्वेकएवच ॥ ७२ ॥ सचयोग्यतयाधर्मेधमधर्मित्वमिष्यते ॥ संयोगोदेशकाला भ्यामितिसर्वस्यसंमतं ॥ ७३ ॥ एवंचवस्तुतोप्यस्यनांतइत्युदितेसति ॥ सर्वैश्चवस्तुभिस्सि द्ध्येत्सदासंबंधएवहि ॥ ७४ ॥ सचकुंडपटादौचेत्संयोगोदेशकालवत् ॥ ७५ ॥ ॥

देशकालगुणसंबंधएवानंतशब्दस्यपर्यवसितोर्थोनतुक्वचिदाहितत्वंकस्यचिदाधारत्वंचेतिवदन्वस्तुतोनंतत्वस्यप्रकारांतरेणापिद्वेधा गतार्थतांवक्तुमारभते ॥ किंचेत्यादिना ॥ शब्दस्यानंतशब्दस्य । शक्यःपर्यवसितः । अन्यत्स्पष्टं ॥ ७२ ॥ सचसंबंधः । यो ग्यतया धर्मधर्मिणोर्धर्मधर्मिभावस्य द्रव्ययोस्संयोगस्यैवसंभावितत्वेनेत्यर्थः ॥ ७३ ॥ एवंच देशकालगुणसंबंधस्यैवानंतशब्दा

र्थत्वे । अस्यब्रह्मणः ॥ ७४ ॥ सःवस्तुसंबंधः ॥ ७५ ॥ तत्तद्गुणक्रियाद्यैःतेषांतेषांघटपटादीनांगुणक्रियाद्यैरपरस्संयोगोवा ॥ ७६ ॥ अयंचद्विविधवस्तुसंबंधश्च देशव्याप्त्युक्त्या सकलदेशसंबंधोक्त्यागतार्थत्वात्सार्थकोन । सकलदेशसंबंधकथनेतदंतर्गतघटपटादिसंबंधोप्युक्तप्रायोव्यर्थश्चेतिनपृथग्वाच्यइतिभावः ॥ ७७ ॥ अथयदिवस्तुशब्देनसार्वज्ञादिभगवद्गुणाएवोच्यंतेतदाप्युत्तरमाह ॥ यदीति ॥ शुभवस्तुभिस्स्वनिष्ठसद्धर्मैस्संबंधइतियोजना । तदाधर्मधर्मित्वंधर्मधर्मिभावएवसंबंधस्स्यात् । भगवन्निष्ठसार्वज्ञादिशुभगुणरूपवस्तुभिर्भगवतश्चधर्मधर्मिभावएवसंबंधोवक्तुमुचितोनसंयोगादिः । सचघटादिवस्तुसंबंधवन्नगतार्थो

तत्तद्गुणक्रियाद्यैश्चेत्केषांचिद्वादिनांमते ॥ संयुक्तसमवायादिःस्यात्संबंधोपरोपिवा ॥ ७६ ॥
अयंचदेशव्याप्त्युक्त्यागतार्थत्वान्नसार्थकः ॥ ७७ ॥ यदिस्वनिष्ठसद्धर्मैस्संबंधश्शुभवस्तुभिः ॥
तदास्याद्धर्मधर्मित्वंतच्चानंत्यंगुणेनहि ॥ अतस्तन्नपृथक्प्रोचुस्तत्वज्ञास्तत्ववादिनः ॥ ७८ ॥

नापिव्यर्थः । देशकालसंयोगवत्संबंधमात्रलाभेपिभगवतासहधर्मधर्मिभावाख्यसंबंधस्यप्रागनुक्तत्वेनगतार्थत्वाभावात् । शोभनगुणसंबंधरूपतयाभगवतोमहिमापादकत्वेनसार्थकत्वाच्च । तच्च गुणैस्सहधर्मधर्मित्वंनामगुणेनानंत्यंगुणानंत्यमेवहि । अतः ईदृशवस्तुतोनंतत्वस्यगुणानंत्यरूपत्वात् । तद्वस्तुतोनंतत्वं । इदंचदेशकालव्याप्तत्वाभ्यांनगतार्थं । तादृशदेशकालयोरेवाभावात् । एवंदेशतोनंतस्यविभोरपिक्षणस्यानित्यतयाकालतोनंतत्वाभावात् । नित्यतयाकालतोनंतस्यापिपरमाणोर्देशतोनंतत्वाभावाच्चन

मिथोगतार्थता । अतस्सुष्ठूक्तंदेशतःकालतोगुणतश्चांतशून्यत्वमनंतत्वमिति ॥ ७८ ॥ इदानींगुणानांप्रत्येकमानंत्यंयुक्तितस्साध यति ॥ **धनैरिति** ॥ धनंचयदिबहुलंस्यात्तदैवधनैःपूर्णस्स्यादितियत्तत्तस्माद्देशकालव्याप्तभगवन्मूर्तेरेकांशेप्येकैकगुणस्याभा वेतत्रैवगुणानंत्याभावप्रसंगात् व्यापकरूपरसादिगुणानांव्याप्यवृत्तित्वावश्यंभावाच्चप्रत्येकंगुणानंत्यमपिकथंनयुक्तिःसाधयेत् । वक्ष्यतिचैतद्ग्रंथकारःस्वयमेव ॥ ७९ ॥ इदानींयुक्त्युपोद्बलकं मय्यनंतगुणेऽनंतेगुणतोनंतविग्रहइतिभागवतवचनमर्थतोगृहीत्वा व्याख्याति ॥ **अनंतगुणइति** ॥ अनंतगुणे गुणतोनंते अनंतविग्रहेमयि इतिपदयोजना । तत्रप्राक्प्रथमंस्मृतिःअनंतगुणेइ

**धनैःपूर्णस्तदैवस्याद्धनंचबहुलंयदि ॥ तद्गुणैःपूर्णतावाचागुणानांपूर्णताप्यभूत् ॥ ७९ ॥ अनं तगुणइत्युक्त्वाप्रागसंख्यान्गुणान्स्मृतिः ॥ गुणांश्चपूर्णान्सैवाहह्यनंतगुणतस्त्विति ॥ ८० ॥ महद्गुणत्वादितिचमहत्तामाहतांगुणे ॥ महत्त्वंत्वपरिच्छित्तिरितिसर्वेविदुर्बुधाः ॥ ८१ ॥**

तिविशेषणेनगुणानामवधिशून्यत्वस्यासंख्यातत्वेपर्यवसानादसंख्यान्गुणानुक्त्वापुनस्सैवगुणतोनंतइतिगुणांश्चपूर्णानाह । तुश ब्देनान्यथापौनरुक्त्यात्एवंविशेषोवश्यमंगीकार्यइतिसूचयतिग्रंथकारः । गुणतःगुणैःप्रत्येकमनंतइतिशब्दार्थः । एवमर्थाकथने पूर्वविशेषणेनैवगतार्थमिदंविशेषणंस्यात् । तस्माद्गुणानांप्रत्येकमानंत्यमेवोत्तरविशेषणाल्लब्धमितिभावः ॥ ८० ॥ उक्तार्थेवाक्यां तरंचप्रमाणयति ॥ **महद्गुणत्वादिति** ॥ महद्गुणत्वाद्यमनंतमाहुरितिचभागवतवाक्गुणे गुणसमुदायेमहत्तामाह । महत्त्वंत्वप



रिच्छित्तिस्तस्माद्गुणानांप्रत्येकमप्यपरिच्छिन्नस्वरूपपूर्णत्वसिद्धिरितिभावः ॥ ८१ ॥ उक्तार्थेऽतरंगयुक्तिंचाह ॥ **यथास्तीति** ॥ यथादेशादानंत्येदेशस्याप्यंतशून्यतास्तितथेत्युत्तरेणान्वयः । अवश्यंवाच्येतिपदसंबंधः । विपक्षेबाधकमाह ॥ **नचेदिति** ॥ नचे द्गुणानांप्रत्येकमानंत्यंनचेत् । तस्यभगवतःनसिद्ध्येदितिशेषः । तत्रदृष्टांतमाह ॥ **नहीति** ॥ ८२ ॥ ८३ ॥ तुशब्देनप्राक्सू चितांपौनरुक्त्याख्ययुक्तिंस्पष्टमाह ॥ **गुणेति** ॥ उक्तार्थमिदंपद्यं । तत्तस्मा त्स्मृतियुक्तिभ्यांगुणाः पृथक्पृथक्पूर्णास्सिद्धाइति

**यथास्तिदेशादानंत्येदेशस्याप्यंतशून्यता ॥ तथागुणेनानंत्येपिगुणस्याप्यंतशून्यता ॥ ८२ ॥ वाच्यावश्यंनचेत्तस्यगुणतोनंततैवन ॥ नह्यल्पबलवान्मर्त्योबलेनानंतउच्यते ॥ ८३ ॥ गुण संख्यावधिर्नेतियोनंतगुणईरितः ॥ सएवगुणतोनंतःप्रत्येकंगुणपूर्तितः ॥ ८४ ॥ इत्येववाच्य स्स्मृत्यर्थोनचेत्स्यात्पुनरुक्तता ॥ तत्सिद्धास्स्मृतियुक्तिभ्यांगुणाःपूर्णाःपृथक्पृथक् ॥ ८५ ॥ नचेत्सक्वचिदज्ञस्स्यात्कदाचिद्वाज्ञतापतेत् ॥ तद्देशकालव्याप्तस्यधर्मव्याप्तिर्बलादपि ॥ ८६ ॥**

फलितकथनं ॥ ८४ ॥ ८५ ॥ युक्त्यंतरंचाह ॥ **नचेदिति** ॥ नचेज्ज्ञानादिगुणादेशकालव्याप्तानभवंतिचेत् सःदेशकालव्या प्तोभगवा न्क्वचिद्देशेऽज्ञस्स्यात् । कदाचित्कस्मिंश्चित्कालेवाज्ञस्स्यात् । तत्तस्मा द्बलात् युक्तिबलात् देशव्याप्तस्यभगवतोज्ञान मपिदेशव्याप्तंनभवतिचेद्भगवानपिक्वचिद्देशेज्ञानीकस्मिंश्चिद्देशेसर्वथाज्ञानाभावाज्जडश्चस्यात् । इदानींज्ञानीकालांतरेसर्वज्ञाना

भावाज्जडश्चस्यात् । जडतापरिहारायाल्पमपिज्ञानमंगीक्रियतेचेत्ज्ञानंचव्याप्तंस्यादित्युभयतःपाशारज्जुरितिभावः ॥ ८६ ॥ किंचसंयोगशब्दव्यतिरिक्तारूपरसाद्यास्सर्वेगुणाव्याप्यवृत्तयइतिसर्ववादिनोवदंति । एवंचदेशकालव्याप्तस्यभगवतोरूपरसाद्याः कथंनदेशकालाव्याप्ताइत्याह ॥ किमिति ॥ अव्याप्यवृत्तयःकिमितिसंबंधः । तत्तस्मात्संयोगव्यतिरिक्तधर्माणांधर्मिणिव्याप्यवृत्तित्वात्धर्मिव्याप्तौगुणाश्चव्याप्ताइतियोजनीयं ॥ ८७ ॥ पूर्वमनंतगुणेगुणतोनंतेइतिविशेषणद्वयसार्थक्यायार्थद्वयमुक्तं । वस्तुतस्त्वेकेनैवविशेषणेनार्थद्वयंसिद्ध्यतीत्याह ॥ संकोचेति ॥ इयंगुणतोनंतता संकोचानौचित्यतः संकोचस्यानौचित्यात्अनु

किंसंयोगवदन्येपिगुणारूपरसादयः ॥ अव्याप्यवृत्तयोधर्मिव्याप्तौव्याप्तागुणाश्चतत् ॥ ८७ ॥
संकोचानौचित्यतश्चगुणतोनंततात्वियं ॥ बहुत्वाच्चमहत्त्वाच्चगुणानामितिगम्यते ॥ ८८ ॥ अप
रिच्छिन्नधर्माणांतत्सत्यानांस्वधर्मिवत् ॥ परिच्छिन्नत्वदज्ञानकल्पिततत्वकथावृथा ॥ ८९ ॥

चितत्वात् । गुणानांमहत्त्वात्देशकालानवच्छिन्नत्वात्बहुत्वात्संख्याविच्छेदराहित्याच्चेतिगम्यते । अनंतागुणायस्येतिविग्रहेगुणानामंताभावोहिअनंतशब्दार्थः । अंतश्च संकोचेकारणाभावात्योग्यतयादेशात्कालात्संख्यातश्चेतिगुणानांदेशानंत्यंकालानंत्यं संख्यानंत्यंचैकेनैवविशेषणेनसिद्ध्यतीतिभावः ॥ ८८ ॥ धर्माणांव्याप्तिकथनात् लब्धंफलद्वयमाह ॥ अपारिच्छिन्नेति ॥ तत्तस्मात् धर्मिवद्ब्रह्मवदपरिच्छिन्नधर्माणांअपरिच्छिन्नत्वात्तद्वदेवसत्यानांच परिच्छिन्नेनत्वदभिमताज्ञानेनकल्पिततत्वकथावृथेतियो

जना । एवंचव्याप्यवृत्तयोभगवद्धर्माव्याप्ताभवितुमर्हंति । व्याप्तधर्मिकत्वेसतिव्याप्यवृत्तित्वात् । गगनस्थमहापरिमाणवत् । विमताभगवद्धर्माःपारमार्थिकाः । व्याप्तत्वाद्ब्रह्मवत् । विमताभगवद्धर्माअज्ञानकल्पितानभवंतिअपरिच्छिन्नत्वाद्ब्रह्मवदितिचानुमानत्रयमनेनोक्तंभवति । ततश्चधर्माणांव्याप्तत्वप्रसाधनेनब्रह्मवत्सत्यत्वमज्ञानाकल्पितत्वंचेतिफलद्वयंसिद्धमितिभावः ॥८९॥ अज्ञानाकल्पितत्वेपिमाययाकल्पितत्वंस्यादितिमायाज्ञानयोर्भेदवादिनश्शंकाप्यनेनैवनिरस्तेत्याह ॥ अमायिकइति ॥ मायायाः परिच्छिन्नत्वाद्धर्मिणोहरेस्तद्धर्माणांचोक्तरीत्याऽपरिच्छिन्नत्वात्कथंमायिकत्वमपीतिभावः । तत्तस्मादपरिच्छिन्नत्वादितिवा ।

अमायिकोहरिस्सिद्धस्तद्धर्माअप्यमायिकाः ॥ अणुभ्योखिलजीवेभ्योविभेदश्चविभोरभूत् ॥ ९० ॥
विरुद्धधर्मध्रौव्येणभेदोपिध्रुवतामगात् ॥ अतोनंतश्रुतिर्वादद्वयस्याप्युत्तरंददौ ॥ ९१ ॥ तत्त्रिवर्णपद
मिदंत्रिविक्रमपदोपमं ॥ पराजयायदैत्यानांजयायचसतामभूत् ॥ ९२ ॥ ॥

अनेनैवभेदसौरभफलंचसिद्धमित्याह ॥ अणुभ्यइति ॥ विभोर्देशकालव्याप्तस्य ॥ ९० ॥ विरुद्धधर्माणा मभेदविरोधिसार्वज्ञादिभगवद्धर्माणां ध्रौव्येण देशतःकालतश्चध्रुवत्वेन । अत स्सर्ववस्त्वात्मकत्वाख्यपराभिलषितार्थखंडनात्गुणसिद्धेर्गुणपूर्णत्वार्थस्थापनेनगुणानांसिद्धत्वात् ततएवांतेजीवेश्वरयोःपारमार्थिकभेदस्यचसिद्धत्वादित्यर्थः । वादद्वयस्यै क्यवादनैर्गुण्यवादाख्यवादद्वयस्य ॥ ९१ ॥ अनंतश्रुत्यर्थकथनमुपसंहरति ॥ तत्त्रिवर्णमिति ॥ तत्तस्मा त्रिवर्णमिदंपद मनंताख्यपदं त्रिविक्रमपदो

पमं त्रिविक्रमस्यहरेःपादोपमं । त्रिविक्रमत्वेनत्रिवर्णत्वेनचोभयोरुपमा । अथवाऽनंतपदस्याप्यकारनकारतकाराख्यवर्णत्रयसहितत्वं । हरिपादस्यापि तलनखोपरिभागेषुरक्तशुभ्रनीलाख्यवर्णत्रयसहितत्वमित्युभयोरुपमाद्रष्टव्या ॥ ९२ ॥ इदानींब्रह्मसूत्रमर्यादयाजीवेश्वरभेदादिकंसप्रपंचंसाधयितुमारभते ॥ सर्वोपनिषदामिति ॥ अस्यार्थस्स्पष्टएव ॥ ९३ ॥ अतस्सूत्रस्यसूचकत्वात् । तदभ्यस्तंतेनसूत्रेणासकृदुक्तं । विदांविदुषां ॥ ९४ ॥ निर्णायकानुसारेण निर्णायकब्रह्मसूत्रानुसारेण । निर्णेयस्योपनि

सर्वोपनिषदामर्थंनिर्णेतुंबादरायणः ॥ निर्ममेब्रह्मसूत्राणिसूचनात्सूत्रमुच्यते ॥ ९३ ॥
अतस्तत्सूचितंग्राह्यंकिंपुनस्सकृदीरितं ॥ तदभ्यस्तंसमस्तंतुचूडारत्नायतेविदां ॥ ९४ ॥
निर्णायकानुसारेणनिर्णेयस्यगतिंविदुः ॥ अध्वनीनस्यसद्यध्वायोदीपेनप्रदर्शितः ॥ ९५ ॥
चोरःप्रदीपनाशंचकामयेत्कामुकोपिवा ॥ राज्याराजगृहंरात्रौयांत्यासोर्थ्यःपदेपदे ॥ ९६ ॥

षदादेः । तत्रदृष्टांतः ॥ अध्वनीनस्येति ॥ अध्वनीनस्यपांथस्य । दीपेनेत्युपलक्षणं । सूर्येणवा निशिचेद्दीपेनदिवाचेत्सूर्येणेत्यर्थः । उभयोरप्यंधकारनिमित्तसंशयविपर्ययनिरासकत्वात् । एवंवादिविवादादिनाप्राप्तसंशयादिनिरासकत्वेनव्यासाख्यसूर्यस्यप्रभास्थानीयेनसूत्रेणोपनिषदादेरप्यर्थाख्यमार्गोनिर्णेयइतिभावः ॥ ९५ ॥ सूत्रमुल्लंघ्योपनिषदामर्थकथनमन्यापदेशेननिंदयन्सूत्रानुसारिव्याख्यांस्तौति ॥ चोरइति ॥ सःदीपः । अन्यत्स्पष्टं । यथाऽयोग्यार्थकामुकत्वात्तदर्थमंधकारापेक्षौचोरकामुकौ



प्रदीपनाशंकामयतः । तथापूर्वोत्तरविरुद्धतयोपनिषदामयोग्यस्वकपोलकल्पितार्थकथकाःपरंसूत्रमुल्लंघयंति । यथाचस्वयोग्यंराजगृहंरात्रौयांतीराज्ञीपदेपदेदीपमर्थयते । तथापूर्वोत्तराविरुद्धतयास्वयोग्यनारायणाख्यभर्तृगुणान्प्रतिपादयंतीउपनिषदादीनांव्याख्याच पदेपदे तत्त्वमित्यादिपदेपदे तद्गुणसारत्वात्तुतद्व्यपदेशःप्राज्ञवदित्यादिसूत्राख्यदीपान्कामयतइत्युभयत्रापिध्वनितोप्यर्थोग्राह्यः ॥ ९६ ॥ अतस्सूत्राणामुपनिषदर्थनिर्णायकत्वात् । अतत्ववित्श्रुतितत्वार्थाज्ञानी सःउत्सूत्रयत्किंचिदर्थकथकः कंठात्अर्थकथकतयाकंठस्थानीयवाक्यात् सूत्रंब्रह्मसूत्रं जिहीर्षतिदूरीकर्तुमिच्छति । अन्यत्रसूत्रंकंठसूत्रं । तथाचोत्सूत्रभाष्यभा

अतस्सूत्रंतिरस्कृत्ययश्श्रुत्यर्थमतत्ववित् ॥ वक्तिसश्रुतिसुंदर्याःकंठात्सूत्रंजिहीर्षति ॥ ९७ ॥
उपकर्तर्यपकृतिःकृतघ्नस्यैवशोभते ॥ धर्मवक्रीकथंजह्यात्सूत्रंस्वार्थकृतेकृतं ॥ ९८ ॥ सतीम
प्यसतींकर्तुंचकमेदशकंधरः ॥ सावायुतनयादेशैस्तसातन्मार्गमन्वगात् ॥ ९९ ॥ ॥

षितः उपनिषद्वाक्यार्थोपिचंडालगीतवदश्राव्यः । सूत्रानुसारिभाष्यप्रतिपादितस्तूपनिषद्वाक्यार्थःमंगलस्त्रीशोभनवाक्यवत्सुश्राव्य इतिभावः ॥ ९७ ॥ प्रकारांतरेणाप्युत्सूत्रभाष्यकारमपहसति ॥ उपकर्तरीति ॥ उपकर्तर्युपकारिणिअपकृतिरपकारःकृतघ्नस्य कृतंपरेणकृतमुपकारंहंतीतिकृतघ्नः तस्य स्वोपकारिसूत्रमुल्लंघयंस्तद्भाष्यकारोपिताहशइतिभावः । धर्मवक्री धर्मंचरेतिपरान्प्रत्यपिधर्मंवदंतीश्रुतिः स्वार्थकृतेस्वनिर्णयार्थं । श्रुतिस्तुधर्मज्ञास्वोपकारिसूत्रानुसारेणैवार्थंब्रूयादितिभावः ॥ ९८ ॥ इदानींपरकीयभाष्यकारंप्रकारांतरेणदूषयन्नेवस्वभाष्यकारमन्यापदेशेनस्तौति ॥ सतीमिति ॥ सतींपतिव्रतांसीतां । एवंनिर्दुष्टार्थवक्त्रींश्रुतिंदुष्टार्थे

नयन्भाष्यकारोपिताद्दशइतिध्वनितोर्थः । सारावणेनबलान्नीतापिसीता वायुतनयादेशैर्हनूमदुक्तिभिःतन्मार्गेहनूमदुक्करा
ममार्गे । एवंपरैरन्यार्थेबलान्नीतापिश्रुतिर्वायोरवताररूपमध्वाचार्यभाष्याद्युक्तिभिस्तदुक्तमार्गेणश्रीनारायणगुणानेवप्रतिपादये
दितिभावः ॥ ९९ ॥ इदानींपरकीयभाष्यस्यबलात्कारं श्रुतिसूत्रवायुतनयादेशरूपमध्वभाष्याणामेकप्रकारतांचाऽऽनंदम
याधिकरणेश्रृंगग्राहितयाप्रदर्शयति ॥ ब्रह्मेति ॥ ब्रह्मपुच्छंप्रतिष्ठेत्यत्रोक्तब्रह्मशब्दबलात्पुच्छंपादाख्यावयवः । मायावादिनो

ब्रह्मशब्दबलात्पुच्छमेवब्रह्मेतिदुर्धियः ॥ श्रुतिस्सूत्राध्वनाऽऽनंदमयंब्रह्मर्चिशंसति ॥ १०० ॥
प्राक्प्रस्ताव्यानंदमयंश्लोकेतत्रोदितेश्रुतिः ॥ द्विरुक्तब्रह्मशब्देनकथंब्रह्मनतंजगौ ॥ १०१ ॥

हिसूत्रंश्रुतिंचोल्लंघ्यानंदमयस्यकोशतयाऽब्रह्मतांवर्णयंतःतत्पुच्छस्यैवब्रह्मतांवदंति । श्रुतिस्तुतदप्येषश्लोकोभवतीतिस्वोक्तानंद
मयेपूर्वप्रस्तावितानंदमयादाविवश्लोकंप्रमाणयंतीसूत्राध्वनानंदमयोभ्यासादितिश्रौतमर्यादया ऋचि अस्तिब्रह्मेतिचेद्वेद संतमेनं
ततोविदुरितिश्लोकेआनंदमयमेवब्रह्मशंसति । अतश्श्रुतिसूत्रयोस्सूत्रानुसारिभाष्यकारस्यचैकोमार्गः । उत्सूत्रभाष्यकारस्यत्व
परोमार्गइतिप्रागुक्तंसर्वंनप्रतिज्ञामात्रमितिभावः ॥ १०० ॥ ननुश्लोकेपिपुच्छस्यैवब्रह्मतोच्यते । नत्वानंदमयस्येतिशंकांमूलग्रंथे
परिहृतामपिस्वग्रंथसाफल्यायपुनरपियुक्तिभिर्निराकरोति ॥ प्रागिति ॥ तत्र स्वप्रस्तावितानंदमये द्विरुक्तब्रह्मशब्देन असद्ब्रह्मे

ति अस्तिब्रह्मेति द्विवारमुक्तशब्देन । तंआनंदमयं ॥ १०१ ॥ यतःयस्मात् । अन्यत्रसर्वत्रा न्नमयादिचतुष्के । श्लोकेन स्वो क्तार्थेनिरूपितमंत्रेण श्लोक्यःस्तुत्यःअंगी शिरःपाण्यादिपंचांगवत्त्वेननिरूपितःअवयवीअन्नमयादिरेव । नतुतस्यैकदेशोंगं । अन्नाद्वैप्रजाःप्रजायंतेइत्यन्नमयश्लोके प्राणंदेवाअनुप्राणंतीतिप्राणमयश्लोके यतोवाचोनिवर्ततेइतिमनोमयश्लोके विज्ञानंब्रह्म चेद्वेदेतिविज्ञानमयश्लोकेच स्पष्टमन्नमयाद्यंगिनामेवश्रूयमाणत्वात् । ततस्तस्मात् अन्नमयादिचतुष्टयेऽगिनएवश्लोकश्लोक्य त्वात्अत्रचा नंदमयप्रकरणेपि श्लोकश्लोक्योंग्येव । नत्ववयवः । प्रायपाठविरोधात् । सोयमंगिन्येवन्यायप्राप्तोपिश्लोकः यदि

श्लोकश्लोक्योयतोन्यत्रसर्वत्रांगीकृतोत्रच ॥ श्लोक्योंग्येव यदिब्रह्मशब्दशक्त्यापकृष्यते ॥ १०२ ॥
तर्ह्येकस्यद्वयोश्शक्त्यास्यादंगिन्येवकर्षणं ॥ द्वयोर्हिशक्तिर्महतीचतुर्भिस्संगृहीतयोः ॥ १०३ ॥

ब्रह्मशब्दशक्त्या पुच्छेश्रुतब्रह्मशब्दशक्त्याऽपकृष्यते पुच्छविषयतयायोज्यते । तर्ह्येकस्यपुच्छेश्रूयमाणैकब्रह्मशब्दस्य द्वयोरंगि विषयकमंत्रेश्रूयमाणब्रह्मशब्दयोःअंगिनिआनंदमये ब्रह्मणःआनंदमयस्य पुच्छमितितत्पुरुषसमासेन सोयमानंदमयोब्रह्म तस्य पुच्छमितिवापकर्षःअपकर्षणमेवस्यात् । किंतत्पुच्छमितिशंकायास्तुमोदप्रमोदसमानयोगक्षेमतयासुखविशेषवाचकमुत्पदमध्याहृ त्यमुदेवपुच्छमित्युत्तरंदातव्यं । अस्मदुक्तमेवापकर्षणंन्याय्यमित्याह ॥ द्वयोरिति ॥ एकस्माद्द्वयोश्शक्तिर्महतीहिइत्येकोन्या यः । चतुर्भिःउक्तरीत्याएकांगेअपकर्षणरहितैश्चतुर्भिश्श्लोकैस्संगृहीतयोरित्यपरायुक्तिः । पूर्वोक्तश्लोकचतुष्टयेऽदृष्टस्सोयमपक

र्षःकथमत्रैवकर्तव्यइतिभावः ॥ १०२ ॥ १०३ ॥ दृढंसूत्रेब्रह्मसूत्रेनिबद्धस्य ब्रह्मशब्दाभ्यासादितिआनंदमयेनिबद्धस्यास्यश्लोकस्येत्यन्यायुक्तिः । प्रकारांतरेणापिश्लोकस्यपुच्छेऽपकर्षणमनुचितमित्याह ॥ उत्कर्षइति ॥ अस्मदर्थेअस्माभिरुच्यमानेपुच्छस्थब्रह्मशब्दस्यांगिन्याकर्षणरूपार्थेउत्कर्षस्स्याद्धि । अधोभागेस्थितशब्दस्योर्ध्वभागेआकर्षणस्य ऊर्ध्वकर्षणमितिवा उच्चेश्रेष्ठेंगिनिकर्षणमितिवाउत्कर्षरूपत्वादितिभावः । त्वयात्वपकर्षःऊर्ध्वभागेश्रेष्ठेचांगिनिस्थितस्यश्लोकस्याधोभागेपादेआकर्षणंक्रियते । अतस्त्वदुक्तेर्थेऽपकर्षोजायते । अस्मदर्थेतूत्कर्षः । सएवश्लाघ्यइतिभावः ॥ १०४ ॥ किंचसर्वोत्कृष्टेयंविद्याऽऽनंदमयविद्यापरंकेव

दृढसूत्रनिबद्धस्यकथंचास्यापकर्षणं ॥ उत्कर्षोह्यस्मदर्थेस्यादपकर्षस्त्विहोच्यते ॥ १०४ ॥
सर्वोत्कृष्टाचविद्येयमुत्कर्षंसहतेपरं ॥ अपकर्षेपितेकोशस्यैकदेशंविशेन्नसा ॥ १०५ ॥

लमुत्कर्षमेवसहते । नापकर्षं । अतोविद्यास्वरूपपर्यालोचनयाचयोग्यंयोग्येनसंबध्यतइतिउत्कर्षएवकार्यइतिभावः । प्रतिबंदीप्रदर्शनायेदमुदितं । वस्तुगत्यानापकर्षोनाप्युत्कर्षःपरमात्मनि लोमनखादीनामपिपरब्रह्मत्वात्तस्यतस्यब्रह्मताप्रतिपादकंवाक्यंतत्रतत्रयोज्यं । परपक्षेदूषणांतरंचाह ॥ अपकर्षइति ॥ साब्रह्मशब्दसहिताश्लोकरूपश्रुतिः । तेमतेकोशस्य जडकोशरूपस्यानंदमयस्यैकदेश मंशभूतंअतएवजडंपादंनविशेत् । कोशस्यजडत्वेनतदेकदेशभूतपादस्यापिजडत्वावश्यंभावात्तद्ब्रह्मत्वप्रतिपादिकानस्यादितिभावः । उपलक्षणंचैतत् । पुच्छेश्रूयमाणोपिब्रह्मशब्दःकथंतत्रयोजनीयइत्यपिद्रष्टव्यं ॥१०५ ॥ अतःअंगिनिश्रू



यमाणश्लोकस्यान्यपरत्वायोगात् । निरर्गलःनिर्बाधःएकः आनंदमयस्यब्रह्मत्वरूपः । अपरः पुच्छस्यैवब्रह्मतारूपः । सूत्रभाष्यार्थप्रवृत्तस्येतिसाक्षाच्छ्रुतार्थदूषकःकथंतद्भाष्यकारइत्यपहासार्थमुदितं । खलत्वमुपपादयति ॥ निमित्तेति ॥ निमित्तस्यानुपपत्तिरूपनिमित्तस्यसाम्येपिपक्षद्वयसाधारण्येपि अंगस्यैवब्रह्मतोक्तेःकथमंगिनोब्रह्मत्वमितिवत् अंगिनःअब्रह्मतायांकथंतदेकदेशस्यांगस्यब्रह्मत्वमितिपक्षद्वयेप्यनुपपत्तिसाम्येपीत्यर्थः । एकत्र अंगस्यैवब्रह्मतायां पक्षपाताद्दुराग्रही । दुराग्रहग्रस्तत्वात्खलइति

अतश्श्रुतेस्सूत्रकृतश्चैकोमार्गोनिरर्गलः ॥ खलस्यसूत्रभाष्यार्थप्रवृत्तस्यापरोभवेत् ॥
निमित्तसाम्येप्येकत्रपक्षपाताद्दुराग्रही ॥१०६॥ उभयोर्ब्रह्मताऽयोगादेकत्यागोयदीष्यते ॥
सर्वस्यब्रह्मतातर्हिकेनवाघोषिताभुवि ॥ शिष्योब्रह्मगुरुर्ब्रह्मसर्वंब्रह्मजगत्किल ॥ १०७ ॥
मोदानंदप्रमोदादिनब्रह्मकिलचिन्मये ॥ ब्रह्मणस्सुखरूपत्वेसुखस्यब्रह्मतानकिं ॥ १०८ ॥

भावः ॥ १०६ ॥ शंकांतरमनूद्यदूषयति ॥ उभयोरिति ॥ उभयोरंगांगिनोर्ब्रह्मतायाअयोगात् । एकत्यागःअंगिब्रह्मत्वत्यागः । सर्वस्य चेतनाचेतनात्मकसकलजगतःब्रह्मताकेननिमित्तेन । सर्वंखल्विदंब्रह्मेतिश्रुत्यासर्वस्यब्रह्मतामाघोषयन्कस्माद्द्वयोर्ब्रह्मत्वाद्बिभेषीतिभावः । तदेवविशदयति ॥ शिष्यइति ॥ १०७ ॥ दुःखिनोजीवस्यजडस्यघटादेश्चब्रह्मताऽसंभाविता । आनंदमयस्यसुखरूपब्रह्मतायांनकाप्यनुपपत्तिरितिसूचनायमोदेत्यादिकमुक्तं । चिन्मयेज्ञानमये । अनुपपत्त्यभावमेवोपपादयति ॥

ब्रह्मणइति ॥ सुखरूपंब्रह्मेतित्वयाप्युच्यते ॥ तर्हिसुखस्य सुखात्मकानंदमयस्य ॥ १०८ ॥ आनंदमयस्यब्रह्मत्वंसाक्षाच्छ्रुतंचे
त्याह ॥ आनंदमिति ॥ १०९ ॥ नन्वंगस्यब्रह्मतायामंगिब्रह्म अधिकरणमेवस्यात् । नतुब्रह्म आधाराधेयभावस्यविरुद्धतयैक
स्मिन्नयोगादित्यतआह ॥ विरुद्धेति ॥ सर्वज्ञत्वाल्पज्ञत्वादिनात्यंतविरुद्धजीवब्रह्मैक्ये । यस्यतवेतिसंबंधः । एकजातीययोःअवय
विनोऽज्ञानानंदमयत्वेतदवयवानामपिज्ञानानंदमयत्वावश्यंभावात्एकप्रकारयोरित्यर्थः । अत्यंतविरुद्धयोरैक्यंवदताउक्तरीत्याए
कजातीययोरंगांगिनोरैक्यंकुतोनकथ्यते। आवयोर्मतेउपादानोपादेयतयाऽभिन्नयोरपिमृद्घटयोरेवावयवावयविभावदर्शनात्अंगां

आनंदंब्रह्मकंब्रह्मेत्यादिवेदोनकिंश्रुतः ॥ १०९ ॥ विरुद्धजीवब्रह्मैक्येयस्याशाभूयसीतव ॥
अंगांगिनोःकुतोनैक्यमेकजातीययोर्वद ॥ ११० ॥ केशस्यब्रह्मतादृष्टाकेशवस्यापिकिंनसा
॥१११॥ पुच्छस्यब्रह्मतायांतुमध्यस्याब्रह्मताकथं ॥ मृत्पुच्छंमृण्मयस्योक्षणइत्यज्ञाभाणकंस्मर ॥ ११२ ॥

गिभावोपिनाभेदविरोधीतिभावः ॥ ११० ॥ किंचांगांगिभावापन्नयोर्मूलरूपनारायणतत्केशरूपकृष्णावतारयोरुभयोरप्यैक्यब्र
ह्मत्वाधाराधेयभावदर्शनात्आनंदमयेप्यंगांगिनोर्द्वयोरपिब्रह्मत्वादौकानुपपत्तिरित्याह ॥ केशस्येति ॥ १११ ॥ युक्त्यंतरेणा
प्यानंदमयस्याब्रह्मतानोचितेत्याह ॥ पुच्छस्येति ॥ मध्यस्यानंदमयस्य । उक्षणःवृषभस्य । आभाणकंकिंवदंती । यथामृण्मय
पुच्छवृषभयोरुभयोरपिमृदात्मकत्वंलोकेदृष्टं । तथानंदमयपुच्छयोरुभयोरपिब्रह्मतैववाच्या । नत्वेकस्यब्रह्मताऽपरस्याब्रह्मतेति

भावः ॥ ११२ ॥ युक्त्यंतरंचाह ॥ किंचेति ॥ एक मुभयोर्ब्रह्मत्वायोगादेकंत्यजसिचेदित्यर्थः । पूर्वं पूर्वोक्तंपुच्छं । अपरंश्लोकोक्तमानंदमयंभज ब्रह्मतयांऽगीकुरु । सूत्रविरुद्धार्थेसूत्रस्यविरुद्धेऽर्थेपुच्छब्रह्मत्वे । उत्सूत्रभाष्यंसूत्राननुकूलभाष्यं । लक्षणज्ञा न्सूत्रार्थोवर्ण्यतेयत्रपदैस्सूत्रानु(का)सारिभिः । स्वपदानिचवर्ण्यंतेभाष्यंभाष्यविदोविदुरितिभाष्यलक्षणज्ञान् ॥११३॥ युक्त्यंतरेणाप्युभयोर्ब्रह्मतानविरुद्धेत्याह ॥ क्रीडतइति ॥ अनंतरूपैर्मत्स्यादिभिः । ताननंतावतारान् । एकीकुरुते । श्वेतद्वी

किंचत्यजसिचेदेकंपूर्वंत्यजभजापरं ॥ साक्षात्सूत्रविरुद्धार्थंमतिरासीत्कथंतव ॥<br>
उत्सूत्रभाष्यंदुर्भाष्यंलक्षणज्ञान्विचारय ॥११३॥ क्रीडतेनंतरूपैर्यस्तांश्चैकीकुरुते<br>
प्रभुः ॥ तदामूलंनकिंब्रह्मतानिरूपाणिवानकिं ॥ ११४ ॥ पादौब्रह्मकरौब्रह्मम<br>
ध्यंब्रह्मशिरोहरेः ॥ ब्रह्मैवेदंसर्वमितिश्रुत्याह्येषोर्थईरितः ॥ ११५ ॥ ॥

पस्थपद्मनाभमूर्त्यासहावतारसमाप्त्यनंतरमेकीकुरुते । मूलंमूलरूपं । नकिं ब्रह्मनकिं ॥ ११४ ॥ भगवतस्सर्वावयवानामपिब्रह्मत्वेमूलीभूतांपरैःकवलीकृतांश्रुतिमुद्धरति ॥ पादौब्रह्मेति ॥ हरेरितिप्रत्येकंसंबंधः । ब्रह्मैवेदंसर्वमितिब्रह्मप्रतिपादिकायांश्रुतौ ब्रह्मणःकरचरणादीनामेवसन्निहितत्वेनप्रस्तुतत्वात्प्रस्तुतपरित्यागेचकारणाभावात्इदंसर्वमित्यनेनतच्चरणादिकमेवपरामृश्यते । अंतरंगत्वाच्च । नतुबहिरंगंअसन्निहितंचजगदितिभावेनोक्तंपादौब्रह्मेत्यादि । एषःसर्वस्यहरिपादाद्यवयवस्यब्रह्मतारूपोर्थः ।

इमांशास्त्रमर्यादामजानतांमायावादिनांमुखग्रासीभूतायाश्श्रुतेरुद्धारोयमितिज्ञातव्यं ॥ ११५ ॥ हरेस्सर्वावयवानांब्रह्मत्वेप्रत्यक्षं चप्रमाणयति ॥ **आब्रह्मांडमिति** ॥ आब्रह्मांडंब्रह्मांडखर्परपर्यंतं । अस्यनारायणस्य । अयंचार्थस्त्रिविक्रमावतारेसर्वैर्दृष्टः । रोम्णिब्रह्मांडराशयइत्येतत्कोटिब्रह्मांडविग्रहइतिवासुदेवसहस्रनाममध्यस्थभगवन्नामार्थद्रष्टृभिः आंडकोशोबहिरयंपंचाशत्कोटि विस्तृतः । दशोत्तराधिकैर्यत्रप्रविष्टःपरमाणुवदितिभागवतवाक्यार्थद्रष्टृभिश्चब्रह्मरुद्रादिभिर्दृष्टं । शिशोश्शिशुरूपस्यविजृंभणं कुर्वतःकृष्णस्य । इदंचयशोदयादृष्टं । परात्मनःपरमात्मनः । पादरोममुखादिषुकिंपूर्णंन सर्वमपिपूर्णमेव ब्रह्मैवेतियावत् । पुच्छ

**आब्रह्मांडंहिपादोस्यरोम्णिब्रह्मांडराशयः ॥ शिशोर्मुखेजगत्सर्वंकिंनपूर्णंपरात्मनः ॥ ११६ ॥**
**आनंदमयमध्यस्यानंदोब्रह्मेतिकिंनसा ॥ सहेतुकंब्रह्मभावमाहसंशयनुत्तये ॥ ११७ ॥**

स्यैवब्रह्मतावादिनोपिश्रुतिबलात्बृहबृंहवृद्धाविति धातोर्महावृद्धिरूपपूर्णत्वस्यैवब्रह्मशब्दार्थत्वात्किंनपूर्णमित्युक्तं ॥११६॥ प्रब लश्रुत्यंतरविरोधंचाह ॥ **आनंदमयमध्यस्येति** ॥ आनंदआत्मेत्युक्तानंदाख्यमध्यस्येत्यर्थः । सातैत्तिरीयश्रुतिरेव । आनंदो ब्रह्मेतिव्यजानादितिभृगुवल्यां सहेतुकं आनंदाद्ध्येवखल्विमानिभूतानिजायंते । आनंदेनजातानिजीवंति । आनंदंप्रयंत्यभि संविशंतीतिब्रह्मलक्षणाख्यहेतुसहिततयाब्रह्मभावंसंशयनुत्तयेनाऽऽहकिं । मध्यस्येत्यापातार्थमादायोक्तं । वस्तुगत्याब्रह्मवल्ली स्थान्नमयादिप्रकरणपंचकोक्तान्नमयप्राणमयमनोमयविज्ञानमयानंदमयानामेवास्यांभृगुवल्यामपि तस्माएतत्प्रोवाचेतिएतत्पदे



नपरामृश्यान्नादिशब्दैराख्यानात् आनंदादिपदैरपिसूत्रेस्पष्टोक्तसूचितानामानंदमयादीनामेवसहेतुकंब्रह्मत्वोपदेशइतिद्रष्टव्यं । अतोनकेवलंसूत्रपरित्यागीपरकीयभाष्यकारः । उक्तविधयाप्रबलबहुतरश्रुतित्यागीचेतिनवैदिकसभासुश्लाघायोग्यः ॥ ११७ ॥ इदानींपरप्रक्रियामूलयुक्तिबलादेवानंदमयस्यब्रह्मतांसाधयति ॥ **अंगस्येति** ॥ अंगस्यपुच्छपदोदितपादरूपांगस्य । अंगिनि तादृशपंचांगभरितानंदमये । तत्रदृष्टांतमाह ॥ **पदस्थौल्यादिति** ॥ ११८ ॥ किंचपुच्छेब्रह्मपदश्रवणात्मध्यस्याब्रह्मतायां

**अंगस्यपूर्णतायांहिकिंवाच्यांगिनिपूर्णता॥ पदस्थौल्यादितिस्थौल्यंकिंनास्तीभकलेवरे ॥११८॥**
**पुच्छेब्रह्मपदादन्यन्नब्रह्मयदितेमते ॥ तर्ह्यनानंदतापुच्छेमध्यस्यानंदताश्रुतेः ॥ ११९ ॥**
**क्रयविक्रयपक्षेस्यादुभयोश्चद्विरूपता ॥ तदुत्सूत्रस्वभावत्वादेवसूत्रविसर्जनं ॥ १२० ॥**
**यस्त्वंसमन्वयाध्यायात्पादमेकंव्ययोजयः ॥ तस्यानंदमयात्पुच्छविच्छेदेकिंभयंचतत् ॥ १२१ ॥**

मध्येआनंदपदश्रवणात्पुच्छस्यानानंदत्वंस्यात् । अन्योन्यविनिमयेतयोरप्युभयरूपतासिद्धेत्याह ॥ **पुच्छइति** ॥ अन्यत्मध्यं । तत्तस्मात्युक्तिश्रुतिबाधितत्वात् । उत्सूत्रस्वभावत्वात्उद्गतंसूत्रंयज्ञोपवीतंतत्स्वभावत्वात् । सूत्ररहितसन्यासवेषधारित्वादि त्यर्थः । सूत्रविसर्जनंब्रह्मसूत्रविसर्जनं ॥ ११९ ॥ १२० ॥ बहुसूत्रविरुद्धभाषिणःएकसूत्रविरुद्धभाषित्वंकिमपूर्वमित्याह ॥ **यस्त्वमिति** ॥ समन्वयाध्यायात् तत्तुसमन्वयादितिप्रतिज्ञातसमन्वयप्रतिपादकप्रथमाध्यायात् । एकंपादंचतुर्थपादं । व्ययो

जयस्सांख्यमतनिराकरणपरतयाभिन्नार्थमकरोः । पुच्छविच्छेदेपुच्छस्यविजातीयत्वकरणे आनंदमयसूत्रविरुद्धभाषित्वइतिया
वत् । अथवापादविच्छेदकारित्वंपरस्यस्वभावइतिश्लोकेनानेनोक्तं ॥ १२१ ॥ किंचयुष्मदस्मत्प्रत्ययगोचरयोरित्यारंभभाष्यएव
स्वाभिमतमंगलपरित्यागात्प्रथमतएवाबद्धकथनंतवैवोचितं । सर्वज्ञस्यतुव्यासस्यप्राथमिकेसमन्वयारंभसूत्रेकथमबद्धकथनंयु
क्तमित्यन्यापदेशेनाह ॥ प्राचीनेति ॥ प्रथमचुंबनइत्यर्थः । तवैवोचितइत्यनेन सन्यासितयाऽनभिमतनारीमुखचुंबने मानुष
त्वात् यस्ताड्यतेदंयितयाप्रणयापराधादित्यमरुकेत्वयैवोक्तत्वाच्चदंतभंगःसंभावितइतिसूचयति । व्यासस्यत्वच्छेद्याभेद्यहरिरू

प्राचीनचुंबनेमंददंतभंगस्तवोचितः ॥ नव्यासस्यखलश्रेणीदंतभंगकृतोहरेः
॥ १२२ ॥ यद्यानंदमयःकोशस्तत्पुच्छेब्रह्मताकथं ॥ साकारस्यजडस्यास्यब्रह्म
तानहितेमते ॥ १२३ ॥ अधिष्ठानतयाब्रह्मत्वोक्तावन्यत्रकिंनसा ॥ १२४ ॥

पत्वात्खलश्रेणीदंतभंगकारित्वाच्चजगद्ग्रासेपिनदंतभंगोन्याय्यइत्यापातप्रतीयमानदंतभंगशब्दार्थस्यायमपिभावः । ध्वनितोर्थ
स्तुसंगतिकथनकालएवोक्तोद्रष्टव्यः ॥ १२२ ॥ अधुनापरमुखेनैवस्वाभिमतश्रुतेरतत्वावेदकत्वंवाचयति ॥ यद्यानंदमयइति ॥
तत्पुच्छेकोशस्यैकदेशपुच्छे । तत्रहेतुमाह ॥ साकारस्येति ॥ पादतयासाकारत्वात् । अतएवजडत्वाच्चेतिहेतुगर्भविशेष
णद्वयं । नचसाकारत्वमसिद्धं । पुरुषविधश्रुत्यर्थपर्यालोचनयापुच्छपदेनसाकारपादाख्यावयवस्यावश्यंभावात् । तथाचा
ब्रह्मणिब्रह्मत्वप्रतिपादकत्वाच्छ्रुतिरतत्वावेदिकेतिभावः ॥ १२३ ॥ अधिष्ठानतया पादारोपाधिष्ठानतयाब्रह्मत्वोक्तौपादेब्रह्मत्वो

क्तौ । अन्यत्रावयवांतरेषु । साएतादृशी । आरोपाधिष्ठानत्वस्यतत्रापिविद्यमानत्वात् । अस्मिन्नपिपक्षेश्रुतिरतत्वावेदिका । अव यवांतरेषुत्वदभिलषिततत्वस्याकथनात् । कारणंविनामुख्यार्थभूतब्रह्मत्वरूपतत्वस्यत्यागात् । पुच्छस्यैवममुख्यब्रह्मत्वेश्रुतेस्सूत्र काराभिमतानंदमयमुख्यब्रह्मत्वाविरोधित्वेनतदब्रह्मत्वाख्यत्वदभिलषिततत्वस्यासाधकतयात्वत्तत्ववेदकत्वाभावात् । अमुख्य वृत्त्याब्रह्मशब्दबोध्यस्यास्यपुच्छस्यमिथ्यात्वावश्यंभावेनस्पष्टमतत्वावेदकत्वाच्च ॥ १२४ ॥ यदिचकोशत्वपक्षोक्तदोषपरिहाराया नंदमयोब्रह्म । नतुकोशइत्यंगीक्रियते । तदापिपुच्छंब्रह्मेतिश्रुतिरतत्वावेदिनीत्याह ॥ पुच्छस्येति ॥ पुच्छस्याब्रह्मत्वेहेतुमाह

यद्यानंदमयोब्रह्मपुच्छस्यब्रह्मताकथं ॥ उभयोर्ब्रह्मताऽयोगेमहान्किलतवाग्रहः ॥ १२५ ॥
अतोतत्वावेदिकेयंश्रुतिरासीत्तवैवहि ॥ सूत्रकल्पद्रुमच्छेदेकुठारःक्वास्तितेवद ॥ १२६ ॥
श्रुतौमहानादरस्तेसर्वेजानंतिपंडिताः ॥ ब्रह्मण्याम्रेडितश्रुत्यातटस्थंयस्यलक्षणं ॥ १२७ ॥

॥ उभयोरिति ॥ त्वदुक्तन्यायेनैवानंदमयस्यब्रह्मत्वेपुच्छस्यब्रह्मतागतेतिभावः ॥ १२५ ॥ अतःपक्षद्वयेपितवश्रुतिरियमत त्वावेदिकैवासीदितियोजना । अस्त्वेवमतत्वावेदिकाश्रुतिःप्रकृतेकिमायातमित्यतआह ॥ सूत्रेति ॥ श्रुतिबलाद्धिसूत्रमन्यथी क्रियते । श्रुतेरेवंत्वत्प्रक्रिययैवातत्वावेदकत्वेनगतत्वात्सूत्रोक्तार्थपरित्यागे नकिंचित्कारणमितिभावः ॥ १२६ ॥ श्रुतावादराभि मानेनसूत्रंदूषयंतंपरंपरिहसति ॥ श्रुताविति ॥ यस्यप्रतिवादिनोमते आम्रेडितंबहुधाकथितं यतोवाइमानिभूतानिजायंते अन्नं

 

ब्रह्मेतिव्यजानात् अन्नाद्ध्येवखल्विमानिभूतानिजायंतइत्यादिनाषोढाब्रह्मण्याम्रेडितमितिभावः । लक्षणंब्रह्मलक्षणं । तटस्थमविद्यानिष्ठं । तस्यतवेतिपूर्वेणान्वयः ॥ १२७ ॥ अपिचश्रुतावादरवतासाक्षाच्छ्रुतंपुच्छस्यब्रह्मत्वमंगीक्रियतां । श्रुतावश्रुतमानंदमयस्याब्रह्मत्वंकुतःकथ्यतइत्याह ॥ किंचेति ॥ अन्यस्यानंदमयस्य । साऽन्यस्याब्रह्मता । अन्यद्ब्रह्मेतिसाक्षादुक्तेः पुच्छमेवब्रह्मेतिसावधारणत्वोक्तेश्चाभावात् । दशघटेषुसत्स्वयंघटइत्येकत्रव्यवहारेअन्यघटेष्वघटत्वादर्शनाच्चान्यस्याब्रह्मत्वमश्रौतमेवेतिभावः ॥ १२८ ॥ शंकते ॥ विशिष्येति ॥ यद्धिप्रमेयंविशिष्यैकत्रोक्तंतदर्थादन्यत्रनभवेदितियोजना । इदमपिप्रागुक्तव्यभि

किंचश्रुतावादरश्चेत्पुच्छस्यब्रह्मतास्तुते ॥ अन्यस्याब्रह्मताकस्मात्स्वीकृतानहिसाश्रुता ॥ १२८ ॥
विशिष्यैकत्रयद्युक्तमर्थान्नान्यत्रतद्यदि ॥ तर्हियुक्तिबलादेवब्रह्मतानश्रुतेर्बलात् ॥ १२९ ॥
युक्तिस्तुदुर्बलासाक्षात्सूत्रादाप्ततमोदितात् ॥ अतस्तवेषुस्त्वांहंतिगुणेत्वन्यायकल्पना ॥ १३० ॥

चारेणदूषितमेव । तथापियुक्त्यंतरेणपुनर्दूषयति ॥ तर्हीति ॥ आर्थिकार्थस्याश्रौतत्वादितिभावः ॥ १२९ ॥ ननुयुक्तिबलादागतमपिप्रमेयंकुतोनांगीक्रियतइत्यतआह ॥ युक्तिस्त्विति ॥ प्रबलप्रमाणविरोधेनयुक्तिरेवाभासीकर्तव्या । श्लोकरूपश्रुतौश्रवणादत्रैकस्यैवश्रवणमितिवक्तुंशक्यत्वादितिभावः । अतः युक्तेर्दुर्बलत्वात् । गुणेऽप्रधाने अन्यायकल्पनाअप्रामाण्यकल्पना इतितवेषुस्त्वांहंतीतिसंबंधः । मायावादीहिश्रुतेःप्रबलत्वात्सूत्रस्यचपुंवाक्यतयादुर्बलत्वाच्छ्रुतिविरोधेसूत्रमेवहेयमित्यत्रगुणेत्व 

न्यायकल्पनेतिन्यायंप्रमाणीकृतवान् । अधुनादुर्बलयुक्तिबलादाप्ततमवाक्यत्वेनातिप्रबलसूत्रदूषणेप्रयतमानस्यस्वस्यस्वोक्तन्याय एवस्वघातकोभूदितिभावः ॥ १३० ॥ युक्त्यंतरंचाह ॥ यदिति ॥ यद्यस्मात्एकत्रनिर्णीतइशास्त्रार्थोपरत्रापीतिन्यायबलेनैकत्रविशिष्योक्तशास्त्रार्थस्यैवान्यत्रापिसंग्राह्यत्वादितिभावः । अस्यैवन्यायस्योदाहरणतयाप्रागस्माभिरपिव्यभिचारोदर्शितः ॥ १३१ ॥ न्यायसंचारार्थमिदमुदितं । प्रकृतप्रमेयंतुयुक्तिबलादेवसिद्ध्यति । अतएकत्रविशिष्योक्तिरन्यथासिद्धेत्याशयवान्मृत्पुच्छंमृण्मयस्योक्षणइत्यत्रोक्तयुक्तिमेवस्मारयति ॥ पादस्येति ॥ बलात् अंगांगिनोरेकप्रकारत्वयुक्तिबलात् । तेऽर्थःएकत्रोक्ता

यदेकत्रविनिर्णीतइशास्त्रार्थोह्यपरत्रच ॥ इत्याहुरार्यास्तत्तेऽर्थस्वार्थव्यभिचरेदपि ॥ १३१ ॥
पादस्यब्रह्मतोक्तौहिसर्वस्यब्रह्मता बलात् ॥ यतोभवेत्ततस्तेर्थःप्रबलार्थहतोभवेत् ॥ १३२ ॥
एवंचयुक्तिश्रैष्ठ्येपियदग्रेसूत्रखंडनं ॥ अर्थादुत्सूत्रभाष्यत्वमुत्तरत्रापितद्वदेत् ॥ १३३ ॥ किंच
निर्विकृतेरेवनिमित्तत्वंपरात्मनः ॥ कुलालवद्यतोयुक्तातद्युक्तातटस्थता ॥ १३४ ॥ ॥

वन्यत्राभावरूपोर्थः प्रबलार्थहतः प्रबलयुक्तेरर्थेनसाध्येनहतइत्यर्थः ॥१३२॥ किंचार्थादनर्थप्राप्तिर्नसूत्रकारस्यापितुतवैवेत्याह ॥ एवंचेति ॥ युक्तिश्रैष्ठ्ये युक्तिसौंदर्ये । अग्रेप्रथमतःयत्सूत्रखंडनंसूत्रस्यदूषणं त त्केवलंद्वेषादेवैकत्रसूत्रदूषणं अर्था देकत्रहृद्गतद्वेषस्यप्रदर्शितत्वेनान्यत्रापितदनुमाना दुत्तरत्रापित्वद्भाष्यस्योत्सूत्रभाष्यत्वंवदेत्ज्ञापयेदितियोजना ॥ १३३ ॥ अधुनाऽस्मात्प्यधिकरणादग्रेजन्मादिसूत्रएवोत्सूत्रभाष्यत्वंदर्शयति ॥ किंचेति ॥ यतःयस्मात् । निर्विकृतेरेवनिर्विकारस्यैवनिमित्तत्वंजग

न्निमित्तकारणत्वं । तत्तस्मात् । तटस्थताजगज्जन्मादिकारणत्वलक्षणस्याविद्यानिष्ठता । जन्माद्यस्ययतइतिसूत्रेजगदुपादानत्वं यद्यभिप्रेतंतदानिर्विकारेब्रह्मण्ययोगात्स्यात्कथंचित्तटस्थता । कुलालवन्निमित्तकारणत्वस्यैवसूत्रार्थत्वसंभवात्व्यर्थंतटस्थत्वकथनं । नहिसूत्रकारःआदिसूत्रेब्रह्मप्रस्ताव्याविद्यायालक्षणंब्रूयात् । अतोप्युत्सूत्रभाष्यंपरकीयभाष्यमितिभावः ॥ १३४ ॥ पंचमी यतइतिपंचमी । ननुजनिकर्तुःप्रकृतिरितिसूत्राज्जनिधातुसमायोगेपंचम्याउपादानपंचमीत्वनियमात् प्रकृतेच यतोवाइमानिभूतानिजायंतइतिजनिधातुश्रवणात्कथंनिमित्तपंचमीत्वमितिशंकांनिराकरोति ॥ यदीति ॥ इयंछंदसिविद्यमाना । तस्यपा

पंचमीचनिमित्तेऽस्तुयदिपाणिनिशिक्षया ॥ उपादानेपंचमीयंतस्यशिक्षांतरंस्मर ॥ १३५ ॥
यतःपदं यतःप्रोक्तंतेनसार्वविभक्तिकं ॥ तदपोसृजतेत्याद्याप्रथमाचसहस्रशः ॥ १३६ ॥
अतोविभक्तिव्यत्यासोप्यत्रसर्वत्रशोभते ॥ सोपिच्छंदसितेनोक्तस्ततःकानुपपन्नता ॥ १३७ ॥

णिनेः ॥ १३५ ॥ यतःयस्मात् । तेनपाणिनिना । यतःपदं यतइतितसिप्रत्ययांतपदं । सार्वविभक्तिकं सर्वविभक्तिषुवर्तमानं । यतश्चतदपोसृजतेत्याद्या प्रथमा कर्त्रर्थकप्रथमाविभक्तिस्सहस्रशोस्ति । आदिपदेनतत्तेजोसृजतेत्यादेर्ग्रहणं । अतःकारणात् । अत्र यतःपदघटितवाक्येषु सर्वत्र तत्रतत्रविद्यमानेषुसर्वेष्वित्यर्थः । विभक्तिव्यत्यासः एकविभक्तेर्विभक्त्यंतरात्मकत्वं । पाणिनिनातसिप्रत्ययांतस्यसार्वविभक्तिकत्वकथनात् । यतोवाइमानिभूतानिजायंतइत्यत्रापियतइतिपदंयेनेतिकर्त्रर्थकतृतीयांतपदमपिस्यात् । कर्तृकरणयोस्तृतीयेतिकर्तरितृतीयायाअनुशासनात् । अतएवप्राक्कुलालवन्निमित्तत्व

मितिकर्तृत्वमेवप्रस्तावितं । तदपोसृजतेतिश्रुत्यंतरेब्रह्मणस्स्पष्टंकर्तृत्वोक्त्याचात्रकर्त्रर्थकतृतीयाविभक्तेरेवन्याय्यत्वात् । उपल क्षणंचैतत् । अस्यामेवश्रुतौयेनेतिस्थितिप्रकरणेकर्तृत्वस्योक्तत्वात् । नहितत्रकर्तुरत्रोपादानत्वमुचितमित्यपिग्राह्यं । सोपिविभक्ति व्यत्यासोपि । तेनपाणिनिना । छंदस्युभयथा व्यत्ययोबहुलं सुपांसुलुगित्यादितद्वचनाच्छंदसिविभक्तिव्यत्यासोपिन्याय्यइति भावः । ततस्तस्मात्पूर्वोक्तनिमित्तचतुष्टयात् ॥ १३६ ॥ १३७ ॥ पाणिनिसूत्रभयात्जन्माधिकरणेश्रुतिमुपेक्षमाणस्यपरस्यानं दमयाधिकरणोक्तस्वन्यायेनैवविरोधइत्याह ॥ स्वमूलेति ॥ स्वमूलसूत्रं आनंदमयोभ्यासादितिस्वमूलसूत्रमुत्सृज्य गुणेत्वन्या

स्वमूलसूत्रमुत्सृज्यश्रुतौकृतरतेस्तव ॥ परसूत्रंपरित्यज्यकुतोनासीच्छ्रुतौरतिः ॥ १३८ ॥
छंदस्युभयथाप्यस्तिकार्येनास्तिद्वयीगतिः ॥ लक्षणस्यतटस्थत्वेसर्वंकार्यमकर्तृकं ॥ १३९ ॥

यकल्पनेतिन्यायेनत्यक्त्वा । श्रुतौब्रह्मपुच्छमितिश्रुतौ । परसूत्रं जनिकर्तुःप्रकृतिरितिपाणिनिसूत्रंपरित्यज्य त्वदुक्तन्यायेनैवप रित्यज्य श्रुतौ यतोवाइमानिभूतानिजायंतइत्यादिबहुतरश्रुतौ । अतःपूर्वोत्तरविरुद्धभाषित्वादुपेक्षणीयंपरकीयभाष्यमितिभावः ॥ १३८ ॥ युक्त्यंतरेणापिलक्षणस्यतटस्थतांदूषयति ॥ छंदसीति ॥ छंदसिवेदे । उभयथा क्वचिल्लौकिकमर्यादयाक्वचिदलौकि कमर्यादयाचास्तिप्रवृत्तिः । सभूमिं सेदुराजेत्यादेश्चप्रयोगस्यदर्शनात् । वेदेद्वेधेत्यनुक्त्वाछंदस्युभयथेतिवचनं स्वोक्तार्थेपाणिनि सूत्रंचस्मारयितुं । तथाच या उपादानपंचमीतिलोकेविहिता सावेदेनिमित्तपंचमीचभवति । अतोनसूत्रविरोधइतिभावः । कार्ये

जगज्जन्मादिकार्यें द्वयी क्वचित्कर्तृकारणेसतिकार्यं क्वचित्कर्तृकारणाभावेपिकार्य मितिद्विविधा। लक्षणस्य जन्मादिकारणत्वलक्षणस्य। तटस्थत्वेमायानिष्ठत्वे। मायायाएवजगत्कारणत्वंनब्रह्मणइत्यंगीकारइत्यर्थः। सर्वं महीमहीधरादिकं। अकर्तृकं कर्त्राख्यकारणरहितंस्यादितिसंबंधः। त्वन्मतेपिमायायाएवोपादानत्वेनकर्तृत्वानंगीकारात् ब्रह्मव्यतिरिक्तचेतनांतरस्यचसृष्टेःपूर्वमभावात्जगदकर्तृकमेवस्यात्। यदिचोपादानत्वमेवतटस्थं। कर्तृत्वंतुब्रह्मणोप्यंगीक्रियते। तर्हितदेवलक्षणमस्तु। उक्तरीत्याककर्तर्यपिपंचमीसंभवात्। सूत्रोक्तलक्षणंबलादुपादानेसमाकृष्याबद्धंपठित्वाकुचोद्यमंगीकरोतीतिन्यायेनकिमर्थंलक्षणस्यताटस्थ्यकरणमितिभावः ॥ १३९ ॥ दूषणांतरंचाह ॥ जिज्ञास्यइति ॥ लक्षणं त्वदभिमतलक्षणं जिज्ञास्ये अथातोब्रह्मजिज्ञासेतिजि

जिज्ञास्येलक्षणंनाभूदजिज्ञास्येस्ति यंतिकिं ॥ तद्ब्रह्मेत्युपदेश्यंकिंजिज्ञासाकस्यकथ्यतां ॥ १४० ॥

ज्ञास्यतयोक्तेब्रह्मणिनाभूत्। किंत्वजिज्ञास्येअज्ञानएवास्ति। अतःप्रकृतानुपयोगित्वादपित्वत्कल्पनमसंगतमितिभावः। दूषणांतरंचाह ॥ यंतीति ॥ यतोवाइमानिभूतानिजायंतइतिवाक्यखंडेऽज्ञानस्यैवप्रतिपाद्यत्वेयत्प्रयंतीत्यत्र किंयंति प्राप्नुवंति। नह्यज्ञानंतवापिमतेमुक्तप्राप्यं। तत्रब्रह्मणोवश्यंप्रतिपाद्यत्वेपूर्ववाक्येपितदेवप्रतिपाद्यंस्यात्। नत्वन्यत्। तथासतिवाक्ययोजनाऽयोगादितिभावः। दूषणांतरंचाह ॥ तद्ब्रह्मेति ॥ यत्पदेनप्रागुक्तंवस्तुतदितिपरामृश्यब्रह्मेत्युपदेश्यंकिं नह्यज्ञानंब्रह्मपदेनोपदेश्यमितिभावः। युक्त्यंतरंचाह ॥ जिज्ञासेति ॥ पूर्ववत्तत्पदेनपरामृश्य विजिज्ञासस्वेतिलोटाविहिताजिज्ञासाकस्य नहिब्रह्म



णोन्यस्यजिज्ञास्यतेतिभावः ॥ १४० ॥ श्रौतब्रह्मपदप्रयोगात्पुच्छस्यब्रह्मत्ववत्अत्रापिब्रह्मपदप्रयोगादेवजगत्कारणस्यब्रह्मत्वमित्याह ॥ यदीति ॥ तदालक्षणवदित्यादियोजना। यतःयस्मात्। इयंश्रुतिरनन्यार्था। उक्तरीत्याऽन्यार्थशून्या ॥ १४१ ॥ प्राक्पाणिनिसूत्रविरोधेआशंकितेतस्यैवसूत्रांतरात्समाधानंकृतं। अधुनागौतमसूत्रवत्श्रुतिप्रतिकूलार्थकथकंतत्सूत्रमेवोपेक्ष्यमित्याह ॥ अंतरिति ॥ अंतस्सूत्रंब्रह्मसूत्रं। उक्तंसूत्रंपाणिनिसूत्रं ॥ १४२ ॥ श्रुतितिरस्कृतिःयतोवाइमानीतिश्रुतितिरस्कारः। व्यासानुशासनात्जन्माद्यस्ययतइतिआनंदमयोभ्यासादितिचव्याससूत्रात्। लक्षणस्यतटस्थत्वं भूयाद्बहिर्भूयात्। आनंदमयं

यदिश्रुत्यापुच्छमेव ब्रह्म लक्षणवत्तदा ॥ श्रुतेर्बलाद्ब्रह्मभवेदनन्यार्थायतस्त्वियं ॥ १४१ ॥ अंत
स्सूत्रमिवोक्तंचबहिस्सूत्रंविसृज्यतां ॥ १४२ ॥ यदितेपाणिनेस्सूत्रे(भ)भाराच्छ्रुतितिरस्कृतिः ॥
लक्षणस्यतटस्थत्वंतर्हिव्यासानुशासनात् ॥ ब्रह्मानंदमयंभूयात्पुच्छंस्यात्तवपृष्ठतः ॥ १४३ ॥
अतःपुच्छश्रुतिस्तेभूद्ध्रस्वकौपीनपुच्छवत् ॥ एकंसंधित्सतोवाक्यमपरंच्यवतेयतः ॥ १४४ ॥

ब्रह्मभूयात्। पुच्छं कोशपुच्छत्वेनाभिमतंपुच्छंतवपृष्ठतस्स्यादितियोजना। व्याससूत्रविरोधात् आनंदमयस्यकोशतामंगीकृत्यतत्पुच्छस्यैवब्रह्मतावादंपृष्ठेनिक्षिप। अस्मदग्रेनप्रपंचयेतिभावः। व्यासपदेन वेदविस्तारार्थप्रवृत्तत्वाद्व्यासएववेदमर्यादांवेद। नतु पाणिनिः। अतोवेदार्थनिर्णयेव्याससूत्रमेवानुसर्तव्यमितिसूचयति। ईदृशंव्याससूत्रमुत्सृज्यतद्भाष्यकारित्वाभिमानवान्परसूत्रेकृतरतिस्त्वंपशुरेवेतिसूचयितुंचपुच्छंतवपृष्ठतस्स्यादित्युक्तं। अत्रपुच्छपदेनलांगूलमेवग्राह्यं ॥ १४३ ॥ अतःपूर्वोक्तनिमित्तात्।

तेपुच्छश्रुतिः । यतःयस्मात् । एकं सूत्रमुल्लंघ्यश्रुतिबलात्पुच्छस्यैवब्रह्मत्वं । अपरं पाणिनिसूत्रमाश्रित्यश्रुतिसूत्रोक्तलक्षणस्यत टस्थत्वकरणं । अतइतिपूर्वेणान्वयः ॥ १४४ ॥ प्रकारांतरेणापिदूषयति ॥ यदेति ॥ मूलभ्रमात्सूत्रमूलीभूतपुच्छश्रुतेरर्थभ्र मात् । संमतांतवाभिमतां टीका मेतच्छ्रुत्यर्थनिर्णयायकृतामानंदमयोभ्यासादितिसूत्ररूपां । मूलटीकापदाभ्यांटीकानुसारेणैव मूलार्थोज्ञेयः । तद्विरुद्धार्थंवदन्स्वयमेवभ्रांतइतिसूचयति । अतएवमूलभ्रमादित्युक्तं । मूलप्रमारुद्धां टीकात्वेनाभिमतत्वद्भा ष्यस्यमूलत्वेनाभिमतब्रह्मसूत्रार्थप्रमयारुद्धांविरुद्धांटीकांत्वद्भाष्यरूपां । यस्तुमूलभ्रांतार्थविरोधेनापिटीकांत्यजति तस्यमूलप्रमि

यदामूलभ्रमादेवटीकांत्यजसिसंमतां ॥ तदामूलप्रमारुद्धांटीकांकाकोपिनस्पृशेत् ॥ १४५ ॥
परिस्पंदक्रियामात्रंमास्तुवाव्याप्तवस्तुनः ॥ जगज्जन्मादिकरणक्रियाहेयाकुतोवद ॥ १४६ ॥

तार्थविरुद्धांटीकांकोवानेत्रद्वयवान्स्पृशेत् । अंततःएकनेत्रवान्काकोपिनस्पृशेदितिभावः ॥ १४५ ॥ ननुनिष्क्रियश्रुतिविरोधा त्कथंब्रह्मणिजगत्कारणत्वरूपक्रियावेशइत्यतआह ॥ परिस्पंदेति ॥ शंकैवेयंतावद्विवेचनीया । ब्रह्मजगत्करोतीत्युक्तेहिजगतः करणेउत्पत्तिरूपक्रियायांब्रह्मणोनिमित्ततैवलभ्यते । उत्पत्तिरूपासाक्रियातुजगन्निष्ठैव नतुब्रह्मनिष्ठा । अतोजगन्निष्ठजन्ममरणा दिक्रियाभावंब्रह्मणिप्रतिपादयंत्यानिष्क्रियत्वश्रुत्याकिंनश्छिन्नं । जगत्कर्तृतायांच जगन्निष्ठतत्तत्क्रियाकरणादिकारणजातप्रयो जकत्वरूपस्वातंत्र्यस्यैवलाभात्कानोहानिः । प्रत्युतस्वातंत्र्याख्यमहामहिमलाभएव । स्वतंत्रःकर्तेतिस्मरणात् । अतश्श्रुतेरनुकू

लतया प्रतिकूलत्वशंकैवेयं स्वाज्ञानमूलत्वात्प्रेक्षावद्भिरुपेक्षणीया । अतोभ्युपगमवादेनैवनिष्क्रियश्रुतेरर्थांतरावकाशदानमुत्त रंचेतिज्ञातव्यं । व्याप्तवस्तुनःपरिस्पंदक्रियामात्रंमास्तुवेत्यनेनायमप्यंगीकारवादएव । नवस्तुस्थित्या । अचिंत्यैश्वर्यशक्त्याऽणि माद्यष्टैश्वर्यशक्त्या अणोरणीयान्महतोमहीयानितिश्रुत्याचाणुमूर्तीनांमहामूर्तेश्चसत्त्वेनगमनागमनादेरपिसंभवात् । जगज्जन्मा दिकरणक्रिया जगज्जन्मादिकरणानुकूलज्ञानेच्छाप्रयत्नादिरूपोव्यापारः ॥ १४६ ॥ कालवत् यथाकालस्यव्याप्ततयाक्रियाशून्य स्यापिनिमित्तत्वंतथेतिभावः । अत्रास्मिन्नधिकरणे ॥ १४७ ॥ प्रकारांतरेणापिलक्षणताटस्थ्यंदूषयति ॥ लक्षणस्येति ॥ तव

निमित्तमस्तुतद्ब्रह्मजगज्जालस्यकालवत् ॥ उपादानत्ववार्ताचनात्रश्रौताध्वशोधने ॥ १४७ ॥
लक्षणस्यतटस्थत्वकथापिव्याहतातव ॥ यद्व्याप्तंलक्ष्यमात्रेस्यादलक्ष्येनैववृत्तिमत् ॥ १४८ ॥
तल्लक्षणं नास्यसाधारणोधर्मोपितत्किल ॥ कथमन्यगतोधर्मोलक्षणंस्यात्तदीर्यतां ॥ १४९ ॥

तटस्थत्वकथेतिसंबंधः । तामेवव्याहतिंदर्शयितुंलक्षणस्वरूपंनिरूपयति ॥ यद्व्याप्तमिति ॥ यद्वस्तुलक्ष्यमात्रेसकललक्ष्येषु । अलक्ष्ये लक्ष्यादतिरिक्ते । वृत्तिमद्वर्तमानं । तल्लक्षणं तदेवलक्षणं । अस्यघटादेर्धर्मिणस्साधारणः इतरसाधारणः द्रव्यत्वपृथिवीत्वादिः । त ल्लक्षणंनकिलेतिसंबंधः । अतिव्याप्तत्वादितिभावः । एवमेकशफत्वं रक्तघटत्वं वा असंभवादव्याप्तत्वाच्चनलक्षणमित्यप्यनुसंधेयं । अस्त्विदंलक्षणंप्रकृतेकिमागतमित्यतआह ॥ कथमिति ॥ अन्यगतः ब्रह्मणोन्यस्मिन्जडेऽज्ञानेस्थितःधर्मः जगदुपादानत्वं ।

ब्रह्मणिसर्वथाऽभावेनासंभवात्। अन्यत्रसत्त्वेनातिव्याप्तेश्च। अतोयदलक्षणंतदेवलक्षणमित्युक्तत्वाद्व्याहतिः। अन्यथाघटस्या प्यातानवितानात्मकत्वंलक्षणंस्यादितिभावः ॥ १४८ ॥ १४९ ॥ ननुयथाकाकवद्देवदत्तगृहमित्यत्रान्यसाधारणोपिकाकउप लक्षणं तथेहापिस्यादित्यतआह ॥ काकोपीति ॥ गृहस्थस्यगृहमेधिनोदेवदत्तस्यगृहस्थःगृहेस्थितः। काकोपिहिदेवदत्तगृहेयदा तिष्ठतितदैवोपलक्षकोनतुगृहांतरस्थितः। सोपिगोर्गोत्वमिवनलक्षणं किंतूपलक्षणमेव। तथासतिकाकवदितिपदप्रयोगस्यैवायो गादितिभावः। तस्मिन्काके। तेन गृहाद्गतेनकाकेन। उत्तृणत्वं ऊर्ध्वंगतंतृणंयस्यतत्तस्यभावःउत्तृणत्वं। बोधकं देवदत्त

काकोपिहिगृहस्थस्यगृहस्थोबोधयेद्गृहं ॥ गतेतस्मिंस्तेनकृतमुत्तृणत्वंहिबोधकं ॥ १५० ॥
कदाचिद्गुरुसंबंधःकुरुसंबंधएवच ॥ गुरोष्टीकाकुरोःक्षेत्रमित्यत्रापिहिवर्तते ॥ १५१ ॥

गृहस्यज्ञापकं। यदाकाकोदेवदत्तगृहेतिष्ठतितदागृहांतरेचन। एवंचासाधारणत्वात्सएवतदाबोधकः। गृहांतरंगतस्तुसएवका कोनपुनर्लक्षकः। तत्रतस्मिन्गृहेऽवर्तमानत्वमेवनिमित्तं। किंतुतेनतस्मिन्नेवगृहेकृतंयदुत्तृणत्वंतदेवपुनस्तद्गृहेलक्षकं। तस्यतत्रै ववियमानत्वात्। गृहांतरेऽभावाच्च। तदपिगृहांतरेतेनैवकाकेनकृतंचेल्लक्ष्यादन्यत्रगमनान्नलक्षकं। एवंचात्रापितस्मिन्नेवगृहेवि द्यमानोगृहांतरेचाविद्यमानएवधर्मस्तद्गृहबोधकइत्यायातं। त्वदभिलषितस्यतुब्रह्मणिसर्वथाऽविद्यमानस्याज्ञानएवविद्यमानस्यज गदुपादानत्वस्यब्रह्मलक्षणत्वेनकिंचिन्निदर्शनमितिभावः ॥ १५० ॥ ननुगुरोष्टीका कुरोःक्षेत्रमित्यत्रेदानीमविद्यमानस्यापिगुर्वा



देर्यथाटीकादिव्यावर्तकत्वंतथात्रापिस्यादितिमंदाशंकांनिराकरोति ॥ कदाचिदिति ॥ कदाचि द्ग्रंथस्यकरणसमये क्षेत्रस्यपाल नसमयेच। इदमप्युपलक्षणं। टीकायांसर्वदाविद्यमानंगुरुकृतत्वं क्षेत्रेचाद्यापिविद्यमानंकुरुपालितत्वंच। तत्रतत्रविद्यमानमेवत स्यतस्यव्यावर्तकमुत्तृणत्वंगृहस्येवेत्यपिद्रष्टव्यं ॥ १५१ ॥ सर्वथातदसंबद्धस्यतत्रोपकारकत्वाभावेलौकिकाभाणकमाह ॥ महि ष्याइति ॥ सर्वथासंबंधाभावदर्शनायमहिषस्येत्यनुक्त्वागोवृषस्येत्युक्तं। आभाणकांतरमप्याह ॥ काकस्येति ॥ तवप्रा

सर्वथातदसंबद्धस्तत्रोपकुरुतेकथं ॥ महिष्याःक्षीरवत्त्वेस्याद्गोवृषस्यतुकिंफलं ॥
काकस्यकार्ष्ण्यौऽडवलःप्रासादस्यान्नचेत्तव ॥ १५२ ॥ किंचोपलक्षणंह्येतल्लक्षणंतु
नतादृशं ॥ घटस्यलक्षणंपश्यपटस्यब्राह्मणस्यच ॥ १५३ ॥ व्यतिरेक्यनुमानंहिल
क्षणं पक्षधर्मता ॥ व्यावृत्तिश्चविपक्षेभ्यस्तस्यचावश्यकीनकिं ॥ १५४ ॥ ॥

सादइतिसंबंधः ॥ १५२ ॥ युक्तिरस्तीतिकृत्वासर्वमिदंचर्चितं। वस्तुतस्तुलक्षणगुणदोषचिंतायांनेदमुदाहरणमित्याह॥किंचेति॥ एतत्काकादिकं। लक्षण मसाधारणधर्मत्वेनसर्वैर्व्यवह्रियमाणमित्यर्थः। तादृशमुपलक्षककाकादिसदृशं। घटस्यपृथुबुध्नोदरा कारत्वं। पटस्यातानवितानात्मकत्वं। ब्राह्मणस्यषट्कर्मार्हत्वंचलक्षणंपश्येत्यर्थः। नहीदमीदृग्वासर्वलक्षणंतत्रसर्वथाऽवर्तमानमन्य त्रैवचवर्तमानंदृष्टं। तथासत्येकशफत्वंगोर्लक्षणंकिमितिनावक्ष्यन् ॥ १५३ ॥ ननुलक्षणस्याव्याप्त्यतिव्याप्त्यसंभवविधुरत्वेकिं

कारणमित्यतस्तद्बीजंदर्शयति ॥ व्यतिरेकीति ॥ हियस्माल्लक्षणंव्यतिरेक्यनुमानं । तस्यव्यतिरेक्यनुमानस्यपक्षधर्मतापक्षव्याप्तता । भागासिद्ध्यनैकांतिकत्वस्वरूपासिद्धिपरिहारायव्यतिरेकिहेतुभूतलक्षणस्योक्तदोषत्रयवैधुर्यमावश्यकमितिभावः ॥१५४॥ सूत्रयोजनाऽयोगाच्चनलक्षणस्यतटस्थत्वमित्याह ॥ कथमिति ॥ सूत्राभिमतयोर्जन्मादिसूत्रेऽभिमतयोःयत्तदोर्यच्छब्दतच्छब्दयोः । तच्छब्दस्यस्पष्टमनुक्तत्वादभिमतयोरित्युक्तं । यत्तदोर्नित्यसंबंधइतिवचनात्‌यच्छब्दंप्रयुंजतस्तच्छब्दोप्यभिमतोभवत्येव । वृत्तिर्योजना । केहकथंतेत्यतआह ॥ यदुक्तेति ॥ अस्यजन्मादियतोभवतितद्ब्रह्मेतिहिसूत्रयोजना । इयंचलक्षणस्याज्ञानगतत्वे

कथंसूत्राभिमतयोर्यत्तदोर्वृत्तिरुच्यतां ॥ यदुक्तलक्षणोपेतंतद्ब्रह्मेतिहियोजना
॥ १५५ ॥ तल्लक्षणस्यताटस्थ्येज्ञेयतापितटेतव ॥ १५६ ॥ यदिलक्षणवन्माया
भ्रांत्यधिष्ठानतैवते ॥ ब्रह्मलक्षणमाशास्यंतर्हिसूत्रकृतःप्रभोः ॥ १५७ ॥

कथंघटेतेतिभावः ॥ १५५ ॥ दोषांतरंचाह ॥ तदिति ॥ तत्तस्मात्‌ब्रह्मणियोजनाऽयोगात्‌ । अज्ञानस्यैवयोजनीयत्वाच्च । तटेऽज्ञाने । यतोजन्मादि तदज्ञानमितिसूत्रवाक्यपर्यवसितार्थेसति प्राचीनसूत्रोक्तज्ञेयतापितस्यैवस्यात्‌ । अन्यथासूत्रयोरसंगतेरितिभावः ॥ १५६ ॥ ननुजगदुपादानत्वमेवनलक्षणमुच्यते । येनोक्तदोषस्सर्वोपिस्यात्‌ । किंतुजगदुपादानमायारोपाधिष्ठानत्वमेवब्रह्मलक्षणमत्राभिप्रेतमितिशंकामनूद्यदूषयति ॥ यदीति॥ लक्षणवत्यामायायाभ्रांतेरारोपस्याधिष्ठानतैव । तर्हि प्रभोःकर्तुम

न्यथाकर्तुंसमर्थस्यसूत्रकृतः आरोपोस्यायतइति वचने सूत्रकरणे कादरिद्रतेतियोजना । अल्पाक्षरत्वादेरुभयत्रसाम्यात्पूर्वोत्तरसूत्रसंगतेरत्राधिक्याच्चेतिभावः । दरिद्रतेतिवदता स्वगृहेधनरहितदरिद्रस्यैवपरगृहधनाभ्यर्थनंदृष्टं । त्वद्रीत्यैवोक्तस्वनिष्ठलक्षणसंभवा द्ब्रह्म कुतस्त्वव्यावृत्त्यैअन्यलक्षणमर्थयतइतिकल्पनेतिसूचितं । दोषांतरंचाह ॥ अंतरेति ॥ अंतरेतिमध्यवाचकमव्ययमिदं । अंतरांतरेणयुक्तइतिवचनात् ब्रह्मसूत्राणीतिद्वितीयाषष्ठ्यर्थे ब्रह्मसूत्राणांमध्यइत्यर्थः । अब्रह्मअज्ञानं । एवं सत्यस्यसूत्रस्याज्ञानसूत्रत्वेनब्रह्मसूत्रत्वाभावात् चकारब्रह्मसूत्राणियेषांसूत्रत्वमंजसेतिस्मृतिविरोधश्चत्वद्व्याख्यानस्येतिभावः ॥

आरोपोस्यायतइतिवचनेकादरिद्रता ॥ अंतराब्रह्मसूत्राणिकिमब्रह्मापिसूत्रितं<br>
॥१५८॥ श्रुतेरनुस्मृतौचस्यात्तटस्थंनैवलक्षणं ॥ यत्पदोदितमेवार्थंतत्पदेनहिसाजगौ<br>
॥ १५९ ॥ एवंचनिर्गुणत्वोक्त्यातटस्थंलक्षणंनते ॥ आरोपाधिष्ठानताख्यधर्मस्याव<br>
श्यकत्वतः ॥ तटस्थमायायोगस्यबोध्यत्वादेरवर्जनात् ॥ १६० ॥ ॥

॥ १५७ ॥ १५८ ॥ जन्मादिकारणत्वंतटस्थमितिवदतःश्रुतिविरोधमप्याह ॥ श्रुतेरिति ॥ यतोवाइमानिभूतानिजायंतइतिश्रुतेः । साश्रुतिः । यतइतिप्राग्जगत्कारणत्वेनयत्पदोदितंवस्तु तद्ब्रह्मेतिब्रह्मार्थकतत्पदेन । श्रुतिर्हियत्पदेनजगत्कारणंप्रस्ताव्य तत्पदेनतस्यैवब्रह्मतामब्रवीत् । अतःप्राक्प्रस्तुतंजगत्कारणमपिब्रह्मैवश्रुतेरभिप्रेतं । तत्त्यागेश्रुत्यननुसारित्वंचपरस्यस्यादिति भावः ॥ १५९ ॥ ननुनिर्गुणत्वेनब्रह्मणिलक्षणायोगात्तटस्थलक्षणानुसरणमित्यतआह ॥ एवंचेति ॥ एवंचोक्तत्वद्रीत्यैवतेमते

निर्गुणत्वोक्त्यालक्षणंतटस्थमित्यपिनेतियोजना । एवंचेत्युक्तांतद्रीतिमेवदर्शयति ॥ आरोपेति ॥ सूत्रोक्तजगदुपादानमाया रोपाधिष्ठानत्वाख्यधर्मस्यावश्यकत्वतः । तटस्थलक्षणंवदतापिअंतेऽवश्यमंगीकृतत्वात् । अन्यथालक्षणकथनस्यप्रकृतोपयोगा भावादितिभावः । आवश्यकत्वतइतिवदता आरोपाधिष्ठानत्वाख्यधर्मस्यापिब्रह्मण्यभावेनिरधिष्ठानभ्रांतेस्त्वयाप्यनंगीकारात् भवदभिमतजगदारोपोपिनस्यात् । अतोप्ययंधर्मस्त्वयैवांगीकार्यइतियुक्तिस्सूचिता । अंततस्सोपिनांगीक्रियतइतिचेत् । सत्यं । इदमप्यंततोनांगीक्रियतां । आरोपरूपकार्यनिर्वाहायव्यावहारिकाधिष्ठानत्वाख्यधर्मांगीकारवत्जगदाख्यकार्यनिर्वाहायव्याव

किंचनिर्गुणताध्रौव्येलक्षणस्यतटस्थता ॥ लक्षणस्यचताटस्थ्येनिर्गुणत्वंध्रुवंभवेत् ॥
आतोन्योन्याश्रयःस्यान्नपरमात्मपदाश्रयः ॥ १६१ ॥ ॥ ॥

हारिकएवतत्कर्तृत्वाख्यधर्मोपिब्रह्मण्यंगीक्रियतां । तटस्थमपिलक्षणंतेमतेव्यावहारिकमेवनपारमार्थिकं । परमार्थतोपिधर्माभाव परैवास्तुनिर्गुणश्रुतिः । त्वंतुयथावस्थितसूत्रार्थकथनेनब्रह्मज्ञानायब्रह्मण्येवलक्षणकथनेनचेषद्वादोषज्ञसभायोग्योभवेतिभावः । धर्मांतरमप्यावश्यकमित्याह ॥ तटस्थमायायोगस्येति ॥ तवमतेमायायाश्चिन्मात्राश्रितत्वात्तत्संबंधाख्यधर्मस्य चरमापरोक्ष ज्ञानेब्रह्मणोबोध्यत्वाख्यधर्मस्यचावर्जनात्तटस्थंलक्षणंनेतिपूर्वेणान्वयः ॥ १६० ॥ निर्गुणत्वबलात्लक्षणाताटस्थ्यंवदतोन्यो न्याश्रयोपिस्यादित्याह ॥ किंचेति ॥ निर्गुणताध्रौव्ये निर्गुणश्रुत्युक्तनैर्गुण्यस्यश्रुतिमुख्यार्थतयाध्रुवत्वे । गुणरूपलक्षणस्यत





त्रवक्तुमशक्यत्वादितिभावः । लक्षणस्य यतोवाइमानिभूतानिजायंतइतिश्रुत्युक्तलक्षणस्य । निर्गुणत्वश्रुत्याएतच्छ्रुतिबाधेसति लक्षणरूपधर्मस्यान्यनिष्ठता । अन्यथाश्रुत्युक्तत्वाविशेषाल्लक्षणमपिब्रह्मण्येवध्रुवंस्यात् । लक्षणस्याध्रुवत्वेसिद्धे एतच्छ्रुतेरतत्वावे दकतयानिर्गुणश्रुत्यबाधः । अन्यथातवाप्यपेक्षितलक्षणप्रतिपादकतयाप्रबलैतच्छ्रुतेरेवनिर्गुणत्वश्रुतिबाधकतयानतदुक्तनैर्गुण्य ध्रौव्यमित्यन्योन्याश्रयः । एवंचवृथाब्रह्मनिंदांकुर्वतस्तवगृहांधकूपादुद्धारकाभावेनभार्याश्रयस्तव त्वदाश्रयस्तस्याइत्यन्योन्याश्र यएवाभूत् । नपरमात्मपदाश्रयइतिध्वनितार्थमादायपरिहासः ॥ १६१ ॥ किंचास्मच्छ्रुत्यात्वच्छ्रुतिबाधएवयुक्तइतिभावेनाह

श्रुतिमात्रबलोसित्वंश्रुतिसूत्रबलावयं ॥ १६२ ॥ अथोपादानताप्रासापाणिनेरनुशासनात् ॥
साचायुक्ताब्रह्मणीतितटस्थंलक्षणंयदि ॥ इदंचतर्हियुक्तंनेत्युत्प्रेक्षाजायतेमम ॥ १६३ ॥
व्यासस्यशासनंज्यायःपाणिनेरनुशासनात् ॥ अमुख्यमेवबाध्यंस्यान्नामुख्यान्मुख्यबाधनं ॥ १६४ ॥

॥ श्रुतिमात्रेति ॥ १६२ ॥ शंकांतरमनूद्यदूषयति ॥ अथेति ॥ अस्मदुक्तबहिरंगत्वयुक्त्यानिराकृतत्वाद्धाताहतं । तेनैवच्छंद सिविधांतरानुशासनादप्रासंयत्पाणिनेरनुशासनंतस्मादित्याक्रोशप्रदर्शनायषष्ठ्याअलुक्समासोयं । प्रासाश्रुतौप्रासा । सा उपादा नत्वाख्यलक्षणप्रतिपादिकाश्रुतिःब्रह्मण्ययुक्तेतिलक्षणंतटस्थमितियोजना । पाणिनिसूत्रबलात्भवतांश्रुतिरपिदुर्बलेतिभावः । पूर्वोक्तयुक्त्याबाधितत्वात्मंदाशंकेयमितिज्ञापनायाऽऽक्रोशबललब्धंविशेषणद्वयं । इदं त्वदुक्तंप्रमेयं ॥ १६३ ॥ कथंयुक्तंनेत्य तआह ॥ व्यासस्येति ॥ व्यासस्यनारायणावतारतयासर्वज्ञत्वादितिभावः । अमुख्यात्पाणिन्यनुशासनान्मुख्यस्य व्यासानु

शासनस्य बाधनं मुख्यबाधनं॥१६४॥सः व्यासः। इमंधर्मंजगत्कारणत्वरूपधर्मं। श्रौतं श्रुत्याब्रह्मण्याम्रेडितं। अतोव्यासानुशासन स्यप्राबल्यात्। तत्पाणिनिसूत्रं। अन्यत्रगोमयाद्वृश्चिकोजायतइत्यादौलौकिकप्रयोगे। लक्षणंब्रह्मणोन्यत्र न नगच्छेदित्यर्थः। एवंचो त्तरेवैचित्र्यात्पुनराशंकेतिभावः। व्यासानुशासनमेवज्यायइत्यत्रलौकिकदृष्टांतमाह॥ जारेति॥ ब्रह्मसूत्रकर्तुर्व्यासस्यवेदांतमतमू लाचार्यत्वादितिभावः ॥१६५॥ ननूपादानत्वमेवलक्षणंभवतुतच्चब्रह्मण्येवास्तुएवंचसूत्रद्वयमप्यनुसृतंस्यादितितटस्थशंकांनिराक

सचश्रौतमिमंधर्मंब्रह्मण्यनुशशासहि ॥ अतःपाणिनिसूत्रंतदन्यत्रस्यान्नलक्षणं ॥ जारा
नुसरणाज्ज्यायःपत्युःपादोपसर्पणं ॥ १६५ ॥ अविकारित्वतस्तस्यनैवोपादानतामता ॥
अतःकर्तैवजगतश्श्रुतौसूत्रेचकथ्यते ॥ १६६ ॥ निष्क्रियत्वश्रुतिश्चास्यक्रिययाशास्त्यलेपनं
अकर्तारंहितंप्राहुर्यःकृत्वापिनलिप्यते ॥ श्रुतिसूत्रोक्तकर्तृत्वबाधाययततेनसा ॥ १६७ ॥

रोति ॥ अविकारित्वतइति ॥ अतः उपादानत्वायोगात् ॥ १६६ ॥ निष्क्रियत्वश्रुतेरर्थांतरमाह ॥ निष्क्रियत्वश्रुतिरि ति ॥ अस्यब्रह्मणःक्रिययाजगत्सर्जनसंहारादिक्रियया। अलेपनं पुण्यपापादिलेपाभावं । तत्रयुक्तिमाह ॥ अकर्तारमिति ॥ सानिष्क्रियत्वश्रुतिः श्रुतिसूत्रोक्तंयत्कर्तृत्वंब्रह्मकर्तृत्वं तस्यबाधायनयतते। सूत्रसहितैतच्छ्रुतेःप्रबलत्वात्कर्मलेपाभावपरैवसाश्रु तिः। कार्यकारणशब्दाश्चान्योन्यंसंकीर्यंतइतिवचनात्। क्रियाशब्दस्यस्वकार्यलेपपरत्वसंभवादितिभावः ॥ १६७ ॥ श्रुतिस्सू

त्रानुसारेणप्रवर्ततइत्यत्रलौकिकदृष्टांतमाह ॥ मणिरिति ॥ प्रवर्ततेसूत्रंप्रविशति । एवंश्रुतिरपिस्वोद्धारकव्यासोक्तमार्गेणैवप्रव
र्ततइतिभावः । विपक्षेबाधकमाह ॥ नचेदिति ॥ अस्यलोकस्यकागतिरित्याकाशइतिहोवाचेतिश्रुतावाकाशशब्दोक्तं परब्रह्म
कथं । रूढिप्राप्तलोकप्रसिद्धजडाकाशपरित्यागे आकाशस्तल्लिंगादितिव्यासवाक्यमेवहिकारणं । श्रुतेर्व्यासवाक्याननुसारित्वेइद
मपिनस्यादितिभावः । वदेत्यनेनत्वयाप्यस्मिन्नधिकरणेएवमेवभाषितमितिसूचयति । सःआकाशः । अत्रहिसूत्रबलादेवश्रुतेःप्र
सिद्धार्थादन्यथीकरणमितिभावः ॥ १६८ ॥ तत्तस्मात् आकाशाधिकरणेत्वयैवसूत्रबलेनश्रुतेरन्यथीकरणात् । आनंदमयाधि

मणिःप्रवर्ततेमालाकारसंदर्शिताध्वना ॥ नचेदाकाशशब्दोक्तंपरंब्रह्मकथंवद ॥
आकाशश्रुतिसामर्थ्याज्जडाकाशःकथंनसः ॥ १६८ ॥ तदानंदमयंकोशंकर्तुंस्वेननि
रूपितं ॥ गुणेत्वन्यायकॢप्त्याख्यन्यायंस्वयमहोजहौ ॥ १६९ ॥ ॥

करणेआनंदमयंकोशंकर्तुंस्वेननिरूपितं गुणेत्वन्यायकॢप्त्याख्यं न्यायं । कॢप्तिःकल्पना तद्रूपन्यायं स्वय मानंदमयाधिकरणभा
ष्यकारएवजहौ आकाशाधिकरणेत्यक्तवान् । अस्मिन्नधिकरणेगुणत्वेनाभिमतसूत्रबलेनप्रधानत्वेनाभिमतश्रुतेस्स्वेनैवबाधनात् ।
अतःपाणिनिसूत्रबलेनजन्मादिश्रुतिबाधंकुर्वन्नुत्तराधिकरणेचव्याससूत्रबलेनाकाशश्रुतिबाधंकुर्वन्मध्येआनंदमयाधिकरणेश्रुत्यैव
सूत्रबाधंचकुर्वन्तत्रैवप्रबलत्वेनाभिमतानंदमयश्लोकरूपश्रुत्युपेक्षांचकुर्वन्पूर्वोत्तरज्ञानशून्यःमध्येप्यर्धजरतीयमाचरन्कथंनोन्मत्त

इतिभावः ॥ १६९ ॥ स्थलांतरेपिस्वोक्तन्यायविस्मरणंदर्शयति ॥ प्रधानइति ॥ यद्यस्मात् । अस्मिन्जन्माद्यस्ययतइतिसूत्रे अन्यायमर्थपरित्यागरूपंबाधं । अन्यःपाणिनिः । तस्मादत्रापिस्वोक्तन्यायंस्वयमेवजहाविवितिपूर्वेणसंबंधः ॥ १७० ॥ प्रागुक्तदूषणेषुकिंचित्किंचिद्बुद्धावारोहायसंकलय्यानुवदन्दूषणांतरंचाह ॥ सइति ॥ अत्रश्लोकद्वयंस्पष्टं ॥ १७१ ॥ ॥ १७२ ॥ यतःयस्मात् । शब्दस्यानुपपत्तितः पंचम्यंतयतःशब्दस्यानुपपत्तितः । अर्थानुपपत्तिः । जात्येकवचनमिदं ।

प्रधानेब्रह्मसूत्रेस्मिन्यदन्यायंचिकीर्षति ॥ गुणभूतान्य(सूत्रा)शास्त्रार्थेबहुमानपुरस्कृतः ॥ १७० ॥ सइदंसर्वमसृजतेतिश्रुतिसमाख्यया ॥ कर्तृत्वमिहहेतुत्वंनोपादानत्वमिष्यते ॥ १७१ ॥ वेदेवेदानुसरणंपाणिनेश्चस्थलेस्थले ॥ यतश्चयतइत्येतत्पदंसार्वविभक्तिकं ॥ १७२ ॥ यतोर्थानुपपत्तिश्चशब्दस्यानुपपत्तितः ॥ प्रबला लक्षणावृत्तेर्नचेदवसरःकथं ॥ १७३ ॥ ॥ ॥

ब्रह्मरूपार्थसंग्रहेयाअनुपपत्तयःपूर्वोक्तास्ताइत्यर्थः । प्रबला अवश्यंपरिहार्येत्यर्थः । नचेत् अर्थानुपपत्तेःप्राबल्यंनचेत् । लक्षणावृत्तेः प्रवाहादन्यत्रानुपपन्नगंगापदेनैव घोषावासत्वरूपार्थघटकतीररूपार्थप्रतिपादनरूपलक्षणावृत्तेरवसरःकथं नकथंचित् । शब्दानुपपत्तिंसोढ्वाप्यर्थानुपपत्तिपरिहारायैवलक्षणावृत्त्याश्रयणात्अर्थानुपपत्तिरेवप्रबलेतिभावः ॥ १७३ ॥ उपक्र



माननुसारित्वाच्चनास्याश्श्रुतेरुपादानत्वमर्थइत्याह ॥ ब्रह्मेति ॥ अधीहिभगवोब्रह्मेतिब्रह्मज्ञानेच्छया । सुतंभृगुंप्रति । पितावरुणः । नात्रविप्रलंभावसरइतिसूचनायपितेत्यादिपदं । अतएवश्रुतिरपियथावस्थिततत्वमेवोत्तरत्रकथ्यतइतिसूचनाय भृगुर्वैवारुणिः । वरुणंपितरमित्याह । वरुणस्यापत्यंहिवारुणिः । बोध्येब्रह्मण्यसंभवि सर्वथाऽवर्तमानं । अन्यग मज्ञानए वविद्यमानं । लक्षणं जगदुपादानत्वरूपं कुतःकारणाद्वदेत् । नकुतोपि । भगवइतिसंबोधितत्वेनविपरीतार्थकथनहेतुभूताज्ञानकरणापाटवादिदोषाभावस्यसूचितत्वात् । पितृपुत्रत्वोक्त्या अधीहीतिवेदाध्ययनस्यैवप्रार्थितत्वेनयत्किंचिल्लोकवार्तादिकंनकथयेति अध्यापयेतिवक्तव्येऽधीहीतिकथनेनत्वयायथागुरुमुखात्पठितंतथैवकथयेति नियतात्मनेपदिनःपरस्मैपदित्वक

ब्रह्मजिज्ञासयाप्राप्तंसुतंप्रतिपिताकुतः ॥ अन्यगंलक्षणंब्रूयाद्बोध्येब्रह्मण्यसंभवि ॥ १७४ ॥
स्वगृहेदीपिकाभावेप्रार्थयंतेन्यदीपिकां ॥ सतिब्रह्मस्थकर्तृत्वेतटस्थंसकुतोवदेत् ॥ १७५ ॥

रणेनचमभयथामोक्षादिफलंभवतितथैवकथयेति सूचनायाविप्रलिप्साख्यदोषाभावस्योक्तत्वात् । ब्रह्मपदेनब्रह्मणोगुणसंपूर्णत्वकथनेन तन्निष्ठलक्षणदारिद्र्याभावस्यचसूचितत्वात्यथावस्थितब्रह्मलक्षणमेवपृष्टं । तस्माएतत्प्रोवाचेत्यत्रप्रेत्युपसर्गबलात् गुरुणाचकथितंनत्वतिव्याप्तमसंभविचलक्षणंपृष्टमुक्तंवेतिभावः । लक्षणदोषत्रयमपिसूचयितुंमूलेप्यन्यगमसंभवीत्युक्तं । संपदस्य सम्यग्भवनंनेतिप्रतियोगिपक्षपातेऽव्याप्तिबोधकत्वात् । भवनंसम्यक्सर्वथानेत्यभावपक्षपातेऽसंभववाचित्वाच्च ॥१७४॥ स्वनिष्ठलक्षणसद्भावेतटस्थलक्षणकरणमन्याय्यमित्येतत्सदृष्टांतमाह ॥ स्वगृहइति ॥ साक्षाद्व्यतिरेकदृष्टांतोयं । अर्थादन्व

यीच ॥ १७५ ॥ निमित्तांतरमप्याह ॥ मोक्षोपयोगीति ॥ १७६ ॥ अस्मिन्नर्थेश्रौतप्रबलयुक्त्यंतरंचाह ॥ आनंदादेवेति ॥ यंधर्मंनिरणयत्अन्ययोगव्यवच्छेदपूर्वकंब्रह्मण्येवनिर्णीतवान् । सः धर्मः । अन्यंपदार्थं ॥ १७७ ॥ अधुनाध्रुवमपायेऽपादानमितिसूत्रेणैवसर्वत्रपंचमीसंभवात्जनिकर्तुःप्रकृतिरितिसूत्रंव्यर्थमेवेत्याह ॥ अपायइति ॥ अपाये स्वस्मादन्यत्रापगमने अवधिभूतं यद्ध्रुवं पूर्ववत्स्थिरतयाविद्यमानं तत्रतस्मिन् वृक्षात्पर्णंपततीत्यत्रपर्णपतनावधिभूतेवृक्षइत्यर्थः । अपाये सृष्ट्यर्थबहिष्करणे ताद्दग्वृक्षवद्ध्रुवः ॥ १७८ ॥ अतएतत्सूत्रार्थत्वात् । तेनैवसूत्रेण ध्रुवमपायेऽपादानमितिसूत्रेण जनिकर्तुःप्रकृतिरितिसूत्रंजनि

मोक्षोपयोगिज्ञानायसाक्षान्मोक्षविरोधिनि ॥ अज्ञानेस्थितदुर्धर्मंकोज्ञानप्रस्तुतोवदेत् ॥ १७६ ॥
आनंदादेवविज्ञानादेवेतियमसौभृगुः ॥ ब्रह्मपश्यन्निरणयत्कथंसोन्यंगतोवद ॥ १७७ ॥
अपायेऽवधिभूतंयद्ध्रुवंतत्रास्तिपंचमी ॥ स्वोदराचप्रधानस्यापायेताद्दक्सृजन्प्रभुः ॥ १७८ ॥
अतस्तेनैवसूत्रेणपंचमीपरमात्मनि ॥ जनिधातुप्रवेशोपियतोनविकृतोह्यसौ ॥ १७९ ॥

धातुसमायोगःप्रकृतिपदोक्तोपादानत्वंचयत्राऽस्तितत्रैवप्रवर्तते । यत्रतुजनिधातुसमायोगेपिप्रकृतिपदोक्तोपादानत्वंन । तत्रतत्सूत्रंनप्रवर्तते । उक्तनिमित्तद्वययोरेकनिमित्ताभावेसूत्रस्यावसराभावात् । परमात्माच नजायमानस्यजगतःप्रकृतिरावयोर्मते निर्विकारस्यब्रह्मणःउपादानत्वाभावात् । अतःपूर्वसूत्रेणैवात्रपंचमीतिभावः । कथमन्यथाप्रादुर्भावार्थकजनिधातुसमायोगेप्यंधकारस्थोघटोदीपाज्जायतइत्यत्रनिमित्तेपिपंचमीतिभावः । एतदेवविशदयति ॥ जनिधात्विति ॥ यतःयस्मात् । असौपरमात्मा

॥ १७९ ॥ अत्रसूत्रे । प्रकृतिशब्दतःप्रकृतिशब्देन । सः पाणिनिः । तस्य निमित्तद्वयघटितसूत्रस्य । अत्रब्रह्मणि ॥ १८० ॥ उपादानेपिपंचम्याएवाभावात्नास्यसूत्रस्यावसरइत्याह ॥ कार्याकारेणेति ॥ अस्मान्मृत्पिंडात्क्षीराद्वा । इदं घटादिकं कश्च नन्व्यवहरतीतिसंबंधः ॥ १८१ ॥ श्रृंगाच्छरोजायतइत्यत्रविक्रियमाणश्रृंगैकदेशेपंचमीप्रयोगाभावात्नात्रसूत्रस्यावकाशइत्याह

जनिकर्तुःप्रकृतिरित्यत्रप्रकृतिशब्दतः ॥ उपादानंतुसब्रूतेतस्यचावसरोत्रन ॥ १८० ॥
कार्याकारेणविकृतेनोपादानेतुपंचमी ॥ मृद्घटोजायतेक्षीरंदधिजातमितिक्षितौ ॥
लोकाव्यवहरंत्यस्मादिदंत्वितिनकश्चन ॥ १८१ ॥ श्रृंगस्याप्येकदेशस्यशराकारेणवि
क्रिया ॥ तत्राप्यविकृतेभागेपंचमीविक्रियावधौ ॥ १८२ ॥ साचतेनैवसूत्रेणतस्मात्त्व
मिवनःप्रभौ ॥ विरोधाचरणात्सूत्रंचित्रंतद्यत्रकुत्रचित् ॥ १८३ ॥ अवकाशंनलभते
व्यर्थतामर्थतोगमत् ॥ जनिकर्तुःप्रकृतिरित्युक्तिस्तन्नभयंकरी ॥ १८४ ॥ ॥

॥ श्रृंगस्येति ॥ तत्र विकृताविकृतभागयोर्मध्ये । विक्रियमाणेतुश्रृंगस्यांशे पूर्ववत्इदमेतदाकारेणजायतइतिप्रथमैव नपंच मीतिभावः ॥ १८२ ॥ सा अवधिभूतश्रृंगांशपंचमी । तेन पूर्वेण । विरोधाचरणात्ब्रह्मलक्षणस्यान्यत्रापहाराख्यविरोधाचर णात् । तत्सूत्रमितिसंबंधः । अर्थतःअर्थात् । अर्थविचारेसतीत्यर्थः । अर्थतःप्रयोजना द्व्यर्थतांशून्यतामितिवा । तत्तस्मात्

॥ १८३ ॥ १८४ ॥ योमायावादी । तामुपादानतां । सःअबुधः ॥ १८५ ॥ अपिचतटस्थलक्षणंवदतापित्वयांततोजगत्कर्तृत्वं ब्रह्मणिवक्तव्यं । अतउपादानत्वेभरंकुर्वतापिलक्षणयातदुक्त्यापिकर्तृत्वमेवोच्यतां । लाघवादित्याह ॥ किंचेति ॥ तत्कर्तृत्वं ॥ १८६ ॥ अत्रास्मिन्जन्मादिसूत्रेश्रुतौवावक्तव्यः । शास्त्रमर्यादाविदामुख्यतएव दुराग्रहग्रस्तेनतुलक्षणयावावाच्यइतिभावः । अपरः उपादानपदार्थः । ब्रह्मणिकर्तृत्वानंगीकारेतद्रीत्यैवबाधकमाह ॥ ईक्षितृत्वेति ॥ नोचे द्ब्रह्मणिकर्तृत्वंनचेत् । जिगीषसि

यथोपादानतामुक्त्वायस्तटस्थीकरोतिितां ॥ अबद्धंसपठित्वांतेकुचोद्यंकुरुतेऽबुधः ॥ १८५ ॥
किंचोपादानमात्रेणकार्यंस्यान्नावयोर्मते ॥ अतःकर्तुरवश्यत्वेनतद्वाच्यंकथंवद ॥ १८६ ॥
तस्मात्त्वयापिवक्तव्यःकर्तैवात्रनचापरः ॥ ईक्षितृत्वबलान्नोचेत्कथंसांख्यंजिगीषसि ॥ १८७ ॥
तवयश्वाकथंव्याघ्रस्सपरस्यभविष्यति ॥ अनिच्छतापिकर्तृत्वमतोवाच्यंत्वयापिहि ॥१८८॥

जेतुमिच्छसि । तदैक्षतेतिश्रुतौऐक्षतेतीक्षणकर्तृत्वश्रवणात् सांख्याभिमतप्रधानंनात्रप्रतिपाद्यं किंतुब्रह्मैवेतिसिद्धांतितमीक्षत्य धिकरणे ब्रह्मणिकर्तृत्वाभावेतन्नस्यात् । नह्यसिद्धेनहेतुनासाध्यसिद्धिरितिभावः ॥ १८७ ॥ मन्मतेकर्तृत्वाभावेपिपरंप्रतितेनो त्तरंदीयतइत्याशांदूरीकरोति ॥ तवेति ॥ यःगृहेविद्यमानश्चतुष्पादर्थात्तव श्वा सः परस्यकथंव्याघ्रोभविष्यतीतियोजना । कर्तृ त्वानुपपत्तिःब्रह्मणःप्रतिपाद्यतांनहंतिचेत्प्रधानस्यापिप्रतिपाद्यतांनहन्यादितिभावः । अतः परनिराकरणहेतुत्वात् ॥ १८८ ॥



जडेऽज्ञानादौ । ईशासिद्धिप्रसंगतःईश्वरासिद्धिप्रसंगात् । जडेकर्तृत्वांगीकारेसांख्यरीत्याप्रधानस्यैवजगत्कर्तृत्वसंभवेनेश्वरासि द्धिस्स्यात् । अतस्सांख्यंजेतुकामेनसेश्वरवादिनाजडस्यकर्तृतानांगीकार्येतिभावः । एतेनैवकर्तृत्वभोक्तृत्वादिकमप्यंतःकरणाज्ञा नजडनिष्ठमेवेतिपरप्रक्रियापिदूषितावेदितव्या । तस्माज्जडस्यकर्तृत्वायोगात् । अस्य जगत्कर्तृत्वाख्यस्य । जगदुपादानत्वलक्ष णस्यतटस्थत्ववज्जगत्कर्तृत्वलक्षणस्यतटस्थतात्वयापिवक्तुंनशक्येतिभावः ॥ १८९ ॥ प्रकारांतरेणनिष्क्रियत्वश्रुतेःपराभिमता र्थंदूषयति ॥ क्रियावेशेति ॥ चितइत्युभयत्रापिसंबध्यते ॥ १९० ॥ हियस्मात्तद्ब्रह्म केवलश्रुतिचोदनात्केवलोनिर्गुणश्चेत्यत्र

जडेचनैवकर्तृत्वमीशासिद्धिप्रसंगतः ॥ तस्मात्तटस्थतास्यस्याल्लक्षणस्यकथंवद ॥ १८९ ॥
क्रियावेशप्रसंगेनकर्तृत्वंनचितोयदि ॥ जडावेशप्रसंगेनतद्वज्ञानंकथंचिति ॥ १९० ॥ जडा
मिश्रंहितद्ब्रह्मकेवलश्रुतिचोदनात् ॥ समस्समाधिर्मिथ्यात्ववार्तयातेद्वयोरपि ॥ १९१ ॥ ॥

केवलइतिश्रुत्याजडमिलितत्वविधानात्जडामिश्रं तस्मादितिपूर्वेणान्वयः । निष्क्रियत्वश्रुतिविरुद्धक्रियावेशप्रसंगेनकर्तृत्वंनोच्यते चेत्केवलश्रुतिविरुद्धजडावेशप्रसंगेनाज्ञानमपिब्रह्मणिनसिद्ध्येदितिभावः । तेमिथ्यात्ववार्तयासमाधिःपरिहारोपिद्वयोःसमः ॥ पारमार्थिकजडाभावपराकेवलश्रुतिःमिथ्याभूतजडांगीकारेनविरुध्यतेचेत् तर्हित्वन्मतेकर्तृत्वस्यापिमिथ्यात्वात्पारमार्थिकक्रियावे शाभावपरानिष्क्रियत्वश्रुतिरपिकर्तृत्वाविरोधिनीस्यात् । तस्माद्ब्रह्मण्यज्ञानवत्कर्तृत्वमंगीकारार्हमितिभावः ॥ १९१ ॥ ममतुम

तेब्रह्मगाज्ञानंमृषामिथ्या । ब्रह्मनिष्ठाज्ञानमिथ्यात्वंमयाप्यंगीक्रियते । ब्रह्मण्यज्ञानस्यैवाभावात् । कर्तृत्वंतुब्रह्मगतंनमृषाइत्येव विशेषः । तत्रहेतुमाह ॥ शास्त्रार्थवत्त्वतइति ॥ शास्त्रार्थवत्त्वतः शास्त्रस्यमोक्षाख्यप्रयोजनवत्त्वावश्यंभावात् । जीवस्यकर्तृत्वाभावेऽकृताभ्यागमप्रसंगेनजीवोपियदाकर्ता तदाशक्तस्सर्वशक्तिमान्परमात्माकर्तेतिकिमुवक्तव्यमितियोजना । अस्वतंत्रस्यजीवस्यप्रयोजनवशात्कर्तृत्वेंऽगीकार्येस्वतंत्रस्यसर्वशक्तस्यहरेःकर्तृत्वंशिरसाधार्यमितिभावः ॥ १९२ ॥ निष्क्रियत्वश्रुतेःपर



ममतुब्रह्मगाज्ञानंमृषाशास्त्रार्थवत्त्वतः ॥ कर्ताजीवोपिहियदाशक्तःकिमुतदाप्रभुः ॥१९२॥
निष्क्रियत्वश्रुतेर्भीश्चेत्कथंस्यात्तेगतागतं ॥ व्यावहारिकमेतच्चेत्क्रियेयंचास्तुतादृशी ॥
नहिनिष्क्रियवागेकांक्रियामेवनिषेधति ॥ १९३ ॥ चित्रंचित्रक्रियागारसंसारेनतटस्थता ॥ जगज्जन्मादिकरणक्रियामात्रेतुसाकिल ॥ १९४ ॥ ॥ ॥

रीत्याप्रतिबंद्यंतरेणाप्युत्तरमाह ॥ निष्क्रियत्वेति ॥ तेतवगतागतं गमनागमनं । श्रुतिभियाब्रह्मणिक्रियामनंगीकुर्वतामायावादिनाजीवेपिगतागतक्रियानांगीकार्या । जीवस्यापिब्रह्मरूपत्वांगीकारादितिक्रियायाःक्रियैवप्रतिबंदीतिभावः । एतज्जीवक्रियादिकं । इयंब्रह्मनिष्ठा । तादृशीव्यावहारिकी । क्रियामात्रनिषेधकनिष्क्रियश्रुतेःक्रियाद्वयेपिसाम्यमित्याह ॥ नहीति ॥ एकांक्रियांब्रह्मगतक्रियां ॥ १९३ ॥ प्रकारांतरेणापिप्रतिबंदीमाह ॥ चित्रमिति ॥ सातटस्थता । निष्क्रियश्रुतिसाम्येपिजननमर

णगमनागमनोत्पतनाधःपतनाद्यनंतक्रियाविशिष्टसंसाराधारत्वंब्रह्मण्येवकिल। जगज्जन्मादिक्रियानब्रह्मणिकिल। इदंचैकमाश्चर्य मितिभावः॥१९४॥ परस्यापिप्रतिबंधंतरंसूचयन्स्वमतेनिष्क्रियश्रुतेरर्थांतरमाह॥ ममेति॥ योनिरित्युक्तकर्तृत्वक्रिया एषयोनिस्स र्वस्य यद्भूतयोनिंपरिपश्यंतिधीराः ममयोनिः यथैकायोनिरुच्यतइत्यादिश्रुतिस्मृतिषुयोनिरित्युक्तकर्तृत्वक्रियेत्यर्थः। योनिशब्द प्रयोगमहिम्नालौकिकपश्वादियोनिरिवपुत्रोत्पत्तावुपचयापचयतन्निमित्तदुःखादिक्रियाभगवत्यपिप्राप्ता। तांनिषेद्धुंनिष्कलंनिष्क्रि यंशांतमितिश्रुतिःप्रवृत्ता। विरुद्धाक्रियाविक्रियेतिव्युत्पत्त्योपचयापचयादिविक्रियायाअपिक्रियात्वेननिष्क्रियपदनिषेध्यत्वसंभ

ममसर्वज्ञइत्युक्तविज्ञानक्रिययासह॥ योनिरित्युक्तकर्तृत्वक्रियास्त्येव नविक्रिया॥ १९५॥ निष्क्रियत्वश्रुते स्सत्त्वात्तटस्थंलक्षणंयदि॥ तर्ह्यज्ञानंतटस्थंस्यादद्वितीयश्रुतेर्बलात्॥१९६॥ अनादिब्रह्मणोऽज्ञानमनाद्येवाहिते मते॥ द्वितीयंतत्कृतंतस्मात्तृतीयमखिलंजगत्॥ तेनाविद्यानिषेध्यैववागेषेतिमतिर्मम॥ १९७॥ ॥

वात्। प्रत्युतकर्तृत्वरूपक्रियायाधात्वर्थरूपक्रियात्मकतयाऽमुख्यत्वेनोपचयापचयोरस्ताडनादिक्रियायाश्चोत्क्षेपणापक्षेपणादिरूप तयामुख्यक्रियात्वान्मुख्यामुख्ययोर्मुख्यस्यैवग्राह्यत्वेनोक्तविक्रियायाएवक्रियाशब्दबोध्यतयातन्निषेधस्यैवन्याय्यत्वादितिभावः। अनेनैवनिष्क्रियश्रुतिविरोधेनब्रह्मणिकर्तृत्वक्रियानंगीकारे सत्यंज्ञानमित्युक्तज्ञानक्रियापिनस्यादितिप्रतिबंधंतरंचसूचितं॥१९५॥ प्रकारांतरेणाप्यज्ञानप्रतिबंदींगृह्णाति॥ निष्क्रियत्वेति॥ श्रुतेस्सत्त्वात्बलात्। लक्षणंजगत्कर्तृत्वं। अज्ञानं ब्रह्मनिष्ठतयापरेणो च्यमानमज्ञानं। तटस्थंब्रह्मणोन्यत्रगतं। अद्वितीयश्रुतेरेकमेवाद्वितीयमितिश्रुतेः॥१९६॥ कुतइत्यतआह॥ अनादीति॥ हिय

स्मात्तेमतेऽनादिब्रह्मणोनाद्यज्ञानमेवद्धितीयं । अनादिकालमारभ्योभयोरप्यन्योन्यसंबंधात् । तत्कृतमज्ञानकृतंसर्वंजगत्तस्माद्ब्र
ह्मणस्तृतीयं । तेनाज्ञानस्यैवद्धितीयत्वेन । एषावागद्धितीयत्ववाक् । अविद्यानिषेध्येतिबहुव्रीहिः । अज्ञाननिषेध्यैव । अज्ञान
स्यैवद्धितीयपदयोग्यार्थतयानञातदेवनिषेध्यंस्यात् । नतुजगत् । नहिपुत्रादुत्पन्नस्यपौत्रस्यस्वपुत्रताक्कापिदृष्टेतिभावः । वस्तुत
स्तुनिष्क्रियत्वश्रुतिःत्वद्रीत्यैवकर्तृत्वातिरिक्तक्रियासद्भावात्सावकाशा । इयंतुश्रुतिःत्वद्रीत्यैवार्थांतरशून्येतिदुरुत्तराप्रतिबंदी ।
जगतोऽप्रतिषेधेनब्रह्मण्येवाज्ञानप्रतिषेधेनास्मदभीष्टसिद्धिरपीतिज्ञातव्यं ॥ १९७ ॥ अद्धितीयश्रुत्याब्रह्मण्यज्ञानंनिषिध्याविका

किंचाविकारवचनाज्जगद्रूपविकारकृत् ॥ तटस्थमस्तुतेऽज्ञानंब्रह्मनिर्मलवस्तुतत्
॥ १९८ ॥ अतःप्रथमतस्सूत्रकृदुक्तेब्रह्मलक्षणे ॥ असंभवोतिव्याप्तिश्चसिद्धांतो
यस्यधीमतः ॥ सभाष्यकृत्किलगुरुःश्रोतातत्रचकश्चन ॥ १९९ ॥ ॥

रश्रुत्यापिब्रह्मण्यज्ञानमेवनिषेधति ॥ किंचेति ॥ अविकारवचनात् निर्विकारत्वश्रुतेरित्यर्थः । तेऽज्ञानंजगद्रूपविकारकृ द्विका
रोपादानं । इदंचोपलक्षणं । अतदाकारतयास्वस्यापिविकारत्वात् । तेमते । अज्ञानंब्रह्माज्ञानं । निर्मलं अज्ञानाख्यविकाररहित
तयाशुद्धं । परवाक्येनैवपराभिमतार्थखंडनरूपत्वात्केवलश्रुत्याऽद्धितीयश्रुत्यानिर्विकारश्रुत्याचप्रतिबंदीग्रहणं परस्यैवबंदीग्रहण
मित्यतिचमत्कारोयंग्रंथकारस्य । एवमन्यत्रापिद्रष्टव्यं ॥१९८॥ परकृतसूत्रव्याख्याप्रत्याख्यानंसोपहासमुपसंहरति ॥ अतइति ॥



अतःपूर्वोक्तन्यायात् । धीमतइतिविपरीतलक्षणयोक्तिः । सः प्राथमिकसूत्रव्याख्यानेसूत्रोक्तब्रह्मलक्षणस्यासंभवातिव्याप्त्या
दिकमुक्त्वासूत्रमेवदूषयन् । गुरुः । इदमपिविपरीतलक्षणया । भाष्यकृत्भाष्यकारः । किलेत्यस्वरसः । प्रथमतएवसूत्रदूष
कभाष्यकारस्यक्काप्यदर्शनात् । तत्रभाष्येकश्चनश्रोताकिल । उत्सूत्रभाष्येश्रोतृत्वात्तेष्वप्यस्वरसः ॥ १९९ ॥ तटस्थः एतादृश
गुरुशिष्ययोस्तटेस्थित्वाश्रृण्वन्नुपश्रोतेत्यर्थः । कोपिबुद्धिमान्नस्यात् । सूत्रमेवदूषयतोभाष्यमुन्मत्तंकंचित्पुरुषंविनानकोपिप्रेक्षा
वान्वीक्षेतेतिभावः । इतिमत्वाभाष्यकारः स्वयमेवममदुरदृष्टवशाच्छिष्यएकोलब्धः । तटस्थस्तुकोपिनाभूदितिब्रह्मलक्षणमेवत

तटस्थःकोपिनस्यादित्यकरोद्ब्रह्मलक्षणं ॥ यतश्शिक्षणमेवेदंसूत्राणांनार्थरक्षणं ॥ २०० ॥
अतोलक्षणसूत्रस्यबलाज्ज्ञानबलादिभिः ॥ गुणैर्युक्तमभूद्ब्रह्मलक्षणेनगुणेनच ॥ २०१ ॥
सजातीयविजातीयव्यावृत्तिश्चयतःफलं ॥ चेतनाचेतनजगद्भिन्नमासीत्ततस्सदा ॥ २०२ ॥

टस्थमकरोदितिपरिहासः । इतोतिरिक्ततटस्थांतराभावेहेतुमाह ॥ यतइति ॥ तस्मात्तटस्थःकोपिनाभूदितिपूर्वेणान्वयः॥२००॥
एवमपव्याख्यांनिराकृत्यसूत्राणांस्वोक्तार्थएवप्रामाण्यंस्थिरीकृत्याधुनातेभ्यस्सूत्रेभ्यस्सकलस्वसिद्धांतसिद्धिप्रकारंसविस्तरमाह ॥
अतइति ॥ अतः लक्षणताटस्थ्याभावात् । लक्षणेनगुणेनच लक्षणाख्यगुणेनचेत्यर्थः। बहुतरजगत्सर्जनधारणपोषणादेर्बृहत्तर
ज्ञानेच्छाप्रयत्नबलकृपाद्यनेकगुणसापेक्षत्वात्लक्षणस्यापिधर्मरूपतयागुणत्वाल्लक्षणसूत्रेणैवब्रह्मणोगुणपूर्णत्वमपिसिद्धमितिभावः
॥ २०१ ॥ जीवजडात्मकप्रपंचादत्यंतभेदोपिलक्षणसूत्रबलादेवसिद्धइत्याह ॥ सजातीयेति ॥ फलंलक्षणस्य । ततः लक्षण

स्यसजातीयविजातीयव्यावृत्तिफलकत्वात् । ब्रह्मेत्यध्याहारः । चेतनस्यसजातीयत्वात् अचेतनस्यविजातीयत्वात् ताभ्यांव्या
वृत्तेश्च तद्भेदरूपत्वादितिभावः ॥ २०२ ॥ सर्वोत्तमत्वमपिलक्षणसूत्रादेवसिद्धमित्याह ॥ पितृत्वेति ॥ तद्ब्रह्म सर्वजगतस्स्रष्टृ
त्वेनतत्पितृत्वात् । पालकत्वेनतत्पतित्वलाभात् । उपलक्षणंचैतत् । ज्ञानमोक्षादिदानेनजगद्गुरुत्वेष्टदैवत्वादेरपिलाभात्पित्रादे
श्चपुत्रादिभ्यउत्तमत्वस्यलोकसिद्धत्वेनब्रह्मणस्सर्वोत्तमत्वमपिसिद्धमितिभावः । अत्रोक्तगुणभेदादीनांपारमार्थिकसत्यताप्याद्या
धिकरणार्थपर्यालोचनयासिद्धेत्याह ॥ पूर्वेति ॥ पूर्वसूत्रे अथातोब्रह्मजिज्ञासेतिसूत्रे मुक्त्यर्थज्ञेयत्वोक्तेः जन्मादिसूत्रेषुकरिष्य

पितृत्वाच्चपतित्वाच्चतद्भ्रूदुत्तमोत्तमं ॥ पूर्वसूत्रेविमुक्त्यर्थंज्ञेयत्वोक्तेर्नमा
यिकं ॥ २०३ ॥ नेहनानेतिवाक्याच्चगुण्यभिन्नागुणाश्रुते ॥ २०४ ॥ ॥

माणजिज्ञासाख्यविचारस्यातोज्ञानायेति तत्तदधिकरणोक्तगुणभेदादिज्ञानार्थकत्वस्य अतोमोक्षायेतितस्यैवपदस्यावृत्तौकृतायांज्ञा
नद्वारामोक्षाख्यफलहेतुत्वस्यचोक्तेरित्यर्थः । तत्तत्सूत्रोक्तगुणादिकंमायिकंमिथ्याभूतंनेतिसंबंधः ॥ उपलक्षणंचैतत् । जगत्कर्तृ
त्वाख्यब्रह्मगुणपारमार्थिकत्वसिद्धावर्थाज्जगत्सत्यत्वसिद्धिरपीतिद्रष्टव्यं ॥ २०३ ॥ ब्रह्मणिगुणगुण्यभेदोपिसूत्रसूचनयाश्रुत्याच
सिद्धइत्याह ॥ नेहनानेति ॥ तेगुणाःगुण्यभिन्नाः गुणिनाब्रह्मणाऽभिन्नाः । वाक्यादित्युपलक्षणं । सूत्रसूचितत्वाच्चेत्यपिद्र
ष्टव्यं । जन्मादिसूत्रेषुकरिष्यमाणगुणादिजिज्ञासायाअप्यादिसूत्रेब्रह्मजिज्ञासापदेनोक्त्यागुणानामेवब्रह्मत्वस्यापिसूचितत्वात् ।

श्रुतौ चइहब्रह्मणिनानाभूतंकिंचननास्तीतिसाक्षाद्गुणादीनांभेदनिषेधात्गुण्यभिन्नगुणसिद्धिरितिभावः ॥२०४॥ अधुनाविशेषसिद्धिप्रकारमाह ॥ गुणेति ॥ आदिपदेनावयवावयविभावादेर्ग्रहणं । बोध्यबोधकभावतः लक्षणादिगुणानांव्यावर्तकतयाब्रह्मबोधकत्वात् ब्रह्मणोबोध्यत्वादित्यर्थः । तेगुणाः । तद्विशेषाः । तस्यब्रह्मणोविशेषाः । ब्रह्मणासहसविशेषाभिन्नाइत्यर्थः । सूत्रमर्यादयैवगुणगुण्यभेदस्यगुणगुणिभावादेश्चसिद्धेस्तद्घटकविशेषस्याप्यर्थात्सिद्धिः । अन्यथाघटकरीरादिवत्पर्यायशब्दवाच्यत्वप्रसंगादितिभावः । तत्रदृष्टांतमाह ॥ सूत्रेति ॥ कर्म प्रतिपाद्योनारायणइत्यर्थः । यथैक्येपिव्यासस्यसूत्रकर्तृत्वंनारायणस्यसूत्रप्रतिपाद्यत्वंविशे

गुणगुण्यादिभावाच्चबोध्यबोधकभावतः ॥ तद्विशेषाश्चतेसूत्रकर्तृकर्मवदेवहि ॥ २०५ ॥
आनंदमयसूत्रोक्तरीत्यासोपिसुखाकृतिः ॥ निराकारःकथंकुर्याद्धस्तहस्तकुलालवत् ॥ २०६ ॥

षबलादुच्यतेतथेत्यर्थः ॥२०५॥ इदानींसाकारत्वसिद्धिप्रकारमाह ॥ आनंदमयेति ॥ आनंदमयसूत्रोक्तरीत्या आनंदमयइतिसूत्रेणोक्तासूचिता या तस्यप्रियमेवशिरइत्यादिकाश्रुतिः तद्रीत्येत्यर्थः । सःपरमात्मा सुखाकृतिः सुखमयशिरःपाण्याद्याकारवान् । जन्मादिसूत्रसूचनयापितत्सिद्धिप्रकारमाह ॥ निराकारइति ॥ निराकारः हस्तपादाद्याकारशून्यः । कुर्या ज्जगत्सृजेत् । अक्षणापरमाणून्निरीक्ष्यहस्तैरन्योन्यंसंयोज्य महदादितत्वानिस्वोदरस्थब्रह्मादितत्वाद्यभिमानिजीवांस्तेषुसंकलय्यब्रह्मांडतदंतर्गतचतुर्दशभुवनानिचसिसृक्षुः पातालादिसत्यलोकांतानिच पद्भ्यांभूमिः ऊरूतदस्ययद्वैश्यः नाभ्याआसीदंतरिक्षं बाहूराजन्यःकृतः

मुखादिंद्रश्चाग्निश्च दिशश्श्रोत्रात् चक्षोस्सूर्योअजायत शीर्ष्णोद्यौस्समवर्ततेत्यादिश्रुत्या पातालमेतस्यहिपादमूलमित्यादिस्मृत्या चोक्तरीत्या पादाद्यवयवैरुत्पाद्य तैरेवस्वावयवैस्सदाधारयतीतिश्रुतिस्मृतिपंचरात्रादीनांसंप्रदायः । इयंचप्रक्रियानिराकारस्यक थंस्यात् । अतोजन्माद्यधिकरणोक्तजगत्कर्तृत्वधारकत्वादिबलादपिभगवतस्साकारत्वंसिद्धमितिभावः । तत्रदृष्टांतमाह ॥ ध्वस्त हस्तेति ॥ चक्षुराद्यवयवस्याप्युपलक्षणमेतत् ॥२०६॥ तस्मादुक्तप्रकारेणवक्ष्यमाणप्रकारेणचसगुणत्वसकलजगद्भिन्नत्वसाकारत्वा दिसकलसत्सिद्धांतसिद्धार्थबोधकत्वप्रकारदर्शनात् ॥२०७॥ उक्तविधयासूत्रार्थवेत्तुर्महाफलं विपरीतवेत्तुर्विपरीतफलंचदर्शयति ॥

तस्मात्समस्तश्रुत्यर्थसूचनात्सूत्रमुच्यते ॥ २०७ ॥ एवंयोवेत्तिसूत्रार्थंसबंधात्परिमु च्यते ॥ नचेत्सूत्रार्थविच्छेदाच्छिद्यतेयमकिंकरैः ॥ २०८ ॥ विस्तरस्त्वस्यसर्वस्यभा ष्यादिष्वेवदृश्यतां ॥ मूलशास्त्रार्णवोत्सिक्तबिंदून्वंदामहेवयं ॥२०९॥ तस्मादुत्सू त्रभाष्यस्यकर्तादुर्भाष्यकृद्भवं ॥ भाष्यकारस्तुभगवान्मध्वोविद्वच्छिरोमणिः ॥ २१० ॥

एवमिति ॥ २०८ ॥ स्मृतमूलशास्त्रमहिमाग्रंथकारःतेष्वेवपरमादरंकरोति ॥ विस्तरस्त्वस्येति ॥ अस्यप्रमेयस्य । विस्तरः युक्तिश्रुतिपुराणपंचरात्रादिवचनचातुरीचतुरग्रंथसंदर्भैःप्रपंचीकरणं । आदिपदेनानुव्याख्यानोपनिषद्भाष्यादिकंगृह्यते । मूलशा स्त्राख्यार्णवात्उत्सिक्तायेबिंदवःयुक्तिलेशाःतानेववंदामहेस्तुमोनमस्कुर्मश्च । तत्रतुरुद्राद्याएवाधिकारिणः । अस्माकंत्वेतावत्ये वशक्तिरितिभावः ॥ २०९ ॥ इदानींपरभाष्यकारंनिंदन्स्वमूलभाष्यकारंस्तौति ॥ तस्मादिति ॥ उक्तप्रकारात् । उत्सूत्रभाष्य



स्य सूत्रविरोधिभाष्यस्य । विद्वच्छिरोमणिस्समध्वः मध्वएव भाष्यकारः । सूत्रोक्तसूचितसकलप्रमेयप्रपंचनपरायणत्वादिति भावः ॥ २१० ॥ अधुनापरभाष्येभाष्यशब्दएवानुचितइत्याह ॥ अतइति ॥ अतः सूत्रविरोधिभाष्यत्वा त्सभांतरे विद्वत्स भामध्ये । भाष्यंभाषितुंयोग्यं । अतोत्रभाष्यपदमपिनशोभतइतिभावः । तस्मा त्सूत्रप्रतिकूलभाष्यस्यभाषणायोग्यत्वात् ॥ २११ ॥ अधुनासाक्षात्सूत्रैरेवभेदसौरभमुख्यार्थभूतजीवेश्वरभेदसाधनप्रकारंदर्शयति ॥ सचेति ॥ सः सूचनयापिअर्थसा धकसूत्रकर्ताव्यासः स्थित्यदनाभ्यांचेतिसूत्रेस्थिति रदनाभावेपिसुखेनवर्तनं । अदनंकर्मफलभक्षणं । देहाख्यवृक्षेजीवपरमात्मा

अतःपरकृतंभाष्यंभाष्यंनाभूत्सभांतरे ॥ तस्मात्सूत्रोदितोह्यर्थोनिराकर्तुंनशक्यते ॥ २११ ॥ सचस्थित्यदनाभ्यांचेत्याहभेदंसयुक्तिकं ॥ द्विशाखासंमतिंभेदेभेदेनैनमधीयते ॥ २१२ ॥ ॥

ख्यौद्वौकिलसुपर्णौ । तत्रजीवःकर्मफलाशनाभावेजीवितुमपिनशक्नोतिकिल । परमात्मातुपरिपूर्णत्वात्तदभावेपिसुखीकिल । एव मीदृग्विरुद्धधर्मयोरपिसूत्रएवस्पष्टमुक्तत्वात्सयुक्तिकमित्युक्तं । भेदव्यपदेशाच्चान्यइतिसूत्रादनुवृत्तान्यपदस्ययथायोगंविभक्तेर्ग्रा ह्यत्वात् अन्यौजीवपरमावितिसाध्यमपिहेतुप्रतिपादकेऽस्मिन्सूत्रेऽभिमतं । अतोभेदस्यापिस्पष्टमुक्तत्वाद्भेदमाहेत्युक्तं । भेदसा धकसूत्राणामस्मादप्यादौसद्भावेपिसयुक्तिकत्वाद्ग्रंथस्यचयुक्तिमल्लिकात्वादस्यैवप्रथमतोग्रहणं । असौसूत्रकारः । उभये काण्व माध्यंदिनाइत्युभयेशाखिनः । यआत्मनितिष्ठन्नात्मनोंतरोयोविज्ञानेतिष्ठन्विज्ञानादंतरइतिचवाक्याभ्यामाधाराधेयभावेनांतरइ

तिसाक्षाद्भेदवाचकांतरपदेनचैनंपरमात्मानं शारीरपदोक्तजीवाद्भेदेनाधीयतेपठंतीतिभेदेद्विशाखासंमतिंप्राहेतिसंबंधः । अनेन शारीरश्चोभयेपिहिभेदेनैनमधीयतइतिसूत्रंसंगृहीतं । उभयेपीतिसंधिकरणान्नपुंसकद्विवचनांतोभयपदेनप्रकृतापेक्षितवचनद्वयमात्रमसंगृह्योभाविवितिशाखाप्रवर्तकौद्वौचानुक्त्वा उभयेऽधीयतइतिबहुवचनांतपदप्रयोगःशाखाप्रवर्तकाभियुक्तबहुपुरुषसंमतिंचभेदेदर्शयितुमितिद्रष्टव्यं । सःसूत्रकृत् । क्वचिदधिकरणे भेदस्यव्यपदेशाच्चान्यइत्यत्रसूत्रे । भेदव्यपदेशाच्चान्यइतिसूत्रमनेनगृह्णाति । भेदोक्त्या अंतश्चंद्रमसिमनसाचरंतं । इंद्रस्यात्मानिहितःपंचहोता । वायोरात्मानंकवयोनिचिक्युः । सहैवसंतंनविजा

उभयेपीतिसूत्रेसौभेदोक्त्याचान्यतांक्वचित् ॥ भेदस्यव्यपदेशाच्चान्यइत्यत्रससूत्रकृत् ॥ २१३ ॥
क्वचिच्चभेदव्यपदेशादित्यूचेतथाक्वचित् ॥ भेदस्यव्यपदेशाच्चेत्याहसूत्रद्वयंत्विदं ॥ २१४ ॥ ॥

नंतिदेवाइत्यादिभेदप्रतिपादकवाक्येनेत्यर्थः । अन्यतां चंद्रेंद्रादिदेवेभ्योभिन्नतां । आहेतिपूर्वेणान्वयः । भेदप्रतिपादकवचनद्वयसमायोगाद्भेदार्थकषष्ठीबलाच्चात्मपदमंतर्यामिपरं ॥ २१२ ॥ २१३ ॥ क्वचिदधिकरणेभेदव्यपदेशादितिसूत्रेणोचे अन्यतामूचे । तथा एवमेव क्वचिदधिकरणे भेदस्यव्यपदेशाच्च भेदव्यपदेशाच्चेतिसूत्रइत्यर्थः । आह अन्यतामाह । इदंपूर्वोक्तं सूत्रद्वयं । भेदव्यपदेशादित्येकं । भेदव्यपदेशाच्चेत्यपरं । एवंसूत्रद्वयमित्यर्थः । एकत्रचशब्दराहित्यमपरत्रतत्साहित्यंचविशेषंदर्शयितुंतुशब्दः । ननुभेदोक्तेरित्यल्पाक्षरतयासूत्रस्यकर्तुंशक्यत्वाद्व्यपदेशादित्युक्तिःकिमर्था । सत्यं । भेदसूत्राणामेषामतात्विकभेदपरत्वंव

दतःपरस्यप्रत्युत्तरंचसूचयितुमितिब्रूमः । तथाहि । विगतोपदेशोपार्थकदेशनायस्मादितिव्युत्पत्त्याव्यपदेशपदस्यातिसार्थकवचन परत्वात् । ततश्चपरोदीरितशंकायाःकथमवकाशः । अतात्विकार्थकथकवाक्यस्यातिसार्थकवाक्यत्वायोगात् । अथवापृथगुपदे शादितिसूत्रांतरेभेदप्रतिपादकवाक्यस्योपदेशरूपत्वकथनादत्राप्यपदेशउपदेशएव । यद्वास्वाभिमतार्थेहेतुतयाकथनाच्चायमपदेश उपदेशएव । नहिकोपिप्रेक्षावान्कंचिदर्थंप्रतिज्ञायतत्रापार्थकवाक्यंहेतुतयाप्रयुङ्क्ते । तथाचविशिष्टश्चासावपदेशश्चेतिव्यपदेशपदेन विशिष्टोपदेशएवोच्यते । तस्यचस्वार्थेमहातात्पर्यवत्त्वनियमात्कथंपराभिलषितकुचोद्यावसरः । उक्तिपदंविनोदेचसत्त्वात्सावका शं उपदेशस्तुनतथेतितदेवपदमुदाजहार । एवंचैकयोक्त्यापराभिलषितार्थप्रत्याख्यानात्स्वार्थसमर्थनाच्चद्विजिह्वेयंसूत्रसार्थभुजं

विशेषणेनभेदस्यव्यपदेशेनचेतिच ॥ सयुक्तिकंभेदमाहयत्सार्वज्ञंविशेषणं ॥ २१५ ॥

गी गरुडवाहनचरणशरणानामेववश्यापोष्याच अन्यस्यतुदृश्यापिनैवस्यादित्यनुसंधेयं ॥ २१४ ॥ अधुनाभेदोनामसर्वत्रान्यो न्याभावएवेतिसिद्धांतनिर्धारणाय प्राग्भेदपदेनान्यपदेनचसामान्येनोक्तभेदस्य घटएवायंनपटइतिव द्विष्णुरेवात्रप्रतिपाद्योनविरिं चादिजीवाइतिसाक्षान्नञाइतरतादात्म्यनिषेधादन्योन्याभावरूपतांचसाधयन्निदसूत्रचतुष्टयंक्रमेणपठति ॥विशेषणेनेत्यादिना॥ विशेषणेन भेदस्यव्यपदेशेनचेत्यनेन विशेषणभेदव्यपदेशाभ्यांचनेतराविति सूत्रंसंगृह्णाति । विशेषणेन यस्सर्वज्ञइत्युक्तसर्वज्ञत्व विशेषणेन । भेदव्यपदेशेन तस्मादेतद्ब्रह्मनामरूपमन्नंचजायतइतिश्रुतौ तस्मान्मूलब्रह्मणः एतद्ब्रह्म चतुर्मुखाख्यंब्रह्म जायतइ

तिभेदव्यपदेशेनच इतरौप्रकृतिविरिंचौनेतिचप्रकृतिविरिंचाभ्यांभेदंसयुक्तिकमाहेतिसंबंधः । प्रकृतेर्विरिंचस्यचविष्णुभिन्नत्वेसिद्धे तदितरचेतनानामचेतनानांचभिन्नत्वस्यकैमुत्यसिद्धत्वात्चेतनाचेतनात्मकजगद्भेदसिद्धिरितिभावः ॥ २१५ ॥ शारीरोनुपपत्तेर्नेत्यनेन अनुपपत्तेस्तुनशारीरइतिसूत्रंगृह्णाति । अत्रानुपपत्तेः एकस्यजीवस्यसर्वशरीरस्थत्वानुपपत्तेश्शारीरोजीवोत्रप्रतिपाद्यस्सर्वगतोन । किंतुविष्णुरेवेतिसकलजीवप्रतियोगिकभेदसिद्धिः । नेतरोनुपपत्तितइत्यनेनच नेतरोनुपपत्तेरितिसूत्रंगृह्णाति । अत्राप्यनुपपत्तेः ब्रह्मविदाप्नोतिपरमित्यत्रोक्तप्राप्यत्वानुपपत्तेरितरोजीवः आनंदमयोन । किंतुविष्णुरेवेतिसकलजीवभेदसिद्धिः ।

शारीरोनुपपत्तेर्ननेतरोनुपपत्तितः ॥ इतिसूत्रद्वयेचोक्तोभिन्नोजीवस्सयुक्तिकं ॥ २१६ ॥
यन्नप्रतीके नहिसइतिसूत्रेससूत्रकृत् ॥ प्रतीकोब्रह्मनैवेतिस्पष्टमाचष्टभिन्नतां ॥ २१७ ॥

एतदेवदर्शयति ॥ इतिसूत्रद्वयइति ॥ भिन्नोजीवइतिवदताग्रंथकारेणसूत्रमर्यादयाब्रह्मप्रतियोगिकजीवनिष्ठभेदसिद्धौयद्वस्तु यद्धर्मिकभेदप्रतियोगि तद्वस्तु तत्प्रतियोगिकभेदधर्मीतिन्यायबलेनजीवप्रतियोगिकब्रह्मनिष्ठभेदोपिसिद्धइतिसूचितं । अतश्चेतनाचेतनजगद्भिन्नमासीदित्युपक्रमवाक्यस्यापिनविरोधः । अहंब्रह्मेतिवदतःप्रत्युत्तरायजीवधर्मिकमेवभेदमादावसूत्रयत्सूत्रकारः ॥ २१६ ॥ यद्यस्मा त्प्रतीकोब्रह्मनैवेत्यनेन नहिसइतिसूत्रखंडस्यार्थमाह । अत्रहिसूत्रे नप्रतीकइतिप्रतीकेब्रह्मदृष्टिर्नकार्येतिप्राक्प्रतिज्ञाय नहिसइतितत्रहेतुरुक्तः । हियस्मात् । सःप्रतीकःब्रह्मन । तस्मात्प्रतीकेब्रह्मदृष्टिर्नकार्येतियोजनायाविवक्षितत्वात् ।



अतःप्रतीकःब्रह्मनैवेति भिन्नतां प्रतीकाद्विष्णोर्भिन्नतांस्पष्टमाचष्टेतिसंबंधः ॥ २१७ ॥ प्रतीकपदस्यार्थंदर्शयति ॥ प्रतीकेति ॥ नामादिप्राणपर्यंतदेवताःप्रतीकाख्याः । हीत्यनेनश्रौतप्रसिद्धिंसूचयति । प्रतीकपदेनात्रप्रतिमोच्यते । ततस्तस्मात्कथाका नकापीत्यर्थः । अत्रसर्वत्रसाक्षान्नत्वैवेतरतादात्म्यप्रतिषेधात्मीमांस्यमानभेदस्यान्योन्याभावतासिद्धिरितिज्ञातव्यं ॥ २१८ ॥ अधुनामुक्तिकालीनत्वाच्चभेदोनातात्विकइतिवक्तुंमौक्तभेदसाधकसूत्रत्रयमर्थतोगृह्णाति ॥ मुक्तेति ॥ सप्रभुरितिवक्ष्यमाणमत्राप्याकर्षणीयं । मुक्तोपसृप्यव्यपदेशादितिसूत्रे मुक्तोपसृप्यतां परंज्योतिरुपसंपद्येतिश्रुत्युक्तमुक्तप्राप्यतां । एवंचप्राप्यप्रापकभावेनमु

प्रतीकाख्याहिनामादिप्राणपर्यंतदेवताः ॥ देवतैक्यस्यचायोगेनरैक्येकाकथाततः ॥ २१८ ॥
मुक्तोपसृप्यतामाहतद्योगंशास्तिमुक्तिगं ॥ सुप्त्युत्क्रांत्योर्भिदामाहस्पष्टंजीवःपरात्पृथक् ॥२१९॥

क्तानांविष्णोश्चभेदसिद्धिरितिभावः । मुक्तोपसृप्यत्वव्यपदेशादितिभावप्रधानतयावक्तव्येयत्सूत्रेभवितृप्रधानैवोक्तिः तेनब्रह्मणिभावभवित्रोर्धर्मधर्मिरूपिणोरैक्यमेवेतिसूचितं । मुक्तिगंतद्योगंब्रह्मयोगंशास्तीत्यनेन अस्मिन्नस्यचतद्योगंशास्तीतिसूत्रमर्थतोगृह्णाति । अत्रचसूत्रेअस्मि न्नानंदमयाधिकरणे अस्योपासकस्य तद्योगं एतमानंदमयमात्मानमुपसंक्रामतीत्यादिनाऽऽनंदमयादिनामकब्रह्मयोगं फलतयाशास्तीतिमौक्तब्रह्मयोगस्यैवकथनात्मुक्तिगंतद्योगमित्युक्तं । ततःपूर्ववन्मुक्तब्रह्मभेदसिद्धिः । सुप्त्युत्क्रांत्योर्निद्रोत्क्रमणयोर्भिदामाहेत्यनेन सुषुप्त्युत्क्रांत्योर्भेदेनेतिसूत्रंसूचयति । अत्रसुप्तिरपिब्रह्मप्राप्तिरूपत्वादवांतरमुक्तिरेव । उत्क्रांतिस्तु

मुक्तिरितिसर्वस्यापिसंमतं । तयोरुभयोरपि प्राज्ञेनात्मनासंपरिष्वक्तोनबाह्यंकिंचनवेदेति प्राज्ञेनात्मनान्वारूढउत्सर्जद्यातीतिच जीवब्रह्मभेदकथनात्कथमाविद्यकोभेदः । मुक्तिकालीनस्यचब्रह्मवदाविद्यकत्वायोगात् । परेणानंगीकाराच्च । त्रिसूत्रीयमुक्तवक्ष्यमाणसूत्रप्रतिपाद्यसकलभेदानामपिदेहलीदीपन्यायेनपारमार्थिकतांसाधयतीतिभावः । पृथगुपदेशादितिसूत्रंमनसिनिधायतस्यार्थमेवाह ॥ स्पष्टमिति ॥ जीवःपरात्पृथगितिसौत्रप्रतिज्ञाभागस्यार्थः । उपदेशा त्सर्वशाखास्वपिभेदस्योपदेशादितिहेत्वंशव्याख्यापिद्रष्टव्या । इतीत्यस्यपृथगित्यनेनसंबंधः । मुक्तिप्रतिपादकफलाध्यायेपिभेदस्योक्तत्वात्कथमाविद्यकोभेदइतिभावे

उपदेशादितिप्राहफलाध्यायेपिसप्रभुः ॥ मुक्तंजीवंचसंपद्याविहायेतिपृथग्जगौ
॥ २२० ॥ जगद्व्यापारवर्जेत्वित्यत्रसावधिवैभवं ॥ मुक्तस्याह हरिंसर्वजगज्जन्मा
दिकारणं ॥ वक्तिस्मादौततोप्यन्योमुक्तानांपरमागतिः ॥ २२१ ॥ ॥

नाह ॥ फलेति ॥ संपद्याविहायस्वेनशब्दादितिसूत्रे संपद्यब्रह्मसंप्राप्य अविहायब्रह्मात्यक्त्वातेनसहैवेतिचमुक्तंजीवंचपृथ ग्ब्रह्मणःपृथग्जगौ ॥ २१९ ॥ २२० ॥ जगद्व्यापारवर्जमित्यत्र जगद्व्यापारवर्जमितिसूत्रे । तुशब्दोविरुद्धधर्मकथनरूपयुक्तिसाहित्याख्यविशेषद्योतनार्थः । सावधि एतावदेवेत्यवधिसहितं । जगत्सर्जनादिव्यापारंवर्जयित्वाभोगानाप्नोति । जगत्सृष्ट्यादिव्यापारान्विनान्यान्भोगानाप्नोतीत्यवधिसहितंवैभवंमुक्तस्याहेतियोजना । हरिमादौ जन्मादिसूत्रे सर्वजगज्जन्मादिकारणंवक्तिस्म अवो

चत्। ततोपि हरेर्जगज्जन्मादिकारणत्वरूपवैभवसद्भावात् मुक्तस्यचतद्रहितत्वादपि मुक्तानांपरमागतिः नारायणोऽन्यः मुक्ते भ्योभिन्नः नारायणइत्यनुक्त्वामुक्तानांपरमागतिरितिसहस्रनामसुपठितनाम्नाविशेष्यनिर्देशः मुक्तभेदेप्रमाणांतरंचसूचयितुं। इद मुक्तंभवति। अविद्यानिवृत्तिरूपमुक्त्याख्यफलप्रतिपादकाध्यायेकथितंसर्वमनाविद्यकमितिपरेणापिवक्तव्यं । जीवेश्वरभेदश्चसं पद्येतिसूत्रेप्राप्यप्रापकभावेन जगद्व्यापारवर्जमितिसूत्रेविरुद्धधर्माक्रांतत्वेनविस्पष्टमुदीरितः । अतःकथमसावपारमार्थिकइति ॥ २२१ ॥ सूत्रेसूत्रेप्रतिसूत्रं। उदीरितसूत्रसमुदायेषुवचनवृत्त्यैवभेदःप्रतिपाद्यते। अर्थात्तुसकलसूत्रेष्वपिभेदोभिमतः । जीव जडात्मकसकलप्रपंचप्रतिपादकशब्दानांब्रह्मणिसमन्वयेऽभिहिते ऽर्थात्तत्तच्छाखास्थिततत्तच्छब्दानांजीवजडात्मकप्रपंचाप्रतिपा

भेदमाघोषयामाससूत्रेसूत्रेससूत्रकृत् ॥ पंचधायोभिनत्तीदंसभेदःकेनवार्यते ॥ २२२ ॥

दकतापिसिद्धा। एवंचतत्तच्छब्दप्रतिपाद्यस्यतदप्रतिपाद्याज्जगतःकथंनभेदः। विरुद्धधर्माक्रांतयोर्भेदापरिहारात्। द्वितीयाध्या येचवैषम्यनैर्घृण्येनसापेक्षत्वात्तथाहिदर्शयतीत्यादिनानिर्दोषतयाप्रतिपादितस्यब्रह्मणस्सदोषेभ्योजीवजडेभ्यःकथंनभेदः। साध नाध्यायेचसाधनवद्भिरुपासकैर्द्रष्टृभिर्वोपास्यस्यदृश्यस्यचब्रह्मणःकथंनभेदः। फलाध्यायेचफलप्रदस्यगम्यस्यचब्रह्मणःफलप्रतिग्र हीतृभ्योगंतृभ्यश्चजीवेभ्यःकथंनभेदः । अतस्सूत्रेसूत्रइत्युक्तं । यःभेदः इदंजीवजडात्मकंसेश्वरंजगद्भिनत्ति भेदवत्करोति। जीवेश्वरभेदः जडेश्वरभेदः जीवजडभेदः जीवानांपरस्परभेदः जडानांपरस्परभेदइतिपंचविधभेदैरन्योन्यमसंकीर्णान्करोतीति

भावः। केनवादिना स्वगृहदेवंसंपूज्यस्वान्नंस्वयमेवभुंजताकेनापिमानवेनस्वक्रियाविरोधादयंपंचविधोभेदोवारयितुंनशक्यतइतिभावः। सेश्वरजगतोपिपंचधाभेदनसमर्थःकेनवाप्रतिभटेनवारयितुंशक्यतइतिध्वनिः ॥ २२२ ॥ तत्तस्मा द्वेदविस्तारकव्यासकृतवेदनिर्णायकसकलसूत्राणांभेदपरत्वात्। पदेपदे वर्णसमुदायात्मकसर्वपदेषु। इतिहासोभारतं। व्यासकृतयोरितिहेतुगर्भविशेषणं। एककर्तृकत्वात्सूत्राणांतयोश्चग्रंथयोरैकार्थ्यमितिभावः। उक्तमेवनिमित्तंविशदयति ॥ सूत्रेति ॥ यद्यस्मात्। तस्मादतिमंगलं। पूर्वोक्तंसर्वप्रमेयंपरममंगलमित्यर्थः। नकेवलंयुक्तिचर्चामात्ररूपमिदं किंतुब्रह्ममीमांसारूपत्वाद्वक्तॄणांश्रोतॄणांचस

व्यासविस्तृतमूर्तीनांश्रुतीनांतत्पदेपदे ॥ जीवेशभेदेतात्पर्यमितिहासपुराणयोः ॥ २२३ ॥
श्रीव्यासकृतयोर्नित्यंमहातात्पर्यमत्रहि ॥ सूत्रानुसारियत्सर्वंशास्त्रमित्यतिमंगलं ॥ २२४ ॥
स्वस्मिन्नध्यात्मसंबंधभूयस्त्वादेवकेवलं ॥ प्राणोहमितिशक्रेणप्रोक्तंतत्प्राणतास्यन ॥ २२५ ॥

कलपुरुषार्थसाधकमपीतिभावः ॥ २२३ ॥ २२४ ॥ इदानीमद्वैतवाक्यानांनयथाश्रुताद्वैतेतात्पर्यं। किंतुलक्षणयोपचारेणवाब्रह्मसंबंधसादृश्यादावेवतात्पर्यमित्यपिसूत्रएवरूपितमतःपरस्यमूकीभावएवेतिभावेनतत्सूत्रप्रवृत्तिप्रकारंलेशतोदर्शयति ॥ स्वस्मिन्नित्यादिना ॥ सूत्रे नवक्तुरात्मोपदेशादितिचेदध्यात्मसंबंधभूमाह्यस्मिन्निति सूत्रे। यस्मात्स्वस्मिन्निंद्रे अध्यात्मसंबंधभूयस्त्वादेव स्वस्मादप्यधिकस्यात्मनःप्राणनामकपरमात्मनस्संबंधबाहुल्यादेव शक्रेणप्राणोहमितिप्रोक्तं प्राणोवाअहमस्म्यृषइतिश्रुतावु



क्तं। नतुप्राणैक्यात्। तत्तस्मात्कारणात् अस्यशक्रस्य प्राणता प्राणशब्दवाच्यपरमात्मता। तदैक्यमितियावत्। नेति ऐक्यवचसां अहमस्मि ब्रह्माहमस्मीत्याद्याकारकैक्यवचसां लक्षणागतिरीरिता समानन्यायत्वेनकथिता। अयमाशयः। वक्तुः बृहतीसहस्रवक्तुर्विश्वामित्रस्य विश्वामित्रंप्रतीतियावत्। आत्मोपदेशात् इंद्रेणात्मनस्स्वस्योपदेशात् प्राणोवाअहमस्मीतिप्राणतयोपदेशात्। न। प्राणोब्रह्मनेतिचे न्न पूर्वपक्षोनैवेत्यर्थः। पूर्वपक्षनञोत्रापिआवृत्त्यायोजना। हियस्मादस्मिन्निंद्रेऽध्यात्मसंबंधभूमा अस्मादप्यधिकस्यात्मनःप्राणनामकपरमात्मनस्संबंधभूमासंबंधबाहुल्यं तस्मान्नेतिनञावृत्त्यायोजनायां यथाबह्विसंबंधेनाग्निवद्रक्तेतप्तायःपिंडेऽयमग्निरित्यग्निशब्दप्रयोगः। तथाप्राणनामकपरमात्मनःसंबंधस्य स्वस्मिन्बहुलत्वादेवेंद्रः प्राणोहमि

इत्यैक्यवचसांसूत्रेलक्षणागतिरीरिता ॥ सोहंब्रह्माहमित्यादिरीत्याशाखाप्रलंबिनां ॥ २२६ ॥

तिब्रह्मवाचकप्राणशब्दंस्वात्मनिप्रत्युक्तवान्। नतुस्वस्यैवप्राणत्वात्। अतोग्नेरेवाग्निशब्दवाच्यत्ववत्प्राणशब्दवाच्यतापिब्रह्मणएवनेंद्रस्येतिसूत्रतात्पर्यार्थोलभ्यते। एवंचब्रह्मवाचकपदानांब्रह्मसन्निधानाख्यसंबंधविशेषेणैवजीवेषुलक्षणयातत्रतत्रतत्प्रयोगोनतुब्रह्मैक्यादितिप्राणोहमस्मीत्यादिवाक्यानांलक्षणागतिःकथंनेरिता। मुख्यतोन्यवाचकशब्दानांमुख्यार्थसंबंधेनैवनिमित्तेनयान्यत्रवृत्तिस्सैवहिलक्षणेतिभावः ॥ २२५ ॥ कीदृशानितान्यैक्यवाक्यानिकुत्रत्यानिचेत्यतआह ॥ सोहमिति ॥ सोहमस्मिब्रह्माहमस्मीत्यादिरीत्या। आदिपदेनसएवाहमस्मिब्रह्मैवाहमस्मीत्यादीनांग्रहणं। शाखाप्रलंबिनां नानाशाखासुविद्यमाना

मित्यर्थः । सकलशाखासुविद्यमानानां प्राणोहमस्मीत्यादिवाक्यसदृशवाक्यानांसर्वेषांलक्षणैवगतिरितिसूत्राभिप्रायइतिभावः । शाखाप्रलंबिनामितिवदता लौकिकैरेवमुक्तंचेत्अप्रामाण्यमेववक्तव्यं । अपौरुषेयेतुवेदेतदयोगान्मुख्यार्थस्यचबाधादन्यैवगति रितिसूचितं ॥ २२६ ॥ आत्मेतितूपगच्छंतिग्राहयंतिचेतिसूत्रेब्रह्मेतिपदमध्याहृत्य ब्रह्म आत्माऽहमित्युपगच्छंतिजानंतीतिसूत्रा र्थंमायावादिनोवदंति । ईदृगपिवेदवाक्यमस्तिचेत्प्राणोहमितिवाक्यसदृशत्वादुक्तैवगतिः । मानुषवाक्यंचेत्सूत्रकृतोभिप्रायवि रुद्धमित्याह ॥ वक्तुरिति ॥ वक्तुर्विश्वामित्रस्यआत्मोपदेशे । अहमेवप्राणइतींद्रेणस्वस्यैवोपदेशेपि शक्रस्याऽऽत्मास्वरूपमेवहरि

वक्तुरात्मोपदेशेपिशक्रस्यात्माहरिर्नचेत् ॥ आत्मेतितूपगच्छंतीत्यत्रजीवात्मनः
कथं ॥ हरिणैक्यंवदेद्व्यासोनहितेशक्रतोधिकाः ॥ २२७ ॥ ॥

रितिनचेत् उक्तरीत्यासूत्रकाराभिप्रायोनचेत् । अथवाशक्रस्यात्मास्वरूपमेवहरिर्नारायणःनचेत् उक्तसूत्रार्थपर्यालोचनयानभव तिचेत् । आत्मेतितूपगच्छंतीत्यत्रास्मिन्सूत्रे । जीवात्मनः । जात्येकवचनं । जीवानामित्यर्थः । हरिणैक्यंव्यासःकथंवदेत् । नक थंचित् । तत्रहेतुमाह ॥ नहीति ॥ ते उपगच्छंतीत्यत्रकर्तृतयाभिप्रेताजीवाश्शक्रतइंद्रादधिकानहि । सकलदेवताग्रेसरस्येंद्रस्यं प्राणोहमितिवाक्यं प्राणनामकब्रह्मसंबंधादेवप्रवृत्तं नतुतदैक्यादितिसूत्रमर्यादयैववदन्व्यास स्ततोप्यत्यंतहीनतराणांजीवानांसा क्षादैक्यमेवकथंसूत्रयेत् । पूर्वोत्तरविरुद्धभाष्यभाषीत्वमेवोन्मत्तोभव । सर्वज्ञास्तुसूत्रकारास्सर्वज्ञाएवभवंत्वितिभावः । उपल

क्षणंचैतत् । दशद्वादशसूत्रैर्मुक्तौसंसारेचभेदमेवसूचयन्व्यासःकथमत्राभेदंसूत्रयेत् । उपास्योपासकभेदमंतर्भाव्योपासनापादंरच
यंश्चकथंतद्विरुद्धमभेदंवदेदित्यपिद्रष्टव्यं ॥ २२७ ॥ भवतुपरकीयभाष्यमुन्मत्तप्रलपितं । वेदएवक्कचिद्ब्रह्माहमस्मीतिजीवानां
वचनमस्तिचेत्तस्यकागतिरिरितिचेत्साप्यस्मिन्नेवसूत्रेसूचितेत्याह ॥ ईषदिति ॥ ईषदध्यात्मसंबंधात् इंद्रादपिहीनतरजीवेषुबह्व
ध्यात्मसंबंधायोगादीषदित्युक्तं । अस्मिन्सूत्रे अध्यात्मसंबंधभूमेतिसूत्रे । महतिमहानितिवदताऽल्पेऽल्पइत्यस्याप्युक्तप्रायत्वाद
सूचयदित्युक्तं । इंद्रसदृशदेवांतरवाक्यानांगतिःप्रागेवोक्ता । नीचजीववाक्येषुतुविशेषांतरप्रदर्शनायपुनर्वचनं ॥ २२८ ॥ कस्त

ईषदध्यात्मसंबंधात्तादृग्वाक्यप्रवर्तनं ॥ असूचयद्धिसूत्रेस्मिंस्तेनैक्यंनक्कचित्तव ॥ २२८ ॥
परमात्मेतितद्ब्रह्मजानंतिज्ञापयंतिच ॥ इत्यर्थोमे सशब्दोयत्स्वभावेपरमात्मनि ॥ २२९ ॥
यस्सत्त्वाच्चावरस्येतिसत्तांवक्तीतरस्यच ॥ अप्रधानस्यसर्वस्यसमिथ्यात्वंकथंवदेत् ॥ २३० ॥

र्हिंसूत्रार्थइत्यतआह ॥ परमात्मेति ॥ तद्ब्रह्मो पास्यतयासर्वत्रप्रस्तुतंब्रह्म । अनेनैवात्माहमितिवदतःपरस्याप्रस्तुताहंशब्दाध्याहा
रोदोषस्सूचितः। आत्मापरमात्मेतिस्वयंजानंति । अन्यान्ज्ञापयंति । उपगच्छंति ग्राहयंतीत्यस्यार्थकथनमिदं । अर्थस्सूत्रार्थः।आत्मप
दस्यावृत्त्यावातद्ब्रह्मेत्युक्तं। सःशब्दः आत्मेतिशब्दः । यद्यस्मात्तस्मादितिपूर्वेणान्वयः । स्वभावेपरमात्मनीतिप्रमेयनिरूपणंचकृतं ।
आत्मादेहेधृतौयत्नेस्वभावेपरमात्मनीतिप्रमाणभूतानुशासनंचसूचितं ॥२२९॥ तदनन्यत्वमारंभणशब्दादिभ्यइत्यधिकरणेजगन्मि

थ्यात्वमुच्यतइतिमायावादिनोवदंति।तदपिनसूत्रकारस्याभिप्रेतं।तथाहि । आदिसूत्रेऽथपदेनब्रह्मणोन्यमधिकारिणंअतःपदोक्त प्रयोजनं कर्तव्यतयाविहितजिज्ञासांचांगीकृत्य जन्मादिसूत्रेऽस्येतिषष्ठ्याब्रह्मणोन्यजन्मादियोग्यंजगदुररीकृत्यप्रागुक्तभेदसूत्रैश्च ब्रह्मणोन्यच्चेतनाचेतनात्मकंजगदूरीकृत्य स्पष्टंभेदव्यपदेशाच्चान्यइत्यत्रपरमात्मान्यःजीवोप्यन्यइतिसाक्षादन्यशब्देनान्यावभ्यु पगम्य स्थित्यदनाभ्यांचेतिसूत्रेस्थित्यदनयोग्यावीश्वरजीवावन्यपदद्वयेनस्पष्टंस्वीकृत्य नेतरोनुपपत्तेर्विशेषणभेदव्यपदेशाभ्यांच नेतरावितिसूत्रद्वयेसाक्षादितरपदेनैवान्यानभ्युपेत्य उपगच्छंतिग्राहयंतीत्यत्रोपदेष्टॄनुपदेश्यांश्चनिर्दिश्या स्मिन्नप्यधिकरणेसत्त्वा च्चावरस्येतीतरसत्तामनुसृत्य पुनरनन्यशब्देन नविद्यतेऽन्यद्यस्येतितदभावंचकथंकथयेत् । परमार्थतइतिविशेषणाध्याहारेचोक्त जगद्विधायकबहुसूत्रानुसारेणापरमार्थतइत्येवविशेषणंकुतोनाध्याह्रियते । याचमानोपिपिण्याकमेवकुतोयाचसे। वाचारंभणंवि कारोनामधेयमितितवैवविषयवाक्येयस्मान्नामधेयंनामात्मकंरूपात्मकंजगत् वाचारंभणंवाचावागिंद्रियेणारंभणंयस्यतद्वागिंद्रिया ख्यकारणव्यंग्यमितियावत्।विकारः विविधाकारेणविकृतत्वाद्विकारपदवाच्यघटशरावादिकंजग न्मृत्तिका कार्यकारणयोरभे दव्यपदेशइतिवचनान्मृत्तिकाद्युपादानजन्यमितियावत्। उपादानोपादेययोरभेदंसूचयितुमेवमुक्तिः । इतितस्माद्धेतोः उभयो रपिस्वस्वकारणजन्यत्वाद्धेतोः सत्यमिवेतिअसत्यत्वव्यावृत्तिपूर्वकंस्पष्टंसत्यत्वोक्त्याचापारमार्थ्यायोगादस्मदुक्तविशेषणाध्याहार एवज्यायान्। यदिचात्रापिमात्रपदद्वयमध्याहृत्यवागारंभणमात्रंनामधेयमात्रमितिश्रुतेरर्थंवदसि । तर्हिप्रागुक्तबहुसूत्रानुसारेण यथाश्रुतश्रुत्यनुसारेणचसकलजगद्रक्षकमेकमेवपदमध्याहर । सर्वसंहारकबह्वध्याहारायकुतःप्रयतसे। अपिचारंभणशब्दादिभ्य



इतिवदतस्सूत्रकारस्यनेदंविषयवाक्यमभिमतं। तथासत्यल्पाक्षरतापेक्षीवाचेत्येवसौत्रहेतुपदस्यादिंकुर्यात्। तस्यैवकरणवाचकत याप्राधान्यात्प्राथमिकपदत्वाच्च। बह्वक्षरंद्वितीयंचारंभणपदंकुतस्सूत्रस्यादिंकृतवान् । अतएवाप्ततमेनाचार्येणोक्तमेवविषयवा क्यं। नविद्यतेन्योयस्येतिव्युत्पत्त्यानन्यत्वरूपमद्वैतमपिनात्रप्रतिपाद्यं। प्रागुक्तभेदार्थकबहुसूत्रविरोधात्। विषयवाक्येतददर्श नाच्च। प्रत्युतबहिरंगतयाजघन्यंबहुव्रीहिंविहायांतरंगंतत्पुरुषमेवाश्रित्यानश्वपदेनाश्वादन्यपश्वंतरपरिग्रहवत्अन्यस्माज्जगतोन्य दितिव्युत्पत्त्याजगद्भिन्नंब्रह्मैवसिद्ध्येत्। तदुपपादकतयाऽधर्मादिपदेष्विवनञोविरोधार्थमंगीकृत्यान्यपदोक्तजगद्विरुद्धंवाब्रह्मसि द्ध्येत्। तस्याप्युपपादकतयाऽभावार्थमंगीकृत्याघटंभूतलमितिवज्जगदाधारस्यैकदेशादन्यत्रमहाकायेजगद्रहितंवाब्रह्मसिद्ध्येत् । एवंचाणुत्वमहत्त्वाभ्यांपरस्परविरुद्धत्वाच्चेतनाचेतनात्मकजगद्भिन्नंब्रह्मेतिनञोर्थत्रयेणाप्यस्माकंसहेतुकसाध्यसिद्धिः । तृतीये ऽर्थेबृहच्छरीरेब्रह्मणिजगदभावप्रतिपादकतयाऽद्वितीयादिश्रुतीनांयोग्यार्थांतरसूचनेनतदविरोधसिद्धिश्च। तवतुबहिरंगबहुव्रीहि बलस्यनोभयमपिसिद्ध्येत्। तर्हिंभवतामपिविषयवाक्येकिंस्विदासीदधिष्ठानमित्यधिष्ठानस्यप्रथमप्राप्तस्यकुतःपरित्यागइतिचेत् । सत्यं। अधिकरणकारकस्यामुख्यत्वान्मुख्यकरणादिकारकचक्रधिक्कारएवभरवतासूत्रकृता यतोभूमिंजनयन्नित्युत्तरार्धेपंचम्यंत यतःपदेनैतस्यैवमुख्यतोगृहीतत्वाच्चतदेवादावुदाहृतमितिब्रूमः । आदिपदेनचधिक्कारशब्दादीनांग्रहणं । नचायंप्रश्नएवेतिशं क्यं। कस्स्विदेकाकीचरतीत्यादेस्सूर्यएकाकीचरतीत्यादिवदत्रपरिहारादर्शनात्। धिक्कारेणचसर्वथाकरणाद्यभावग्रहणेप्रकृत्यादेः कारणत्वविधायकश्रुतिपुराणविरोधात् । सत्ववतःकिमायुधेनेत्यादाविवतेषामप्राधान्यमेवग्राह्यमित्यस्मद्भाष्यकारोक्तएवसूत्रार्थो

नापरइतिभावेनाह ॥ यइति ॥ यस्सूत्रकारस्सत्त्वाच्चावरस्येतिसूत्रेतस्मिन्नेवाधिकरणेइतरस्यब्रह्मव्यतिरिक्तस्यसर्वस्यजगतस्स त्तामाह । ससूत्रकारः वदेत्आदिसूत्रेवदेत् ॥ २३० ॥ कस्तर्हिसूत्रार्थइत्यतआह ॥ स्वतंत्रेति ॥ स्वतंत्रकारणस्येत्यन्यशब्दार्थ कथनं । ईशेब्रह्मणिशून्यत्वतोऽभावात्तदनन्यत्वं तस्यब्रह्मणो नविद्यतेऽन्यस्स्वतंत्रोयस्यसोनन्यस्तस्यभावोनन्यत्वं । ब्रह्मणिस्वतं त्रकारणांतरनिरपेक्षत्वरूपमनन्यत्वमित्यर्थः । अहमन्यस्सोन्यइतिपरस्परनिरपेक्षेषुलोकेन्यपदप्रयोगदर्शनात् । उत्तरसूत्रेऽवरस त्त्वविधानाच्चतद्विपरीतवरशब्दवाच्यप्रधाननिषेधस्यैवात्रन्याय्यत्वादितिभावः ॥ २३१ ॥ यद्यस्मान्नीचैक्यंनीचादैक्यं । यतो

स्वतंत्रकारणस्यान्यस्येशेशून्यत्वतःपरं ॥ तदनन्यत्वमप्याहक्वचित्सूत्रेससूत्रकृत् ॥ २३१ ॥
यदुच्चस्यननीचैक्यंयतस्सच्चनबाध्यते ॥ अतोधिकरणेस्मिंश्चमिथ्यात्वादेःकथापिन ॥ २३२ ॥
अप्रधानस्यजगतस्सत्वंसिद्धमभून्मम ॥ हे(तू)तुंकरोतियद्व्यासस्तत्सत्त्वंकेननेष्यते ॥ २३३ ॥

यस्मात् । अतस्तस्मात्कारणात् । मिथ्यात्वादेरित्यत्रादिपदेनाभेदग्रहणं । जगतस्सत्त्वकथनात्मिथ्यात्वमर्थोन । अवरत्वकथना त्प्रधानाप्रधानयोरभेदोपिनार्थः । किंतुबहुव्रीह्याश्रयणेस्वतंत्रकारणांतराभावः । तत्पुरुषाश्रयणेघटोनेतिवदन्योजीवादिर्नेत्युक्ते जीवभिन्नंब्रह्मोच्यते । तस्यभावइतिव्युत्पत्त्याजीवेश्वरभेदोवार्थइतिभावः ॥ २३२ ॥ अस्मदभिमतंजगत्सत्यत्वमप्यस्मादेवसू त्रात्सिद्धमित्याह ॥ अप्रधानस्येति ॥ यत्सत्त्वंहेतूकरोति । जगत्सृष्ट्युपपत्तौहेतुतयाऽसूत्रयत् । जगत्सृष्टिरुपपन्ना अप्रधानक

रणादिजगतस्सत्त्वादितिसूत्रार्थपर्यालोचनयाकरणादिजगत्सत्त्वमेवसृष्ट्युपपत्तौहेतुरुक्तः । तच्चमिथ्यात्वविरोधिपारमार्थिकसत्त्वमेवभवेत् । अन्यथाहेतोस्स्वरूपासिद्धिप्रसंगादितिभावः ॥ २३३ ॥ अपिचसूत्रकृतास्वसूत्रेस्पष्टमैक्यस्यैवपूर्वपक्षीकृतत्वाच्चनासौसिद्धांतइत्याह ॥ किंचेति ॥ भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवदितिसूत्रे भोक्तुर्जीवस्य परात्मत्वापत्तेः परमात्मत्वापत्तेः परेऽव्ययेसर्वएकीभवंतीतिवाक्येश्रूयमाणत्वात् । श्रुतौपरइत्येवश्रवणात्परश्चासावात्माचेतिश्रुतिसमाख्यांसूचयितुंपरात्मेत्युक्तं । परमात्मेत्येवोक्तेश्रुतौपरमपदाभावेनसमाख्याऽयोगात् । सूत्रेचसमाख्याबलादेवपरत्वस्यप्राप्तत्वात्तदनुपादानमितिभावः । सः

किंचभोक्तुःपरात्मत्वापत्तेस्सोप्यविभागवान् ॥ इतिचेन्नेतियांपूर्वपक्षीकृत्यनिषेधति ॥२३४॥
अविभागाभिधांजीवब्रह्मणोरेकतांतुतां ॥ सिद्धांतयतियस्सूत्रभाष्यकृत्किलदोष्यसौ ॥ २३५ ॥

जीवः अविभागवान् । विभागोभेदः । अविभागःऐक्यं । तद्वान् । इदंचतयोरविभागइत्यध्याहारसहितसौत्रपदतात्पर्यं । अथवानविद्यतेविभागोयस्यसइतिव्युत्पत्त्याऽविभागवानित्युक्तं । भोक्तृपदेनजीवस्यप्रस्तुतत्वात्सइतिपरामर्शः । श्रुतावेकीभवंतीतिजीवनिष्ठैक्यस्यैवश्रूयमाणत्वादितिभावेनसौत्रपदार्थकथनंवा । इतिचेत् इतिपूर्वपक्षश्चेत् । नेति या मभिदांनिषेधति अध्याहृतनञा साक्षात्सूत्रकारएवदूषयति । तामभिदां यःमायावादीसिद्धांतयति पूर्वोक्ताधिकरणद्वयेसिद्धांतयति । असौदोषी पूर्वोत्तरविवेकशून्यत्वाख्यदोषवान्किलेत्यपहासः । एकसूत्रेसूत्रकृतैवस्पष्टंपूर्वपक्षीकृतस्यप्रमेयस्यपुनस्तस्यैवसूत्रांतरेसिद्धांतीकरणंबालस्यापि

नाभिमतं । अतस्सौत्रप्रतिज्ञैवपरस्यानभिज्ञतांगमयतीतिभावः ॥ २३४ ॥ २३५ ॥ किंचास्यसूत्रस्यस्वसूचितविषयवाक्यपर्यालोचनयामुक्तिकालीनभेदस्थापकत्वान्मुक्तावैक्यशंकापिगतेतिभावेनपुनस्तस्यैवसूत्रस्यार्थंविवेचयति ॥ भोक्त्रापत्तेरिति ॥ अपेक्षिततत्पदमात्राध्याहारेणसूत्रस्यैवप्रतीकग्रहणमिदं । इतिसूत्रे । वाचाश्रुत्या मुक्तिदशाप्रतिपादिकयाप्राप्तंयन्मुक्तैक्यंमुक्तानांपरमात्मनैक्यंतस्यशंकयेत्यर्थः । इत्यादिलोकवत् इत्यादिवाक्यप्रयोक्तृलोकवल्लौकिकवद्वास्यात् । परेऽव्ययेसर्वएकीभवंतीतिश्रुतिः गोष्ठेगवामिवमुक्तानांपरमात्मनिस्थानैक्यपरास्यात् । अभूततद्भावार्थकच्विप्रत्ययस्यप्राग्भूतस्वरूपैक्यपरत्वायोगेनापूर्वस्था

भोक्त्रापत्तेस्तदविभागश्चेत्स्याल्लोकवत्त्विति ॥ एकीभवंतिवाचात्रप्राप्तमुक्तैक्यशंकया
॥ २३६ ॥ एकीभवंतिगोष्ठेषुगावइत्यादिलोकवत् ॥ स्यादित्याहसमाधानंतेनमुक्तोपि
नैक्यवान् ॥ इतिप्राप्तमतोभेदंपरमार्थीचकारसः ॥ २३७ ॥ ॥ ॥

नैक्यस्यैववक्तव्यत्वात् । समाधानं श्रुत्यर्थापरिज्ञानमूलातवमुक्ताविभागशंकानोचितेतिसमाधानं । तेन मुक्ताभेदंपूर्वपक्षीकृत्यनिराकरणेनै क्यवान्नेतिप्राप्तं सूत्रमर्यादयै वागतं । अतो मुक्तावप्यैक्यंनिषिध्यभेदस्थापनात् । सःसूत्रकारः । भेदमिथ्यात्ववादिनापरेणलुंठितपारमार्थ्यस्यपुनस्स्थापनात्परमार्थीचकारेत्युक्तं । केवलानंदानुभवितृमुक्तजीवस्यैवप्रस्तावोयमितिज्ञापनायसूत्रेभोक्तृपदं । भोगीपरिजिनैस्सहेत्यादावानंदानुभवस्यैवभोगतयाप्रसिद्धत्वात् । भोगस्सुखेस्त्र्यादिभृतावित्यभिधानाच्च । मुक्तस्या



पिब्रह्मवद्भोग्यस्वस्वरूपानंदमात्रभोक्तृत्वसूचनेनभोक्तृभोज्यैक्यरूपस्वपूर्वपक्षाशोपोद्बलनायभोक्तुर्भोज्यत्वापत्तेरितिस्वानभिमतपूर्वपक्षसिद्धांतादिकंकृत्वापापंसंपादयतःपरस्यचशंकानिवारकं भोक्तुस्सकाशाद्भोज्यस्यापत्तेर्नाशरूपविपत्तेर्जायमानत्वान्नतयोरविभागशंकेति सर्वंखल्विदंब्रह्मेतिश्रुत्यापिभोक्तुर्जीवस्यैवब्रह्मत्वापत्तेरनभिमतत्वात्तद्बलाद्भोक्तृभोज्ययोर्ब्रह्मण्यैक्यशंकानुत्थानाच्चेतिदूषणद्वयंतत्पक्षेसूचयितुंसूत्रेभोक्तृपदं । अतएवहिविश्वतोमुखंसूत्रमाहुः ॥२३६॥२३७॥ तस्मान्मुक्तावपिभेदस्यस्पष्टंसूत्रएवसमर्थनात् । तत्रतत्रसूत्रेसूत्रेश्रुतौश्रुतौच। मुक्तोपसृप्यतादीत्यादिपदेन अस्मिन्नस्यचेति सुषुप्त्युत्क्रांत्योरिति संपद्याविहायेति जग

तस्माद्भेदोप्रतिद्वंद्वस्तत्रतत्रोदितोभवेत् ॥ मुक्तोपसृप्यताद्युक्त्यास्थिरीचक्रेपुनश्रुतं ॥ २३८ ॥
चेतनाचेतनजगद्ब्रह्मैक्याद्भोग्यवस्तुनः ॥ भोक्तृतापिभवेत्तेनविभागोभोक्तृभोग्ययोः ॥२३९॥

द्व्यापारवर्जमितिच सूत्रचतुष्टयंगृह्यते । एवंचेमानिषट्सूत्राणिवचनवृत्त्यामुक्तौभेदसाधकानि । अतएवस्थिरीचक्रइत्युक्तं । तंभेदं ॥ २३८ ॥ स्वाभिमतसूत्रार्थमुक्त्वासूत्रेसूचनयादूषितमपिपरपक्षंस्पष्टमनूद्यदूषयति ॥ चेतनेति ॥ सर्वंखल्विदंब्रह्म । एकमेवाद्वितीयं नेहनानास्तिकिंचनेत्यादिश्रुत्याचेतनाचेतनात्मकजगतःब्रह्मैक्यात् ब्रह्मणैक्यस्यप्रतीतत्वादित्यर्थः । भोक्तृता भोक्त्रैक्यं । तेनभोक्तृभोग्ययोरैक्येननिमित्तेन । विभागोभेदोनस्यादितिइहसूत्रेशंकाग्रंथस्यार्थइतिसंबंधः । समाधात्रासमाधानंकुर्वता जडैक्यंजडब्रह्मैक्यंनैवकथ्यते । जडमिथ्यात्ववादिनात्वयापिनकथ्यतएव । अतस्स्वमतविरुद्धेयंशंकैवनकार्येत्येववाच्यं इतिसमाधा

नमेववाच्यं। तांशंकां सौत्रपूर्वपक्षांशोक्तशंकांअंगीकृत्य परेणेयंकर्तुमुचितेत्यभ्युपगम्य समादधत् स्याल्लोकवदिति पूर्वपक्ष्यभि मतवाक्यस्यार्थांतरकथनरूपसमाधानंकुर्वन् इममर्थं त्वयाप्रतिज्ञाभागस्योक्तमर्थंनाभिप्रैति । स्वप्रतिज्ञाभागार्थतयानांगीकरोति। सम्यग्लग्नस्याप्यस्यसमाधानस्यास्फूर्त्यासमाधानांतरकथनमल्पज्ञस्यघटते। नसर्वज्ञस्यसूत्रकारस्येतिभावेनोक्तंवदतांवरइति॥२३९॥ ॥ २४० ॥ २४१ ॥ अस्मदाचार्योक्तार्थेतुनायंदोषइत्याह ॥ ममत्विति ॥ प्रापकीभूतवेदस्यैक्यपरतयापराभिमतस्यातएवतेन

नस्यादितियदीहार्थश्शंकाग्रंथस्यकथ्यते ॥ तर्हिनेतिसमाधा(त्रा)जडैक्यंनैवकथ्यते
॥ २४० ॥ इत्येववाच्यंशंकांतामंगीकृत्यसमादधत् ॥ नाभिप्रैतीममर्थंससूत्रकृद्वदतां
वरः ॥ २४१ ॥ ममतुप्रापकीभूतवेदस्योक्तस्यकागतिः ॥ इतिशंकांसमाधातुंलोकदृ
ष्टिमदर्शयत् ॥ ऐक्यंतुनोररीचक्रइतिसर्वंसमंजसं ॥ २४२ ॥ ॥ ॥

शंकितुंयोग्यस्यवेदस्येत्यर्थः । शंकां मयावेदमूलतयोक्तस्यममानुकूलस्यचमुक्तब्रह्मैक्यस्यनेतिनिषेधंकुर्वतात्वयाममवाक्यस्यका गतिरितिपूर्वपक्षिणोहार्दींशंकामित्यर्थः । परोक्तपूर्वपक्षइवास्मदुक्तपूर्वपक्षेऽपसिद्धांतस्यदातुमयोग्यत्वात्तद्विहायदूषणांतरमु क्तमितिभावः । अयोग्यदूषणस्यकथनेस्वस्यैवनिरनुयोज्यानुयोगेननिग्रहस्स्यात् । तदपिसर्वज्ञस्यनोचितमितिभावेनप्राग्वदतांव रइत्युक्तं । अथवाशंकांपूर्वपक्षिणाशंकितंजडाजडैक्यमंगीकृत्यस्वसिद्धांततयाभ्युपगम्य समादधत् अस्त्वैक्यं । तथापिसमुद्रफेन

तरंगादिवद्विभागोघटतइतिसमाधानंकुर्वंत्तवव्याख्यानं अर्थं स्वसूत्रार्थंनाभिप्रैतीतियोजना । सकलप्रमाणविरुद्धस्यस्वस्याप्यन
भिमतस्यजडाजडैक्यस्यसिद्धांतीकरणमप्रौढस्यतवैवशोभते । नतुप्रौढशिरोमणेर्व्यासस्येतिभावेनोक्तंवदतांवरइति । नन्वस्मद
भिमतविषयवाक्यैरेवभोक्तृभोग्ययोरविभागाख्यमैक्यंब्रह्मण्येवाशंक्यनेतितदैक्यं निषिध्यतर्हिवाक्यानांकागतिरितिशंकापरिहारा
य राजाराष्ट्रं अस्मिन्ग्रामेऽयमेकएव अयमद्वितीयोराजा अतिस्निग्धेपुरुषेत्वमेवाहमितिचलौकिकवाक्यवदितिनिदर्शनचतुष्टयप्र
दर्शनायस्याल्लोकवदितिसूत्रखंडप्रवृत्तिरस्तु । भोक्तृपदस्यस्वसहचरितभोज्यस्मारकत्वस्यैवन्याय्यत्वात्एकीभवंतीतिविषयवाक्य
स्यकः प्रसंगइतिचेत् । सत्यं । स्वनासिकाछेदंकृत्वापिपरस्यापशकुनंकुर्वन्खलइवत्वमेवेत्थमाशासे ऋजुगणाग्रणीरस्मदाचार्यस्तु
अध्यात्मसंबंधभूमाद्यस्मिन् तद्गुणसारत्वात्तुतद्व्यपदेशइतिचसूत्राभ्यांलक्षणयागौण्याचवृत्त्याप्रवृत्तसामान्यवाक्यानांगतेरुक्तत्वा
त् अत्रापितस्यैवप्रस्तावेचर्वितचर्वणंमन्वानोसाधारण्येनमुक्तावैक्यप्रतिपादकवाक्यानामेवगतिकथनमधिकरणोपाधिंकृत्वोपलक्ष
णयैकंवाक्यमुदाहरत् । अत्रहिपरेषांमहानाग्रहः । अतःप्रागुक्तसूत्रसूचनयैवकथंचिद्दूषयितुंशक्यमपीदंसविस्तरंपृथग्दूषयितुमय
मारंभः । भोक्तृभोग्ययोरिवकर्तृत्वभोक्तृत्वयोरपिअन्योन्यस्मारकत्वसंभवात्मुक्तावपिमुक्तानांमौक्तविषयभोक्तृत्वंपरमात्मनस्तुमु
क्तेष्वघटितंतत्कर्तृत्वंजगत्कर्तृत्वंचविरुद्धधर्मस्मारयितुंभोक्तृपदप्रयोगस्यास्मदर्थएवसम्यक्सार्थक्यात् । नन्वेवंसतिमुक्तावैक्यप्रति
पादकतयाप्रतीतस्ययत्रत्वस्येतिवाक्यस्यकथमनेनसूत्रेणगतिसूचनमितिचेत् । इत्थं । अव्ययानामनेकार्थत्वात्तुशब्दएवार्थे
अपिस्समुच्चये चस्त्वर्थे इत्यादिलौकिकवाक्यवत्अत्रापियत्रेत्यव्ययस्ययद्यर्थकत्वसंभवेनतर्कमुद्रयावाक्यप्रवृत्तिस्स्यात्इतिसूत्र

खंडेनैवतस्यापिवाक्यस्यगतेर्वक्तुंशक्यत्वात् । प्रसिद्धार्थपरित्यागेकिंकारणमित्यत्रापितत्पदस्यप्रसिद्धार्थपरित्यागेनतत्रेत्यप्रसिद्धा
र्थकथकत्वदादिलोकवत्स्यादित्येवोत्तरं । यत्रेतिपदसन्निधानात्तत्पदस्यतत्रेत्यर्थकथनमित्यत्रापि विपरीतंकिंनस्यादितिवदल्लोकवत्
तत्पदसमवधानाद्यत्रेत्यस्ययदित्येवार्थःस्यादित्युत्तरं । एवंतर्हियत्तत्पदयोःकथमन्वयइत्यत्रापिकिमाक्षेपइतिकिंशब्दस्याक्षेपार्थक
थकलोकवदाक्षेपार्थत्वमंगीकृत्यसर्वमात्मैवाभूदितियत्तत्केनमानेन नकेनापीतिसकलश्रुतिस्मृतिविरुद्धस्यास्यैवप्रमेयस्यनिवारणेना
न्वयस्स्यादित्युत्तरं । नकेवलमेतावत् । तथासतिकंपश्येत्कंजिघ्रेदितिलिङ्गतर्कमुद्रयाप्रवृत्तवाक्यस्यप्रतितर्कपराहत्यापरपराभाव
कवावदूकलोकवत्प्रवृत्त्या त्वदुक्तप्रमेयस्यप्रतितर्कपराहतिश्चस्यादितियोजना । अपिचतर्कस्यविपर्ययेपर्यवसाननियमांगीकारि

तस्मादनेनसूत्रेणपराभेद्येनसूत्रकृत् ॥ बबंधाद्वैतिनांकंठंवाग्बंधायेतिमेमतिः ॥ २४३ ॥

लोकवत्पश्यतिजिघ्रतिचेतिवाक्यपर्यवसानावश्यंभावेनमौक्तविषयदर्शनघ्राणनादिप्रतिपादकप्रमाणविरोधस्स्यादित्यपरायोजना ।
किंचास्योपासकस्यसर्वमित्युक्तमिथ्याभूतसकलदेहेंद्रियादेरात्मैवाभूदितिसावधारणतयोक्तमुख्यब्रह्मैक्यस्यपरमतेप्ययोगात् । आ
त्मव्यतिरेकेणकिमपिनास्तीत्यमुख्यार्थकथकमायिलोकवदस्माकमपिब्रह्मप्रेरणामंतरेणकिमपिनाभूत्तत्रकेनकंस्वातंत्र्येणपश्येदित्य
र्थःस्यात् । तेनचविष्टिगृहीतलोकवत्परस्यमूकीभावश्चस्यादित्यन्या सकलविद्वज्जनमान्याचयोजना । एवंबहुशाखानिर्णायक
त्वात्सूत्रंचविश्वतोमुखं भाष्यंचशतार्थमितिसंप्रदायविदः । अतोनेदमपूर्वं । अल्पमतित्वादेवोपरम्यते ॥ २४२ ॥ उक्तमर्थंसा
हित्यमुद्रयोपसंहरति ॥ तस्मादिति ॥ रज्ज्वेतिध्वनिः । पराभेद्येनो क्तविधयापरकृतकुचोद्याभेद्येन । केनाप्यच्छेद्येनेतिध्वनिः ।

॥ २६५ ॥

वाग्बंधायमूकीभावाय ॥ २४३ ॥ विविक्षति प्रवेष्टुमिच्छति । सौत्रयुक्तयएवशराः । घातःनिराकरणं । पदेपदे सूत्रस्थसर्वपदे
षु ॥ २४४ ॥ तद्गुणसारत्वात्तुतद्व्यपदेशःप्राज्ञवदितिसूत्रेणाप्यैक्यवाक्यस्यगतिरुच्यतइत्याह ॥ तद्गुणत्वेति ॥ यथासिंहवर्ति
शौर्यादिगुणसदृशगुणवतिदेवदत्तेसिंहत्वव्यपदेशस्तथातस्यब्रह्मणःगुणवद्गुणास्तद्गुणाः । तैस्सारत्वाच्छ्रेष्ठत्वात्तद्व्यपदेशः तत्त्वेन
ब्रह्मत्वेनव्यपदेशःजीवेष्वपिभवतीतिसूत्रार्थः । प्राज्ञवदितिदृष्टांतस्तुवैदिकमर्यादया । यथासर्वस्यप्राज्ञाख्यब्रह्मवत्सत्यत्वादिगु
णवत्त्वात्सर्वंखल्विदंब्रह्मेतिब्रह्मत्वेनोक्तिस्तथेत्यर्थः । जडस्यब्रह्मत्वंसर्वैरपिसादृश्येनैववक्तव्यमित्यतस्सिद्धप्रायत्वात्सूत्रकृतासए

एवंचश्रुतिसूत्रादौनकाप्यैक्यंविविक्षति ॥ सौत्रयुक्तिशरव्रातघातभीरु पदे
पदे ॥ २४४ ॥ तद्गुणत्वात्तुतत्त्वोक्तिरित्यन्यत्रप्रलंबिनां ॥ तत्त्वमस्यादिवाक्या
नांगौणींगतिमसूत्रयत् ॥ २४५ ॥ इदंपरास्त्रमंत्राणामुपसंहारकौशलं ॥ २४६ ॥

वद्दृष्टांतीकृतः । अस्माभिस्तुमंदमतीनामप्युपकारायलौकिकदृष्टांतउक्तः । अनेनसूत्रेणकेषामैक्यवाक्यानांगतिरित्यतआह ॥
अन्यत्रेति ॥ अन्यत्र प्राणोहमस्मीत्याद्युक्तवाक्येभ्योन्यत्रवेदभागे प्रलंबिनां विद्यमानानामित्यर्थः । सिंहस्त्वमसीतिलौकिक
वाक्यव त्सर्वंब्रह्मेतिवैदिकवाक्यवच्चगौणींगतिमसूत्रयदितियोजना ॥ २४५ ॥ एवंत्रेधैक्यवाक्यानांगतिकथनस्यप्रकृतोपयोगं
साहित्यमुद्रयाऽह ॥ इदमिति ॥ परस्यप्रतिवादिनःअस्त्रभूतमंत्राणां प्रागुक्तत्रिविधैक्यवाक्यानामित्यर्थः । एतैर्वाक्यैःखलु

स्वप्रतिवादिनंजेष्यामीतिपरस्याशयः। अतोस्त्रमंत्राणामित्युक्तं । उपसंहारकौशलं स्वानुकूलीकरणकौशलं । यथाप्रत्युपसंहार मजानताऽश्वत्थाम्नाप्रयुक्तब्रह्मास्त्रमंत्रस्यार्जुनेनप्रत्युपसंहारंकृत्वास्ववशताकृतातथेतिसाहित्यमपिध्वनितं ॥ २४६ ॥ बहुसूत्रैर्भे दंसाधयतस्सूत्रकारस्यभावमाह ॥ तद्धेति ॥ तेषुतेषुस्वसूत्रविषयवाक्येषुगतं तत्प्रकरणस्थं भेदश्रुतिशतं साक्षीकृत्यप्रमाणीकृत्य। सूत्रेसूत्रे । आनंदमयाधिकरणेस्वविषयभूतानंदमयेजीवैक्यशंकायामानंदमयप्रतिपादकवाक्यसमीपस्थवाक्यैरेवभेदंसाधयितुंत त्रैकंभेदसूत्रं। एवमन्येष्वप्यधिकरणेष्वित्यर्थः। भेदविषयकबहुवाक्यप्रदर्शनायबहुष्वधिकरणेषुभेदसूत्राणीतिभावः ॥ २४७॥

तद्धतद्धश्रुतिशतंसाक्षीकृत्यससूत्रकृत् ॥ जीवेशभेदसद्भवंसूत्रेसूत्रेप्यसूत्रयत् ॥ २४७ ॥
इदंचस्वास्त्रमंत्राणामभ्यासेनपुनःपुनः॥ शक्तेरुत्तेजनंतस्मात्तस्याग्रेकस्यशूरता ॥ २४८ ॥

इदं बहुष्वधिकरणेषुभेदसाधनं। स्वास्त्रमंत्राणां स्वाभिमतभेदसाधकवाक्यानां अभेदवादिनांमतनिरसनसमर्थत्वादस्त्रेत्युक्तं । एकप्रकारासकृदुक्तिरभ्यासः। तस्यापिबाहुल्यात्पुनःपुनरित्युक्तं। शक्तेर्भेदप्रतिपादनसामर्थ्यस्य। उत्तेजनमभिवर्धनं । तेषांवा क्यानांभेदएवतात्पर्यप्रदर्शनमितिभावः। तस्मा त्सतात्पर्यभेदवचनैर्भेदसाधनात्। तस्यसूत्रकारस्य। यथासम्यगभ्यासेनसाधि तास्त्रमंत्रस्याग्रेकेनापिस्थातुंनशक्यते तथासूत्रकृतोप्यग्रेकेनापिप्रतिवादिनास्थातुंनशक्यतइतिध्वनिः। मायावादिनोहीमानिसू त्राणिमिथ्याभूतभेदपराणीत्याहुः । उक्तविधयावेदेतात्पर्यविषयस्यभेदस्यब्रह्मवत्परमार्थत्वावश्यंभावात्तेषामपिमूकतेतिभावः

॥ २४८ ॥ अस्मिन्नेवार्थेप्रागुक्तयुक्तिंचस्मारयन्साहित्येनध्वनयति ॥ मुक्तोपसृप्यतेति ॥ सः व्यासः । तेनमुक्तिगत्वेन मिथ्या त्वाख्यशरः मिथ्यात्वमित्याख्यायस्यसःसचासौशरश्च । तेनाहतिंनिराचक्रे । परंप्रतिस्वप्रयुक्तभेदाख्यशरस्यतेनप्रयुक्तमिथ्यात्वा ख्यशरघातोयथानभवतितथाकृतवानित्यर्थः । यथाबहुदूरपातीधानुष्कशिरोमणेश्शरःअल्पदूरपातिनादुर्बलप्रतिभटशरेणस्पृष्टु मपिनशक्यते । तथामुक्तेरधस्तादेवपातिनापरप्रयुक्तमिथ्यात्वशरेणापिमुक्तिगोयंभेदःस्पृष्टुमपिनशक्योभूदितिसाहित्यमुद्रापिद्र

मुक्तोपसृप्यताद्युक्त्यायस्माद्भेदंस(मौ)युक्तिकं ॥ चक्रेतेननिराचक्रेमिथ्यात्वाख्यशराहतिं
॥२४९॥ मोक्षार्थब्रह्ममीमांसामारभ्यसपदेपदे ॥ यतोनिरणयद्भेदमतस्तत्त्वंमहद्धितत् ॥ २५० ॥
सूचनात्खलुतत्सूत्रंताद्दशैस्सूत्रसंचयैः ॥ इत्थमाघोषितोयोर्थस्तत्तत्त्वंतत्त्ववादिनां ॥ २५१ ॥
गुणैर्लिंगाभिधैर्यस्मात्प्रतिसूत्रंविपक्षिणः ॥ प्रत्याक्षिपत्सभगवांस्तद्ब्रह्मगुणबृंहितं ॥ २५२ ॥

ष्टव्या ॥ २४९ ॥ प्रकारांतरेणापिभेदमिथ्यात्वंनात्रवक्तुंशक्यमित्याह ॥ मोक्षार्थेति ॥ आरभ्य अथातोब्रह्मजिज्ञासेतिप्राथमि कसूत्रेप्रतिज्ञाय । सःसूत्रकारः । निरणयत् निर्णीतवान् । ततोमोक्षफलकत्वा त्तद्भेदाख्यंप्रमेयं ॥ २५० ॥ उक्तमर्थमुपसंहरति ॥ सूचनादिति ॥ इत्थंपूर्वोक्तप्रकारेण ॥ २५१ ॥ पूर्वजन्मादिसूत्रेलक्षणरूपगुणसिद्धिरित्युक्तं । इदानींसमन्वयाध्यायसकलसू त्रैरपिभगवतोगुणसिद्धिप्रकारंसविस्तरमाह ॥ गुणैरिति ॥ लिंगाभिधैर्गुणैरितिसंबंधः । प्रतिसूत्रं सूत्रेसूत्रे प्रत्याक्षिपत्निराकृ

तवान् । सः वेदव्यासः । अन्यत्रप्रसिद्धानामाकाशादिशब्दानांपरोवरीयस्त्वादिलिंगैःखलुभगवतिसमन्वयःप्रतिपाद्यते । लिंगं नामासाधारणोधर्मः । लिंगैरित्युपलक्षणं । अंतस्तद्धर्मोपदेशात् । अंतर्याम्यधिदैवादिषुतद्धर्मव्यपदेशात् । अदृश्यत्वादिगुणको धर्मोक्तेः । सर्वधर्मोपपत्तेश्चेत्यादिसूत्रेषुस्पष्टंभगवद्धर्माणामेवसाधनतयासाध्यतयाचनिर्देशःक्रियते । तत्तस्मात् । गुणपूरितमि त्यनुक्त्वागुणबृंहितमितिसाध्यनिर्देशंकुर्वतासौत्रब्रह्मशब्देनापिगुणसिद्धिरितिसूचितं ॥ २५२ ॥ नकेवलंगुणसिद्धिः । गुणानां सत्यतापिसिद्धेतिसाहित्यमुद्रयाऽऽह ॥ किंचेति ॥ बाणैःउक्तरीत्याभगवद्धर्माख्यबाणैः । रणाग्रणीःसःव्यासः । बाणाग्रन्यून

किंचशाणाशितैर्बाणैःप्रत्यर्थिमुखमुद्रणं ॥ कुर्वन्नामंस्तबाणाग्रन्यूनतांसरणाग्रणीः ॥ २५३ ॥
अतस्सदाप्यबाध्यत्वंगुणानांव्यासशासनात् ॥ साध्यंस्वयमसिद्धेनकस्साधयतिपंडितः ॥२५४॥
यस्मादारोपितोहेतुस्साध्यमारोपयेत्परं ॥ यक्षानुरूपोबलिरित्युक्तंवाक्यमनुस्मर ॥ २५५ ॥

तां शराग्रन्यूनतामिव स्वेनहेतुतयाप्रयुक्तधर्माणामपि अग्रेउपरि ज्ञानोत्तरकालमित्यर्थः । न्यूनतांबाध्यतां । अन्यत्रधारान्यून तां नामंस्त नामन्यत । रणाग्रणीरित्युभयत्रसमं ॥ २५३ ॥ अतः बाणाग्रन्यूनतायाःक्वाप्यदृष्टत्वात् । युक्त्यंतरमप्याह ॥ साध्यमिति ॥ स्वरूपासिद्धेर्हेतुदूषणत्वात् । बाधस्यचासिद्धिपर्यायत्वादितिभावः ॥ २५४ ॥ प्रकारांतरेणापियुक्तिमाह ॥ यस्मादिति ॥ बाष्पारोपितधूमेनारोपितवह्नेरेवसिद्धिदर्शनात्बाध्यधर्मेणसाधितस्समन्वयोपिबाधितस्स्यात् । ततःमोक्षानुप



योगित्वात्मीमांसावैयर्थ्यमितिभावः ॥ २५५ ॥ इदानींब्रह्मणोशाब्दत्वमपिब्रह्मसूत्रमर्यादयैवनिरस्तमित्याह ॥ शब्दानामिति ॥ शब्दैस्सिद्धांतयन् गौणश्चेन्नात्मशब्दात् । द्युभ्वाद्यायतनंस्वशब्दात् । शब्दादेवप्रमितइत्यादिसूत्रेषुभगवन्निष्ठशब्दैस्सिद्धांतयन् भगवदितरेषांप्रतिपाद्यत्वनिरासपूर्वकंभगवतएवतत्तद्वाक्यप्रतिपाद्यत्वंसाधयन् शब्दानांमुख्यवृत्तिंचभगवतिजगावितिसंबंधः । नचे द्भगवतिमुख्यवृत्तिर्नचेत् । हेतो स्साधकत्वेनप्रयुक्तशब्दरूपहेतोः । अनैकांत्यं विपक्षेजगत्यपिविद्यमानत्वात् । तथाचब्र ह्मैवात्रप्रतिपाद्यमितिसाध्यासिद्धिरितिभावः । तत्तस्मा द्ब्रह्मणएवप्रतिपाद्यत्वसाधकशब्दस्यापिब्रह्मण्येववर्तमानत्वावश्यंभावात्

शब्दानांमुख्यवृत्तिंचशब्दैःसिद्धांतयन्जगौ ॥ नचेद्धेतोरनैकांत्यंतद्ब्रह्मणिनलक्षणा
॥ २५६ ॥ मुख्यान्वयिनचेत्कस्मात्समन्वयमसूत्रयत् ॥ ब्रह्मसंबंधतश्शक्तेप्राणनाम
कुतोवदेत् ॥ वेदैश्चसर्वैर्वेद्योहमेवेत्याहकुतःप्रभुः ॥ २५७ ॥ ॥

अन्यत्रवृत्तेरयोगाच्चब्रह्मणिनलक्षणा । लक्षणेत्युपलक्षणं । गौणीवृत्तिरपिनेत्यर्थः । अन्याप्रतिपादकशब्देनयोर्थोनियमेनबोध्यते तस्यैवमुख्यार्थत्वस्यघटादौदर्शनादितिभावः ॥ २५६ ॥ ब्रह्मणश्शब्दमुख्यार्थत्वेश्रौतयुक्त्यंतरंचाह ॥ मुख्येति ॥ मुख्यान्वयि मुख्यतश्शब्दान्वयवत् । नचेत् ब्रह्मनभवतिचेत् । तत्तुसमन्वयादितिसूत्रेसमन्वयंकस्मादसूत्रयत् । सम्यगन्वयोहिसमन्वयः । ल्यब्लोपनिमित्तयापंचम्यासमन्वयंप्रतिपद्यतद्ब्रह्मैवशास्त्रयोनीत्यपिसूत्रार्थस्यविद्यमानत्वात्सकलशब्दानांसम्यगन्वयोपिसूत्रकृ

युक्ति- ॥ ४९ ॥

तोभिप्रेतइतिभावः । निमित्तांतरंचाह ॥ ब्रह्मेति ॥ भगवतस्सर्वशब्दमुख्यार्थत्वेगीतावाक्यमप्यर्थतस्स्मारयति ॥ वेदैरिति ॥ अनेनवेदैश्चसर्वैरहमेववेद्यइतिवाक्यंसूचयति । अन्यस्यवेद्यत्वाभावेसतिस्वस्यैववेद्यत्वंहिएवशब्दार्थः । अतस्सकलवेदमुख्यार्थत्वं भगवतिकथंनसिद्ध्येदितिभावः ॥ २५७ ॥ ब्रह्मणिधर्मसमन्वयानंगीकारेबाधकंचाह ॥ तत्तदिति ॥ रूपमात्रस्यब्रह्मस्वरूपमात्रस्य । एकनाम्ना प्रथमाधिकरणोक्तानंदमयनाम्ना । पूर्णानंदत्व समंतात्काशमानत्वादिनामार्थभूतगुणसमन्वयाभावेलक्षणया ब्रह्मस्वरूपनिरूपणस्यचैकेनैवनाम्नाकर्तुंशक्यत्वादन्यच्छास्त्रमनर्थकमितिभावः ॥ २५८ ॥ प्रथमद्वितीयपादौसविशेषब्रह्मप्रति

तत्तन्नामोक्तधर्माणांयदिब्रह्मणिनान्वयः ॥ रूपमात्रस्यैकनाम्नासिद्धेश्शास्त्रमनर्थकं ॥ २५८ ॥
द्युभ्वाद्यायतनत्वाद्याधर्मास्सर्वत्रवर्णिताः ॥ निर्विशेषंक्व मीमांसाक्वेयंसल्लिंगशब्दभूः ॥२५९॥

पादकौ । तृतीयपादएवनिर्विशेषब्रह्मप्रतिपादकइतिमायावादिनोवदंति । तदपिनेत्याह ॥ द्युभ्वाद्यायतनत्वेति ॥ द्युभ्वाद्यायतनंस्वशब्दादितितृतीयपादस्यादिसूत्रं । एवंचद्युभ्वाद्यायतनत्वादिधर्मा स्सर्वत्र तृतीयपादे । अतस्तृतीयपादस्यनिर्विशेषब्रह्मप्रतिपादकत्वकथनमप्यविचारितरमणीयमेवेतिभावः । व्याहतंचमीमांसायानिर्विशेषार्थपरत्वकथनमित्याह ॥ निर्विशेषमिति ॥ निर्विशेषंवस्तुक्व । सल्लिंगशब्दभूः । सल्लिंगानांसमीचीनशब्दानांचसाधकतयोक्तानांभूराधारभूता । सल्लिंगैस्सच्छब्दैश्चपूर्वपक्षंनिवार्यसिद्धांतंकुर्वतीत्यर्थः । इयंमीमांसाक्व । अतोव्याहतभाषित्वात्परकीयंभाष्यमुपेक्षणीयमितिभावः ॥ २५९ ॥ सूत्रैर्गुणसा

मल्लिका भेदसौ०

॥ २६८ ॥

धनमुपसंहरति ॥ अतइति ॥ २६० ॥ निर्गुणब्रह्मप्रतिपादकानिसूत्राणीतिप्रतिपादयत्परकीयशास्त्रंपरिहसति ॥ अतस्सूत्रा क्षरमिति ॥ तेशास्त्रस्यसूत्राक्षरंमूलंनदृश्यतइतिसंबंधः । किंमूलकंतर्हितच्छास्त्रमित्याशंक्यपापमूलकमेवेत्युत्तरमाह ॥ तन्म न्यइति ॥ तत्तस्मा त्सूत्राक्षरमूलत्वाभावात् । दुष्क्रियांपापं ॥ २६१ ॥ वेदेकस्यचिद्भागस्यतत्वावेदकत्वंकस्यचिद्भागस्यातत्वा वेदकत्वमितिमायावादिनोवदंति । तदपिसूत्रकारमतविरुद्धमित्याह ॥ तत्वस्येति ॥ द्वैधंद्विप्रकारता ॥ २६२ ॥ कुतोनाभि

अतोनंतगुणंब्रह्मेत्येवसूत्रकृतोमतं ॥ मुक्त्यर्थंकथिताधर्मामिथ्येत्यपिनशोभते ॥ २६० ॥
अतस्सूत्राक्षरंमूलंनतेशास्त्रस्यदृश्यते ॥ तन्मन्येप्रक्रियामूलंत्वत्पूर्वार्जितदुष्क्रियां ॥ २६१ ॥
तत्वस्याऽवेदकंकिंचित्किंचित्तत्वस्यवेदकं ॥ इतिवेदेषुयद्वैधंनतत्सूत्रकृतोमतं ॥ २६२ ॥
एकस्यामानतास्याचेत्कुतस्सूत्रकृतोवद ॥ श्रुतीनामविरोधार्थद्वितीयाध्यायविस्तरः ॥ २६३ ॥
जीवेशभेददार्ढ्योक्तेरहमज्ञइतीरितं ॥ अज्ञप्रत्यक्षमप्यज्ञंत्वामेवकुरुतेपरं ॥ २६४ ॥ ॥

मतमित्यतआह ॥ एकस्येति ॥ एकस्यवेदभागस्य श्रुतीनां ब्रह्मणिजगत्कारणत्वपूर्णानंदत्वादिमहिमप्रतिपादकतयापूर्वाध्याये समन्वितश्रुतीनां अविरोधाय युक्ति समय परस्पर विरोधपरिहाराय । श्रुतीनांप्रामाण्यरक्षणायखलुद्वितीयाध्यायेऽविरोधस मर्थनं । अप्रामाण्यमपिसंभवतिचेत्तद्व्यर्थमितिभावः ॥ २६३ ॥ अहमज्ञइतिप्रत्यक्षेणयद्ब्रह्मण्यज्ञानसमर्थनं तदपिसूत्रकृतोनाभि

मतमित्याह ॥ जीवेशेति ॥ जीवेशभेददार्ढ्योक्तेः जीवेशभेदेयद्दार्ढ्यं तस्योक्तेः । बहुसूत्रैर्जीवेशभेदसमर्थनादित्यर्थः । ईरितं मायावादिनाकथितं । अज्ञप्रत्यक्षं अज्ञस्याज्ञानिनःप्रत्यक्षमज्ञानप्रत्यक्षमितियावत् । परंकेवलं । त्वां जीवनिष्ठाज्ञानसाधकप्रत्यक्षेणब्रह्मण्यज्ञानसाधनाययतमानंत्वां । जीवेश्वरयोरभेदाभिप्रायेणखलुजीवनिष्ठप्रत्यक्षेणब्रह्मण्यज्ञानसाधनंपरस्य । स्पष्टंसूत्रकृताजीवेश्वरभेदसमर्थनात्तद्विरुद्धाभेदमाशासानस्त्वमेवाज्ञइतिभावः ॥ २६४ ॥ ननुसूत्रकारेणभेदःप्रतिपाद्यतां । तथापिमयाभेदएवाशास्यतेकोदोषइत्यतआह ॥ गुरूक्तमिति ॥ तथैव अन्यथीकर्तुमशक्यमेव ॥ २६५ ॥ ब्रह्मणोनिराकारतापिआनंदम

गुरूक्तमन्यथीकुर्वंच्छिष्योदूष्योविपश्चितां ॥ नानाशास्त्रार्थनिपुणैर्यदुक्तंतत्तथैवहि ॥ २६५ ॥
प्रियंकिलश्रोत्रनेत्रनासाकेशाननादिकं ॥ शिरःपदंहिकेशादिकंठांतांगस्यवाचकं ॥ २६६ ॥
मोदप्रमोदौदोर्द्वंद्वंपार्श्वद्वंद्वंकिलप्रभोः ॥ दक्षिणोत्तरहस्तौहिमध्यपक्षौविदुर्बुधाः ॥ २६७ ॥

याधिकरणप्रमेयेननिरस्तेतिप्रागुक्तं । तदधुनासुखात्मदेहमादायेतिदर्शयितुंप्रपंचयति ॥ प्रियमिति ॥ प्रियं विषयाभिव्यक्तसुखं । एवमुत्तरत्रापिमोदप्रमोदानंदमुत्पदैस्सुखावस्थाविशेषाःकथ्यंते । अतोनपौनरुक्त्यं । तस्यप्रियमेवशिरइत्यत्रशिरःपदस्यार्थकथनंश्रोत्रनेत्रेत्यादि । हियस्माच्छिरःपदंकेशादि कंठांतांगस्यवाचकं । अन्यथाकंठस्यशिरोधराभिधायककंधराभिधाचनस्यादितिभावः ॥ २६६ ॥ दक्षिणोत्तरपक्षौकावित्यतउक्तंदोर्द्वंद्वमिति । दक्षिणोत्तरहस्तावेवदक्षिणोत्तरपक्षपदवाच्यावितिभावः ।

॥ २६९ ॥

हियस्मात्दक्षिणोत्तरहस्तौ मध्यपक्षौ आत्मपदोदितमध्यांगपक्षौ । तदुभयपार्श्वेस्थितत्वात् । तस्मादितिपूर्वेणान्वयः । पृष्ठपार्श्वाग्रप्रदेशाहिमिलित्वामध्यांगमित्युच्यंते । अतःप्रसिद्धपार्श्वस्यमध्यांगएवांतर्भावात्तस्यपक्षौहस्तावेवभवेतामितिभावः ॥ २६७ ॥ आनंदआत्मेत्यस्यार्थकथनमानंदःकिलेत्यादि । आदिपदेन पार्श्वयोःपृष्ठस्यचग्रहणं । हियस्मादित्यादिकंपूर्ववत् ॥ २६८ ॥ ब्रह्मपुच्छमित्यस्यार्थमाह ॥ बृहत्सुखमिति ॥ ब्रह्मशब्दस्यार्थकथनंबृहदिति । तस्याध्याहृतविशेष्यस्वरूपकथनंसुखमिति ।

आनंदःकिलमध्योरस्स्थलनाभ्युदरादिकं ॥ आत्मशब्दोदितंरूपमेतावद्धिविनिश्चितं ॥ २६८ ॥
बृहत्सुखंकिलाऽस्यांघ्रिजंघोरुकटिपूर्वकं ॥ मुदःप्रमुदइत्युक्तामुदत्रोक्तासमाख्यया ॥ इयदे
वहिमध्यस्यपुच्छंचस्थितिकारणं ॥ २६९ ॥ प्रियमोदप्रमोदानंदात्मोर्ध्वांगस्यपादपि ॥ सजा
तीयोयतोवश्यंततोब्रह्मबृहत्सुखं ॥ २७० ॥ प्रियमोदप्रमोदानंदादिसर्वसुखंहितत् ॥ प्राचुर्या
र्थमयड्वाच्यंसर्वपूर्णंचतत्किल ॥ २७१ ॥ ॥ ॥

मुदाख्यंसुखमित्यर्थः । अस्यानंदमयस्य । पुच्छपदस्यार्थकथनमंघ्रीत्यादि । पूर्वपदेन गुल्फजानुमेढ्रादीनांग्रहणं । प्रतिष्ठापदस्यार्थकथनं स्थितिकारणमिति । प्रकर्षेणतिष्ठत्यनेनेतिव्युत्पत्त्याप्रतिष्ठा स्थितिकारणमित्यर्थः । अधोभागांगत्वात्पुच्छमितिचपादस्यैवनाम ॥ २६९ ॥ ब्रह्मपुच्छमित्येवश्रुतौश्रवणात्बृहत्सुखंपुच्छमितिकथंव्याख्यानमित्यतआह ॥ प्रियेति ॥ प्रियमोदप्रमो

दानंदाएवात्मास्वरूपंयस्य तच्चतदूर्ध्वांगंचतस्य । पात्पादः । यतःयस्मात् । ततस्तस्मात् । ब्रह्मपदेनोक्तंवस्तुबृहत्सुखमेव । योग्य तयाविशेष्याध्याहारइतिभावः । ह्रियस्मात्प्रियमोदप्रमोदानंदादिसर्वमूर्ध्वांगसुखं । तस्मादितिपूर्वेणान्वयः । तदूर्ध्वांगंह्रियस्मादा नंदमयइत्यत्रप्राचुर्यार्थमयट्प्रत्ययेनवाच्यं । तस्मादिदमपिबृहत्सुखंभवेदितिसंबंधः ॥ २७० ॥ २७१ ॥ ब्रह्मशब्दस्यमुदात्मक सुखसूचकत्वेश्रुतिसमाख्यांवदंस्तत्सूचितयुक्तिंचाह ॥ यत्रेति ॥ यत्रमुक्तौ । कामस्येच्छायाः काम्यंतइतिकामाविषयाः । एवं पंचविधाआनंदाश्चआप्तायथायोग्यंपूर्णाः । तत्रमाममृतंकृधीतिपवमानंप्रतिमुमुक्षोःप्रार्थनं । बहुमुक्तमध्यादिस्वरूपभूतानंदाना

यत्रानंदाश्चमोदाश्चमुदःप्रमुदआसते ॥ कामस्ययत्राप्ताःकामास्तत्रमाममृतंकृधि ॥ २७२ ॥
इतिपंचविधानंदंमुक्तौवक्तियतश्श्रुतिः ॥ अतोत्रापिब्रह्मपदंमुन्नामसुखसूचकं ॥ २७३ ॥ प्रति
बिंबसमाकारंबिंबंकिंनावलंबते ॥ अतस्समासमोक्त्याचमुच्चमुंचतिनाच्युतं ॥ २७४ ॥

मपिबहुत्वाद्बहुवचनं । अतो मोक्षेपंचविधानंदस्यश्रुतत्वात् । अत्रानंदमयश्रुतौ । मुन्नामसुखसूचकं । मुदितिनामयस्यतत् । तच्चतत्सुखंचतस्यसूचकंलक्षणयाप्रतिपादकं ॥ २७२ ॥ २७३ ॥ बिंबं प्रतिबिंबसमाकारंकिंनावलंबते । अवलंबतएवेतिसमाख्यो पोद्बलि(ता)कायुक्तिः । प्रतिबिंबभूतेषुजीवेषुएषामानंदानामपेक्षितत्वेबिंबभूतेपरमात्मनिसुतरामपेक्षितत्वात् । किंचयत्रेतिमुक्तौ खल्वेषांश्रवणं । तच्चतत्रत्यस्यहरेर्मुक्तानांचसममेव । अतस्समोक्तिरित्युपलक्षणं । समा उभयोरपिसाम्येनप्रतिपादिकाउक्तिश्चेत्य

षिग्राह्यं । समोक्तिस्समाख्या । मुन्मुदाख्यसुखं । अच्युतंनमुंचति । पादरूपेणतंभजेदेव । विषयाभिव्यंग्यसुखतयोक्तस्यशिरोरू पप्रियस्य कामस्येत्यादिनोक्तत्वादवयवत्रयस्यस्थलद्वयेप्येकप्रकारेणोक्तत्वात्अवशिष्टपुच्छमेवमुत्पदेनोच्यतइतिभावः । तस्माद्ब्र ह्मपदंमुन्नामकबृहत्सुखप्रतिपादकमेवेतिभावः ॥ २७४ ॥ साकारतामुपसंहरति ॥ पादादीति ॥ २७५ ॥ ननुशिरइवशिरइति उपचारेणशिरःपदप्रयोगात्कथंसाकारतेत्यतआह ॥ मुख्यार्थस्येति ॥ तदाब्रह्मशब्दस्याप्यमुख्यत्वसंभवात्पुच्छंमुख्यतोब्रह्मेति त्वदभिलषितंनसिद्ध्येत् । तस्यमुख्यत्वेऽत्रापिमुख्यत्वंस्यात् । तथाचसाकारत्वसिद्धिः । युक्त्यंतरंचाह ॥ सेति ॥ यस्मात्सा

पादादिकेशपर्यंतमेवमानंदरूपतां ॥ श्रुतिस्तुस्पष्टमाचष्टसूत्रकारोप्यसूत्रयत्
॥ २७५ ॥ मुख्यार्थस्यपरित्यागेपुच्छंब्रह्मेतिगच्छति ॥ सानिर्णिनायपुरुषविधए
वेतितद्वपुः ॥ कोशात्मदेहसादृश्यस्योक्तेःकोशाचभिन्नतां ॥ २७६ ॥ आशासा
नस्यतेकोशान्पंचस्थान्यांचवंचक ॥ शिरआदिपदंमुख्यंमुख्यायोगेहिलक्षणा ॥ २७७ ॥

श्रुतिःपुरुषविधएवेतिनिर्णिनाय पुरुषाकारतांनिश्चितवती । तत्तस्मा त्तच्छिरआदिपदेनवर्णितंवस्तु वपुरेवशरीरमेव । नलक्षणा। तत्पदस्यचावृत्तिः । दूषणांतरंचाह ॥ कोशात्मेति ॥ कोशात्मापंचकोशात्मायोजडदेहस्सहिपुरुषविधइत्यत्रपुरुषपदेनोक्तः । विधेतितत्सादृश्योक्तेः एवेतिसादृश्यावधारणाच्चकोशाद्भिन्नतामनुपचरिताकारंचनिर्णिनाय आनंदमयस्यनिश्चितवती । तथा चपुरुषविधएवेतिश्रुत्याऽर्थद्वयसिद्धिरितिभावः॥२७६॥ किंचशिरआदिपदानाममुख्यत्वंत्वयैववक्तुंनशक्यमित्याह॥ आशासा

नस्येति ॥ हेवंचक । पंचस्थान्यांच । कोशान् आनंदमयादीन्कोशानाशासानस्य आनंदमयाद्याःपंचापिकोशाएवेतिम
न्वानस्यते शिरआदिपदंमुख्यं । नहिकोशशिरस्यपिशिरःपदममुख्यं । अतश्शिरआदिपदस्योपचारांगीकारेतवापसिद्धांतश्चस्या
दितिभावः । युक्त्यंतरंचाह ॥ मुख्यायोगइति ॥ २७७ ॥ पुरुषविधएवेतिश्रुत्याप्रयोजनांतरंचसिद्धमित्याह ॥ यतइति ॥
सैव पूर्वोक्ताश्रुतिरेव । तद्वपुरानंदमयस्यवपुः । पुरुषविधएव । नत्वन्यथेतिविनिर्णयति । तेनपुरुषविधत्वस्यकदाप्यन्यथाभा

यतश्चसैवपुरुषविधएवेतितद्वपुः ॥ विनिर्णयतितेनास्यतनुरासीदबाधिता ॥ २७८ ॥ अतः
पूर्णानंदमात्रंसुखाद्याकारसुंदरं ॥ नारायणंपरंब्रह्मप्रियमेवेतिचश्रुतिः ॥ २७९ ॥ अवधार
यंतीप्रकृतिप्राकृतांशविवर्जितं ॥ केवलानुभवानंदरूपाकारमनोहरं ॥ २८० ॥ साक्षादाह
श्रुतौयस्यप्रीतिरस्तिमनीषिणः ॥ सनिराकारतांतस्यकथंब्रूयान्महात्मनः ॥ २८१ ॥ अतोव्या
समतस्स्वंस्वंमन्यमानस्ततोन्यथा ॥ योवर्णयतिकिंनास्यप्रक्रियाविक्रियाकिल ॥ २८२ ॥

वाभावसमर्थनेन । अस्यानंदमयस्य । अबाधिता बाध्यत्वरहिता पारमार्थिकसत्येत्यर्थः । अन्यथाभावोहिबाधः । एवकारेणच
तन्निरासेऽबाध्यत्वमपिसिद्ध्यतीतिभावः ॥२७८॥ आनंदमयादिविग्रहस्याप्राकृतत्वमपिश्रुत्यैवसिद्धमित्याह ॥ अतइति ॥ अतः
पूर्वोक्तप्रकारात् । पूर्णानंदमात्रमानंदमयश्रुतिराह । सुखाद्याकारसुंदरं प्रियमेवशिरइत्यादिश्रुतिराह । प्रियमेव नत्वप्रियंकिंचिदपी
त्यवधारयंतीसैवश्रुतिः प्रकृतिप्राकृतांशविवर्जितंसाक्षादाह॥२७९॥२८०॥२८१॥उक्तमर्थमुपसंहरन्परप्रक्रिया मपहसति॥अतइति



॥ स्वमात्मानं । ततःव्यासमतात् । प्रक्रियाविक्रियानकिमितिसंबंधः ॥ २८२ ॥ तत्तस्मात् ॥ २८३ ॥ एवंचसकलश्रु
तिस्मृतिपुराणादिनिर्णायकेब्रह्मसूत्रेभेदस्यैवनिर्णीतत्वात्निर्णेयेपुराणादौक्वचित्क्वचिद्भेदनिंदावत्प्रतीयमानानिवाक्यान्यन्यथायो
जनीयानीत्याह ॥ इत्थमिति ॥ तद्भेदोनास्तीतिवचनंविरोधंनिषेधति । विरोधस्यापिभेदशब्दवाच्यत्वात् । नत्वन्यो
न्याभावरूपंभेदं । तथासतिस्वनिर्णायकसूत्रविरोधप्रसंगइतिभावः । अस्तुनिर्णायकविरोधः । कोदोषइत्यतआह ॥ नि

व्याख्यारब्धानतद्भोक्तुमारब्धंस्वस्यदुष्कृतं ॥ कोव्याख्यातानिजंमूलमादावेवनिकृंतति
॥ २८३ ॥ इत्थंनिर्णायकेसूत्रेस्पष्टंभेदस्यसाधनात् ॥ श्रुतिस्मृतिपुराणादौनिर्णेयेयत्क्वचित्क्व
चित् ॥ २८४ ॥ भेदोनास्तीतिवचनंतद्विरोधंनिषेधति ॥ निर्णायकानुसारेणनिर्णेयस्यगतिं
विदुः ॥ २८५ ॥ टीकानुसारतोह्यर्थोमूलस्योन्नीयतेबुधैः ॥ मूलकर्तृकृताटीकाधार्यैवशिर
साखिलैः ॥ २८६ ॥ भेदशब्दोहिविद्वद्भिर्मिथोभेदेप्रयुज्यते ॥ क्रमेविरोधेधीभेदेनाशे
न्योन्यविमिश्रणे ॥ असंयुक्ततयान्योन्यस्थितिश्चापिभिदोच्यते ॥ २८७ ॥ ॥

णोर्यकेति ॥ २८४ ॥ २८५ ॥ एतत्कुत्रदृष्टमित्यतआह ॥ टीकेति ॥ प्रकृतेतुकैमुत्यमाह ॥ मूलेति ॥ मूलस्येतिहासपुरा
णस्यकर्त्रा व्यासेनकृता मूलकर्तृकृता टीका सूत्ररूपा । येनैवमूलंकृतंतेनैवतट्टीकापिकृताचेत्तदनुसारेणतन्मूलंयोजनीयमिति
किंवक्तव्यमितिभावः ॥ २८६ ॥ त्रयाणामेकभावानांयोनपश्यतिवैभिदां । सर्वभूतात्मनांब्रह्मन्सशांतिमधिगच्छतीतिभागवतश्लो

केभिदाशब्दस्ययोग्यार्थंवक्तुंभिदाशब्दार्थंविवेचयति ॥ भेदशब्दइति ॥ मिथोभेदे अन्योन्याभावे । अन्यत्स्पष्टं ॥ २८७ ॥ उक्तार्थेउदाहरणानिदर्शयति ॥ भिन्नासेनेति ॥ घटपटौभिन्नावितिअन्योन्याभावस्योदाहरणंप्रसिद्धत्वान्नोक्तं । भिन्नासेनेति स्थानभेदस्योदाहरणं । तेनस्थानभेदोपिभेदशब्दार्थइतिग्राह्यं । मित्रभेदइतिविरोधस्योदाहरणं । भिनत्त्यन्योन्यसौहार्दमिति भेदोविरोधइतिभावः । क्षीरनीरविभेदनमितिमिश्रणस्योदाहरणं । मिश्रणार्थेमाघकाव्यस्थितोदाहरणद्वयमाह ॥ भिन्ननीर

भिन्नासेनामित्रभेदःक्षीरनीरविभेदनं ॥ भिन्ननीरत्ववाञ्जाघेभिदुरांभस्त्ववागपि ॥ २८८ ॥
विमिश्रतामाहृयस्मात्तस्माद्भेदोविमिश्रणं ॥ द्वैधंचभेदोपायश्चपृथग्धीःकेत्युदीरितं ॥ २८९ ॥
छिन्नभिन्नमितिप्राहुर्नष्टंघटपटादिकं ॥ भ्रमोभिदा भिनत्त्यर्थानन्यथीकुरुतेयतः ॥ २९० ॥
त्रयाणामेकभावानांयोनपश्यतिवैभिदां ॥ इतितस्योक्तिरव्यक्तातद्व्यक्तोक्तीर्विचारय ॥ २९१ ॥

त्वेति ॥ अनेन एकत्रस्फटिकतटांशुभिन्ननीरानीलाश्मद्युतिभिदुरांभसोपरत्रेतिश्लोकंसूचयति । द्वैधंचभेदोप।यश्चेतिबुद्धिभेदस्यो दाहरणं । पृथग्धीरितिभ्रमस्योदाहरणं ॥ २८८॥ २८९ ॥ छिन्नभिन्नमितिनाशस्योदाहरणं । भेदशब्दस्यभ्रमवाचित्वेयोगंचाह ॥ भ्रमइति ॥ अर्थान्भिनत्तीत्यस्यार्थकथनमन्यथीकुरुतइति । शुक्तिंरजतीकरोतीत्यर्थः । भ्रमःयतोर्थान्भिनत्तितस्माद्भिदेतियो जना । पूर्वार्थाद्भिन्नार्थतासंपादकत्वेनभ्रमोपिभिदेतिभावः ॥ २९० ॥ यदर्थंभेदशब्दार्थउक्तःतदिदानींवक्तुमारभते ॥ त्रयाणा

मिति ॥ तस्यव्यासस्य । अव्यक्ता भेदशब्दस्यनानार्थकत्वात् अर्थविशेषव्यक्तिरहिता । तद्व्यक्तोक्तीः तस्यव्यासस्यव्यक्तोक्तीः । तथाचव्यक्तानुसारेणाव्यक्तस्यार्थोनेयइतिभावः ॥ २९१ ॥ वितर्कइत्युत्तरार्धस्य सरस्वत्यास्तटेराजन्नृषयस्सत्रमासतेति पूर्वार्धं । तेषामृषीणां त्रिष्वधीशेषुब्रह्मविष्णुमहेश्वरेषुकोमहानितिवितर्कोविचारस्समभूदितियोजना । अत्रत्रिष्वधीशेष्वित्युक्तत्वात्सकलचेतनेभ्योविभेदसिद्धिः । तेनसर्वैक्यंनेतिसूचितं । त्रिष्वधीशेषुकोमहानित्युक्त्यात्रयाणामैक्यंसाम्यंचन किंतु

वितर्कस्समभूत्तेषांत्रिष्वधीशेषुकोमहान् ॥ २९२ ॥ तच्छ्रुत्वामुनयस्सर्वेविस्मितास्त्युक्तसंशयाः ॥ भूयांसंश्रद्दधुर्विष्णुंयतश्शांतिर्यतोभयं ॥ २९३ ॥ शापप्रसादयोरीशाब्रह्मविष्णुशिवादयः ॥ सद्यःशापप्रसादोंगशिवोब्रह्मानचाच्युतः ॥ २९४ ॥ मन्येत्वां देवदेवानांत्रयाणांपुरुषर्षभं ॥ यद्बाधसेगुहाध्वांतंप्रदीपप्रभयायथा ॥ २९५ ॥ देवासुरमनुष्येषुयेभजंत्यशिवंशिवं ॥ प्रायस्तेधनिनोब्रह्मन्नतुलक्ष्मीपतिंहरिं ॥ २९६ ॥ ॥

त्रयाणांमध्येएकोमहानितिलब्धं । इदंचऋषीणांप्रश्नवचनं त्रयाणांसुव्यक्तमन्योन्याभावरूपभेदवचनं । तेषांसिद्धांतरूपमुत्तरपद्यंच विष्णोस्सर्वोत्तमत्वसमर्थनात्स्पष्टमन्योन्याभावरूपभेदवचनं । अतस्त्रयाणामितिचतुर्थस्कंधपद्यमन्योन्याभावरूपभेदमेवनपश्यतीतिनव्याख्यातुमुचितं । परस्परविरोधेनवाक्ययोरप्रामाण्यप्रसंगात् । अतस्स्पष्टवचनोक्तमन्योन्याभावरूपभेदंविहा

युक्ति-
॥ ५४ ॥

मल्लिका
भेदसौ०

यत्रयाणांविरोधादिरूपंभेदंनपश्यतीत्येवव्याख्येयमितिभावः । शापप्रसादयोरीशाइतिश्लोकेच शिवस्सद्यश्शापप्रसादद‌ः ब्रह्मा चतथा । अच्युतोनचेतिअच्युतस्यताभ्यांवैलक्षण्यकथनात्स्पष्टमन्योन्याभावःप्रतीयते । मन्येत्वामितिमुचुकुंदवाक्येच त्रयाणां देवानांमध्येत्वांपुरुषर्षभंपुरुषोत्तमंमन्यइत्युक्त्याब्रह्मशिवाभ्यांकृष्णस्यस्पष्टमन्योन्याभावःप्रतिपाद्यते । यद्यस्माद्गुहाध्वांतं हृदय गुहास्थितमज्ञानं । देवासुरमनुष्येष्वितिभागवतश्लोकेपिस्पष्टंशिवात्कृष्णस्यवैलक्षण्यप्रतिपादनात्अन्योन्याभावसिद्धिः ॥२९२॥ ॥ २९३ ॥ २९४ ॥ २९५ ॥ २९६ ॥ बहिरंगचतुर्विधवचनमुक्त्वांऽतरंगवचनपंचकविरोधमप्याह ॥ अत्रेति ॥ अत्रास्मिन्न ध्याये । यन्माययागहनयोपहतात्मबोधाब्रह्मादयस्तनुभृतस्तमसिस्वपंतः । नात्माश्रितंतववविदंत्यधुनापितत्त्वंसोयंप्रसीदतुभवा

अत्रापिभृगुरुद्रोक्तिरत्युचंहरिमाहहि ॥ पूर्वाव्यवहितोक्त्याचसर्वेशोविष्णुरीर्यते ॥ २९७ ॥

न्प्रणतात्मबंधुरितिभृगूक्तिः । यस्यपरमात्मनःमाययाइच्छया तदधीनप्रकृत्यावा उपहतात्मबोधाः उपहतःस्वयोग्यतातिरेकेण द्रष्टुंप्रतिबद्धःआत्मबोधःपरमात्मबोधः । आत्माश्रितंतवतत्वं यथास्थितगुणादिभरितस्वरूपंअधुनापिनविदंति । प्रणतात्मबंधुः प्रणतानामात्मनांजीवानांबंधुस्सोयंभगवान्प्रसीदत्वितियोजना ॥ तववरदवरांघ्रावाशिषाचानभिध्येह्यपिमुनिभिरसक्तैरादरेणा र्हणीये । यदिरचितधियंमांविद्धिलोकापविद्धंजगतिनगणयेयंत्वत्परानुग्रहेणेतिरुद्रोक्तिः । आशिषाफलाशया अनभिध्ये अभि ध्यातुमयोग्ये असक्तैरपिमुनिभिः । तववरदवरांघ्रौ लोकापविद्धंलोकस्नेहरहितं रचितधियंस्थापितबुद्धिंमांत्वंजानीयाः । तर्हि

॥ २७३ ॥

त्वत्परानुग्रहेणत्वत्परमानुग्रहेण । नगणयेयं । अन्यत्सर्वमुपेक्षयामीतिभावः ॥ एवंचप्रथमपद्येभृगुणाब्रह्मादीनांभगवतस्सकाशा न्मायाप्रतिबद्धतयास्वहृद्याधेयस्यभगवतःआधारतयासकलभगवत्तत्वाज्ञातृतयाचात्यंतभेदस्यैवप्रतिपादितत्वात् । द्वितीयश्लोके चरुद्रेणैवस्वस्यभगवच्चरणध्यातृतयाभगवतःपरमानुग्रहपात्रतयाचात्यंतभेदस्यैवप्रतिपादनात्कथंपुनरस्मिन्नेवाध्यायेत्रयाणामिति पद्येतदभेदोपिप्रतिपादनीयः । अतोनिरवकाशैतत्पद्यबलाद्विरोधरूपभेदार्थकतयासावकाशस्य योनपश्यतिवैभिदामित्यस्यैवार्थां तरंवक्तव्यमितिभावः । निमित्तांतरंचाह ॥ पूर्वेति ॥ पूर्वा भृगुरुद्रोक्तितोपिपूर्वा । अव्यवहिता अव्यवधाना पुरुषांतरव्यव धानरहिता । उक्तिः त्रयाणामितिश्लोकवक्तुर्मैत्रेयस्यैवोक्तिः । तया । तमुपागतमालक्ष्यसर्वेसुरगणादयः । प्रणेमुस्सहसोत्थाय ब्रह्मेंद्रत्र्यक्षनायकाः । तत्तेजसाहतरुचस्सन्नजिह्वास्ससाध्वसाः । मूर्ध्न्युद्धृतांजलिपुटाउपतस्थुरधोक्षजं । अप्यर्वाग्वृत्तयोयस्यम हित्वेस्वभुवादयः । यथामतिगृणंतिस्मकृतानुग्रहविग्रहं । इतिभगवदागमनप्रस्तावकालीनपद्यत्रयेणेत्यर्थः । त्र्यक्षोमहादेवः । अर्वागधस्तात् । तन्महिम्नामेकदेशे । तन्महिम्नामेकदेशपरिमितमहिम्निवेतियावत् । आद्येऽर्थेवृत्तिरंतःकरणं । द्वितीयेऽर्थेवर्तनं वायेषांतेतथोक्ताः । स्वभूस्स्वयंभूः । कृतानुग्रहविग्रहं कृतःअनुग्रहःकृपावलोकनमंदस्मितप्रियवचनादिःयेनसःकृतानुग्रहः सःवि ग्रहोयस्य । कृतौ देवासुरयोरनुग्रहविग्रहौ अनुग्रहकलहौयेनसइतिवा । देवेष्वनुग्रहायदैत्यानांवधायचयदास्वमूर्तिंदर्शयति तदातमभ्युत्थानादिनागृह्णंति । अन्यदाऽदृश्यमूर्तित्वात्मनस्येवध्यायंतस्स्वस्वव्यापारेषुवर्ततइत्यर्थः । अत्रविष्णुर्ब्रह्मरुद्रादिभ्य

स्सर्वेभ्यईशइतिस्पष्टमीर्यते ॥ २९७ ॥ युक्त्यंतरंचाह ॥ हेतुगर्भेति ॥ तन्मध्यगैव त्रयाणामितिश्लोकमध्यगैव । एकभावा नामितिहेतुगर्भावागस्ति । एकबुद्धित्वंहिबुद्धिभेदाभावएवहेतुः । नतुस्वरूपभेदाभावे । एकबुद्धीनामपिज्येष्ठकनिष्ठानांस्वरूपभे ददर्शनात् । अतोप्येकभावानामितिविशेषणदानादपिबुद्धिभेदस्यैवनिषेधइतिसिद्ध्यति ॥ २९८ ॥ ननूक्तस्सर्वोपिभेदःव्यावहा रिकोस्त्वित्यतआह ॥ मुनिभिरिति ॥ मुनिभिस्सर्वज्ञैश्चर्चितंविचारितं । तत्रतत्र ब्रह्मसभायां रुद्रसभायां विष्णुसभायांच गत्वाविनिश्चितं । ब्रह्मानभवति शिवोपिनभवति । किंतुविष्णुरेवेतिनिश्चितं । भयहृत्त्वेन इत्येतन्मुनितनयास्यपद्मगर्भपीयूषंभव

हेतुगर्भैकभावानामितितन्मध्यगैववाक् ॥ अतोपिबुद्धिभेदस्यनिषेधइतिसिद्ध्यति ॥ २९८ ॥
मुनिभिश्चर्चितंतत्रतत्रगत्वाविनिश्चितं ॥ भयहृत्त्वेनचप्रोक्तंकथंस्याद्व्यावहारिकं ॥ २९९ ॥
इदंतुदक्षयज्ञघ्नक्रूरकिंकरशंकिना ॥ मुनिनातत्प्रियायोक्तमितिस्याद्व्यावहारिकं ॥ ३०० ॥

भयहृत्परस्यपुंसइतिसंसारभयहारित्वेनप्रोक्तमिदंप्रमेयंकथंव्यावहारिकंस्यादितिभावः । किंचबहुवाक्यविरोधिएकमेववाक्यंव्या वहारिकार्थपरंभवतु । बहूनामनुग्रहोन्याय्यइतिवचनात् । प्रायोपवेशनंकृत्वामोक्षमेवापेक्षमाणंपरीक्षितंप्रतिव्यावहारिकार्थनि रूपणेकारणाभावाच्चास्मदुक्तरीत्योभयोरप्यव्यावहारिकार्थपरत्वसंभवाच्चनक्काप्यतत्वावेदकत्वरूपव्यावहारिकार्थत्वकल्पनावका शः । एतत्सर्वंचशब्देनसूचयति ॥ २९९ ॥ युक्त्यंतरेणापित्रयाणामितिपद्यस्यैवव्यावहारिकार्थत्वंयुक्तमित्याह ॥ इदंत्विति ॥

इदंत्रयाणामितिपद्यं । दक्षयज्ञघ्नस्यशंकरस्यकिंकरेभ्यइशंकिना विष्णोरेवसर्वोत्तमत्वेकथितेमामपिघातयंतीतिशंकावता । अविद्यमानार्थकथनेहेतुगर्भविशेषणमिदं । तत्प्रियाय तेषांकिंकराणांप्रियायोक्तं । नतुवस्तुस्थित्या । इतिहेतोःव्यावहारिकंस्यादितियोजना । यथाक्रूरचोरादिभ्योभीतस्तत्प्रियार्थमनृतमेववदति । तथैतत्पद्योक्तमेवानृतंभवितुमर्हतीतिभावः ॥ ३०० ॥ युक्त्यंतरंचाह ॥ विशिष्टस्येति ॥ भिन्नभिन्नदेहोपाधिविशिष्टानांत्रयाणामेषांदेवानामैक्यंविशिष्टैक्यं तेमतेनास्ति । ततःविशिष्टानांपरस्परंभेदस्यैवांगीकारात् । अन्यः अर्थः भेदपदस्यान्योन्याभावातिरिक्तविरोधाद्यर्थः । ननुयद्यपिविशिष्टयोस्साक्षादैक्यंनास्ति ।

विशिष्टैक्यंचतेनास्तिततोन्योर्थस्तवैवहि ॥ अमुख्यवृत्तिःकिलतेमुख्यार्थेसतिसाकथं ॥ ३०१ ॥
विभजस्वयथान्यायंनैवभेदोयथाभवेत् ॥ ३०२ ॥ यन्निमित्तस्सवैशापोयादृशोद्विजसत्तम ॥
कथमेकात्मनांभेदएतत्सर्वंवदस्वमे ॥ ३०३ ॥ ॥ ॥

तथापिजहदजहल्लक्षणयादेहांतःकरणादिविशेषणभागंत्यक्त्वाकेवलंविशेष्यमात्रस्यैक्यमस्ति । तदपेक्षयाभिदांनपश्यतीत्युक्तिरित्यतआह ॥ अमुख्येति ॥ मुख्यार्थे विरोधरूपमुख्यार्थेसतिसाऽमुख्यवृत्तिः ॥ ३०१ ॥ प्राग्भेदशब्दस्यविरोधवाचित्वंबहिरंगोदाहरणेनोक्तं । इदानीमस्मिन्नेवग्रंथेतदस्तीत्याह ॥ विभजस्वेति ॥ अष्टमस्कंधेऽमृतमथनप्रस्तावेनारायणींप्रतिदैत्यानांवचनमिदं । यथान्यायंसुधांविभजस्वविभागंकृत्वादिश । भेदः देवानामस्माकंचविरोधःयथानैवभवेत् । तथाविभजस्वेतिपूर्वेणा

न्वयः । यन्निमित्तइत्येकादशस्कंधेपरीक्षित्प्रश्नरूपवचनं । एकात्मनामेकबुद्धीनांयादवानांभेदःअन्योन्ययुद्धहेतुविरोधःकथमासीत् । एतद्वदस्वेतिशुकंप्रतिप्रार्थनं । यद्यस्मात् । इत्यस्मिन्ग्रंथेअयंभेदशब्दःविरोधेप्रयुज्यते । सामादौ सामदानभेददंडाख्यनीतिचतुष्टयेलौकिकैरपिभेदशब्दोविरोधेप्रयुज्यते । अतोवैदिकलौकिकबहुप्रयोगबलात् । अयंविरोधः अर्थः भेदशब्दार्थः । उपलक्षणंचैतत् । बहुशोविरोधएवभेदशब्दंप्रयुंजानस्यव्यासस्यात्रापिसएवाभिमतइतिद्रष्टव्यं ॥ ३०२ ॥ ३०३ ॥ ३०४ ॥ प्रका

इत्यस्मिन्नेवयद्ग्रंथेतत्रतत्रप्रयुज्यते ॥ विरोधेभेदशब्दोयंसामादौलौकिकैरपि ॥ अतो
यंमुख्यएवार्थोमुख्येसतिनलक्षणा ॥ ३०४ ॥ अथवावागियंतेषामेकार्थविषयाःसदा ॥
येभावास्तद्भिदांनेतिबुद्धिभेदंनिषेधति ॥ ३०५ ॥ तदैवयत्प्रसज्येतनिषेधस्तस्ययुज्यते ॥
शैववैष्णवयोर्वैरंमिषतांतुतयोरपि ॥ विरोधशंकातत्रैवप्रसक्तासानिषिध्यते ॥ ३०६ ॥

रांतरेणापियोजनिकामाह ॥ अथवेति ॥ इयंवाक् त्रयाणामितिवाक् । तेषांब्रह्मविष्णुशिवानामेकार्थविषयाःयेभावाःमनोवृत्तयः । एकार्थविषयबुद्धयइतियावत् । तेषामितिद्वेअपिव्यधिकरणषष्ठ्यौ । भिदांनपश्यतीतिसाक्षाद्बुद्धीनामेवभेदोनिषिध्यते ॥ ३०५ ॥ युक्त्यंतरंचाह ॥ तदैवेति ॥ तदातत्रयत्प्रसज्येततदेवनिषिध्यते । प्रसक्तस्यैवखलुनिषेधोदृष्टः । प्रसक्तिश्चबुद्धिभेदस्यैवास्तीत्याह ॥ शैववैष्णवयोरिति ॥ दक्षाध्वरेशैवानांवैष्णवानांचशापताडनादिनापरस्परंवैरंप्रवृत्तं । तद्वैरंमिषतांपश्यतां



जनानांतयोस्तत्स्वामिनोर्विष्णुशिवयोरपिविरोधशंकातत्रदक्षाध्वरएवप्रसक्ता । स्वामिनोर्विरोधाभावेभृत्याःकिमितिकलहंकुर्युः । अतोभृत्यकलहदर्शनात्स्वामिनोरपिकलहशंकाप्राप्ता । साकलहशंकानिषिध्यते । प्रसक्तस्यैवनिषेधसंभवात् ॥ ३०६ ॥ त्रिस्थानवासिनां सत्यलोकवैकुंठकैलासवासिनां । उपलक्षणंचैतत् । भिन्नायुधानांभिन्नवाहनानांभिन्नकरणानांचेतिद्रष्टव्यं । ब्रह्मविष्णुशिवानांरूपभेदप्रसक्तिःस्वरूपभेदप्रसक्तिः सदा दक्षाध्वरात्पूर्वमपिवर्तते । अतःपूर्वमपिविद्यमानत्वात् । अत्रदक्षाध्वरे । तत्प्राप्तिः । रूपभेदप्राप्तिः । तस्यरूपभेदस्य । विरोधःबुद्धिभेदश्चदक्षाध्वरएवप्रसक्तौ । नपूर्वं । अतोऽनयोरेवात्रनिषेधोयुक्तइ

रूपभेदप्रसक्तिस्तुसदात्रिस्थानवासिनां ॥ अतोत्रैवनतत्प्राप्तिर्निषेधोयंचतस्यन ॥ ३०७ ॥
पूज्यपूजकभावेनप्रेम्णस्तत्रैवदर्शनात् ॥ विरोधस्तुनिषेधार्हः कथंभेदोनिषिध्यते ॥ ३०८ ॥
तदैवतत्सभामध्येत्रिरूपाणांत्रिलिंगिनां ॥ स्तोतृस्तव्यतयानम्यनंतृभावेनचस्थितेः ॥ ३०९ ॥

तिभावः ॥ ३०७ ॥ किंचनिषेधयोग्यएवनिषेद्धव्योनतुतदयोग्यः । निषेधयोग्यश्चविरोधएवनस्वरूपभेदइत्याह ॥ पूज्यपूजकेति ॥ पूज्योविष्णुः । पूजकाब्रह्मादयः । तेषांभावेन । प्रेम्णःअन्योन्यस्नेहस्य । तत्रैव दक्षाध्वरएव । निषेधार्हःनिषेधयोग्यः । अन्योन्यंतेषांप्रेम्णःसर्वैरपिदर्शनात्तद्विरुद्धोविरोधएवभ्रांतिमूलत्वान्निषेधयोग्यः । उपलक्षणंचैतत् । बुद्धिभेदोपिनिषेधयोग्यइतिद्रष्टव्यं । भेदस्यनिषेधानर्हत्वमुपपादयति ॥ कथमिति ॥ तत्सभामध्ये दक्षाध्वरसभामध्ये । त्रिरूपाणांत्रीणि चतुर्मुखैकमुख

पंचमुखानि रूपाणियेषांते । त्रिलिंगिनां अक्षमाला चक्र शूलाख्यलिंगत्रयवतांतेषांप्रामाणिकोभेदःकथंनिषिध्यतइतिपूर्वेणान्वयः । स्तोतारोब्रह्माद्याः । स्तव्योनारायणस्तेषांभावस्तया । नंतारोब्रह्माद्याः नम्योनारायणस्तेषांभावस्तयाचस्थितेर्दक्षाध्वरेऽवस्थितेस्स्तोतृस्तव्यभावादिघटकःकथंभेदोनिषिध्यतइतिपूर्वेणान्वयः। उक्तविरुद्धधर्मचतुष्टयघटकस्वरूपभेदस्यतत्रैवप्रामाणिकतया सिद्धत्वात्नतत्स्वरूपभेदोनिषेधार्हइतिभावः ॥ ३०८ ॥ ३०९ ॥ दक्षाध्वरेस्तोतृस्तुत्यभावादिनाब्रह्मविष्णुशिवानामवस्थानप्र

तमुपागतमालक्ष्यसर्वेसुरगणादयः ॥ प्रणेमुस्सहसोत्थायब्रह्मेंद्रत्र्यक्षनायकाः ॥ ३१० ॥
तत्तेजसाहृतरुचस्सन्नजिह्वास्ससाध्वसाः ॥ मूर्ध्न्युधृतांजलिपुटाउपतस्थुरधोक्षजं ॥ ३११ ॥
अप्यर्वाग्वृत्तयोयस्यमहित्वेस्वभुवादयः ॥ यथामतिगृणंतिस्मकृतानुग्रहविग्रहं ॥ ३१२ ॥
इतिपूर्वोक्तविस्पष्टवाक्यादस्पष्टनिर्णयः॥ नहितात्कालिकाज्ञानीत्रिकालज्ञानवान्मुनिः॥३१३॥
महिम्न्यर्वाग्वृत्तयश्चेत्कथंतेधिकवृत्तिना ॥ हरिणैक्यंप्राप्नुवंतीत्यादिवाक्यंविचार्यतां ॥ ३१४॥

तिपादकंतत्रत्यवाक्यत्रयंपठन्विस्पष्टभेदप्रतिपादकैतच्छ्लोकानुसारेणैवास्पष्टस्यत्रयाणामितिश्लोकस्यार्थउन्नेयइत्याह ॥ तमुपागतमिति ॥ श्लोकाभिप्रायस्तुप्रागेवविवृतः । त्रिकालज्ञानवान् अतीतानागतवर्तमानदर्शी तात्कालिकाज्ञानी तस्मिन्नध्यायएवप्रागुक्तश्लोकाज्ञानीनहीतियोजना ॥ ३१० ॥ ३११ ॥ ३१२ ॥ ३१३ ॥ तेब्रह्माद्याः । इत्यनेनप्रकारेण । आदिवाक्यं

आदौ हर्यागमनप्रस्तावेविद्यमानमिदंवाक्यंविचार्यतां । विवेकिभिरितिशेषः ॥ ३१४ ॥ मध्यगतभृगुवाक्येनापिस्वरूपभेदएव सिद्ध्यतीत्याह ॥ यन्माययेति ॥ मध्ये तमुपागतमित्यादिश्लोकत्रयादुपरि त्रयाणामितिश्लोकादधस्तादित्यर्थः ॥ ३१५ ॥ तत् अंतिमवाक्यं आदिमध्यमौ प्रागुक्तश्लोकत्रयं भृगुवाक्यंच । भवन्मतेउपक्रमस्यज्यायस्त्वादुभयोरपिमतेबहुत्वेनादिमध्यवचनानामेवप्रबलत्वादितिभावः ॥ ३१६ ॥ अधुनात्रयाणामितिपद्यस्यपादमात्रस्यव्यत्यासेकृतेतदेवपरस्योत्तरंभवतीत्याह ॥ त्रयाणामिति ॥ एकभावानामेकप्रकारकाभिप्रायाणांत्रयाणामादिमध्यांतपद्यानां तमुपागतमालक्ष्य यन्माययागहनया त्रयाणामेकभा

यन्माययागहनयेत्युक्तंमध्येभृगोर्वचः ॥ आश्रयाश्रयिभावाद्यैस्स्वरूपैक्यंनिषेधति ॥ ३१५ ॥
त्रयाणामेकभावानांयोनपश्यतिवैभिदां ॥ इत्यंतिमंवचस्तच्चकथंहंत्यादिमध्यमौ ॥ ३१६ ॥
त्रयाणामेकभावानांयोनपश्यतिवैभिदां ॥ आदिमध्यांतपद्यानांसशांतिमधिगच्छति ॥ ३१७ ॥

वानामितिपद्यानामित्यर्थः । यःपुरुषः भिदां वाक्यभेदंनपश्यति । वाक्यभेदोयथाभवतितथातदर्थंनपश्यतीतियावत् । एकस्मिन्नध्यायेएकेनर्षिणाप्रोच्यमानपद्यानामेकवाक्यतैवकर्तव्या । वाक्यभेदस्तुसर्वथानकर्तव्यः । संभवत्येकवाक्यत्वेवाक्यभेदोहिदूषणमितियस्यविवेकोस्तीतिभावः। सपुरुषश्शांतिंकलहशांतिमधिगच्छति । पूर्वोत्तराविरुद्धार्थस्यैवविवेकिनावक्तव्यत्वात् । स्वरूपभेदाभावस्यचोक्तरीत्यापूर्वविरुद्धत्वाद्भिदाशब्दस्यपूर्वोत्तराविरुद्धबुद्धिभेदाद्यर्थकत्वमेववक्तव्यमित्यनुसंधायभेदवादिभिस्सह

कलहंमुंचतीतिभावः। वैशब्देनवाक्यभेदस्यदोषताप्रसिद्धेतिसूचयति। अथवा आदिमध्यांतपद्यानामित्यनेन सर्वस्मि न्नादौम ध्येऽवसानेच भूतःविद्यमानःआत्मास्वरूपंयेषांपद्यानांतानीतिसर्वभूतात्मनामितिपदस्यैवार्थस्सूचितः। अतोनेकस्यापिपादस्यव्य त्यासः। तच्छंकितश्लोकेनैवतस्योत्तरदानमितिभावः। एवंचपरबाणेनैवपरस्यघातकरणात्अतिचमत्कारोयमितिज्ञातव्यं॥३१७॥ प्राक्स्वरूपभेदनिषेधेपूर्वविरोधउक्तः। इदानीमुत्तरविरोधंचाह ॥ यदीति ॥ उच्छिष्टाहुते र्यज्ञावसानेयज्ञोच्छिष्टद्रव्येणक्रिय माणरुद्राहुतेराज्ञा देवऋष्यादीनामतिदेशः व्यर्था। तत्रहेतुः। यतःकारणात् ब्रह्मविष्णुरुद्राणांस्वरूपैक्येसति सर्वा विष्णुब्र

यदिस्वरूपभेदस्यनिंदैवेयंभवेत्तदा॥ व्यर्थोच्छिष्टाहुतेराज्ञासर्वाशर्वाहुतिर्यतः॥ निर्मू
लएवकलहोनिर्मूलाशांतिरप्यभूत्॥ ३१८॥ पारमार्थ्येनभेदोयंयदिनेतिमतंतव॥
अपारमार्थ्येनतदानेत्यार्यस्यमतंभवेत्॥ अतस्सुस्थिरएवायंभेदोभूत्पदकल्पने॥ ३१९॥

ह्मादीनुद्दिश्यक्रियमाणाप्याहुतिश्शर्वस्यमहादेवस्याहुतिरेव। अतइतिपूर्वेणान्वयः। त्रयाणामेषामैक्येकलहोपिनिर्मूलः। विष्णौ क्रियमाणभक्तेरेवस्वभक्तित्वाद्रुद्रस्यकोपकारणंकिमपिनास्तीतिभावः। शांतिरपिनिर्मूला। मदाहुतिरेवत्वदाहुतिरितिविष्णुनाव क्तव्यं। उच्छिष्टाहुतिदानाख्यशांतिरपिनिर्मूलेतिभावः॥ ३१८॥ शंकते॥ पारमार्थ्येनेति॥उत्तरमाह॥ अपारमार्थ्येति॥ आर्यस्यतत्ववादिनः। अतोऽपारमार्थ्येनेतिपदाध्याहारात्। सुस्थिरःअपारमार्थ्येननपश्यतीत्युक्तेपारमार्थ्येनैवपश्यतीत्यर्थलाभा



त्अतिस्थिरः। पदकल्पने अविद्यमानपदाध्याहारे। सर्वथाऽपेक्षितस्यपदस्योपादानेअध्याहारः। उक्तरीत्यायथास्थितपदेनैवार्थ घटनायामपिबलात्कारेणपदांतरोपादानात्कल्पनइत्युक्तं॥ ३१९॥ चरमः तत्ववादीकथमार्योन वाक्यद्वयस्यापिप्रामाण्यरक्ष णात्आर्यश्श्रेष्ठएव। आद्यःमायावादी। भेदस्यापारमार्थिकत्वकथनेतत्प्रतिपादकवाक्यानामप्रामाण्याख्यशिक्षाकरणादित्यर्थः ॥ ३२०॥ नचेत्मदुक्ताध्याहारमनंगीकृत्यभेदस्यपारमार्थ्यमेवनिषिध्यतेचेत्। तर्हि तत्त्वमस्यादिवागप्यपारमार्थ्येनैक्यंवक्ति। पारमार्थ्येन त्वंपदस्यतत्पदस्यावृत्तिंकृत्वात्वंत्वमेव तत्तदेवेति जीवस्यब्रह्मणश्चात्यंतवैलक्षण्यप्रतिपादनेनभेदमेववक्तीतितत्ववा

कथमार्योनचरमोवाक्यप्रामाण्यरक्षणात्॥ अनार्यश्चकथंनाद्योवाक्यप्रामाण्यशिक्षणात्॥३२०॥
नचेदपारमार्थ्येनतत्त्वमस्यादिवागपि॥ वक्त्यैक्यंपारमार्थ्येनत्वंत्वमेवासितच्चतत्॥ ३२१॥
इत्याहेतिभवेच्छ्रुत्यामिथ्यार्थस्तन्नकथ्यते॥ मुख्येबाधेप्यमुख्यार्थःकथ्यतेसावकाशया॥ ३२२॥
सोनुप्रविष्टोभगवांश्चेष्टारूपेणतंगणं॥ भिन्नंसंयोजयामाससुखंकर्मप्रबोधयन्॥ ३२३॥

द्यपिवदेत्। इयांस्तुविशेषः। मायावादिनातुभेदस्यापारमार्थिकत्वमुक्त्वातत्प्रतिपादकवाक्यस्यातत्वावेदकत्वमेवोक्तं। तत्ववादी तुतत्त्वमसीतिवाक्यस्यैक्यार्थेऽप्रामाण्यमुक्त्वातदेववाक्यंस्वार्थेप्रमाणीकृतवांश्च। अतस्सर्वथावाक्यस्याप्रामाण्यकथनात्पूर्ववद यमेवविदुषामार्यइतिभावः। इत्याहेतिभवेत् इत्यर्थमाहेतिस्यात्। तत्तस्मात्। अर्थमिथ्यात्वंयथानभवति तादृशाध्याहारा देस्संभवात्। तदेवविवेचयति॥ मुख्यइति॥ ३२१॥ ३२२॥ भिदाशब्दस्यभागवतोक्तरीत्यैवार्थांतरमाह॥ सोनुप्रविष्ट

इति ॥ सःभगवान्नारायणः । तंगणंतत्वदेवतागणं । भिन्नं अन्योन्यासंयुक्ततयास्थितंसंयोजयामास । अन्यत्स्पष्टं । इत्यनेनप्रकारेणअसंयुक्तता अन्योन्यसंयोगराहित्यमेवभेदइतिकथ्यते । तेषांब्रह्मविष्णुशिवानां । याऽसंयुज्यस्थितिःमंदद्दष्टीनांप्रतीयमाना तां । अंगनाभ्याद्यवयवः । हृत्पद्मंच । तान्येवधामानि । तेषुसंयुज्यवसतांतेषामित्यन्वयः । सदानारायण नाभौमनः प्रसादेवाब्रह्मासंयुज्यतिष्ठति । मनस्यंतःकरणेक्रोधेवारुद्रस्संयुज्यतिष्ठति । नित्यंध्यायतोस्तयोर्हृत्पद्मेविष्णुस्तिष्ठति । अतस्तेषामसंयोगाख्यभेदंवा भिदांनपश्यतीतिवाङ्निषेधतीतिभावः ॥ ३२३ ॥ ३२४ ॥ अस्यार्थस्यपूर्वोक्तार्थेनसहसंबंधंघटयति ॥ उ

इत्यसंयुक्तताभेदोग्रंथेस्मिन्नेवकथ्यते ॥ असंयुज्यस्थितिंतेषामियंवाक्तन्निषेधति ॥ सदा
संयुज्यवसतामंगहृत्पद्मधामसु ॥ ३२४ ॥ उक्ताविरोधसिद्ध्यर्थमर्थोयंचनिगद्यते ॥ ३२५ ॥
देवानुद्दीपयन्विष्णुर्दैवैरूपैःकिलाविशत् ॥ असुरानासुरैरूपैर्नागनागाकृतिःकिल ॥ ३२६ ॥

क्ताविरोधेति ॥ ब्रह्मशिवयोर्विष्णुध्यातृत्वाद्विष्णोश्चतदाधारत्वेनसदासंयुक्तत्वाद्विरोधादेरवकाशएवनास्तीतिभावः॥ ३२५ ॥ भिदाशब्दस्यस्वरूपभेदपरत्वेपिभागवतप्रक्रिययैवयोजनिकाप्रकारमाह ॥ देवानिति ॥ अनेनपद्येन तथाऽसुरानाविशदासुरेण रूपेणतेषांबलवीर्यमीरयन् । उद्दीपयन्देवगणांश्चविष्णुर्दैवेननागेंद्रमथापरेण । इतिभागवतवाक्यमर्थतोगृह्णाति । अतोभागवते प्रोक्तत्वात् । सर्वत्रदेवासुरसरीसृपादिषु । तद्रूपरूपः तेषांरूपवद्रूपंयस्यसः । तत्तस्मात् ब्रह्मणिब्रह्मरूपेणरुद्रेरुद्ररूपेणभगवतो

र्यंतर्यामितयास्थितत्वात् । एषावाक् त्रयाणामितिवाक् । भेदंअन्योन्याभावरूपभेदं । एकभावानामेकस्वभावानां त्रयाणांब्र
ह्मस्थविष्णु रुद्रस्थविष्णु पृथक्स्थितविष्णुरूपाणांभिदांनपश्यतीतिवाक्यार्थः । तयाणामितिसामान्यतस्त्रित्ववाचकपदस्योक्तभग
वद्रूपेष्वपिनेतुंशक्यत्वादितिभावः ॥ ३२६ ॥ ३२७ ॥ अस्याप्यर्थस्यद्वेधापूर्वोक्तार्थेसंगतिमाह ॥ संयुज्येति ॥ अंतर्यामिरूप

अंतस्सर्वत्रतद्रूपरूपोविष्णुश्चतिष्ठति ॥ तद्ब्रह्मस्थब्रह्मरूपाच्छिवस्थशिव
रूपतः ॥ पृथक्स्थितस्यविष्णोर्वाग्भेदमेषानिषेधति ॥ ३२७ ॥ संयुज्यैव
स्थितिंप्रोक्तांस्थिरीकर्तुमिदंवचः ॥ हृदिस्थरूपप्रेमित्वादवैरंवातयोर्हरौ ॥३२८॥
अतर्यामिविवक्षायांभेदोनाशोभ्रमोपिवा ॥ मिश्रणंवाक्रमादेषुत्रितयंवा
ङ्निषेधति ॥ ३२९ ॥ अभेदघटनायोक्तात्रयाणामप्यनाश्यता ॥ नश्यद्देहेप्य
नाशायतद्देहेभ्रमशून्यता ॥ अविद्याद्यैरमिश्रत्वंतदभ्रांत्यैनिगद्यते ॥ ३३० ॥

योःपृथक्स्थितरूपस्यचभेदाभावेऽस्यापिरूपस्यसदासंयुज्यैवस्थितिरुक्तप्रायेतिभावः । अवैरमविरोधं । युक्तिस्तुपूर्ववदेवद्रष्टव्या
॥ ३२८ ॥ पुनरर्थत्रयमाह ॥ अंतर्यामीति ॥ एषुरूपत्रयेषु । त्रयाणामेषांभगवद्रूपाणां भिदां नाशंभ्रमंमिश्रणंचयोनपश्यति।
इत्यर्थत्रयंचसंभवतीतिभावः ॥ ३२९ ॥ तत्रनाशाभावार्थस्यपूर्वोक्तार्थसंगतिमाह ॥ अभेदेति ॥ अभेदघटनाय पूर्वोक्तभेदा

भावघटनाय । एकस्यनाशेऽपरस्यचानाशेह्यभेदोनघटते । सर्वेषामनाशेवैलक्षण्याभावात्प्रागुक्ताभेदोघटतइतिभावः । भ्रमाभा
वार्थस्यापिप्रागुक्तानाशार्थेसंगतिमाह ॥ नश्यदिति ॥ तद्देहेतयोर्ब्रह्मरुद्रयोर्देहेभ्रमशून्यता अहंममताख्यभ्रमशून्यताउक्ता ।
तद्देहाभिमानेसतिह्यंतर्यामिरूपयोरपिदेहनाशप्रयुक्तनाशस्स्यात् । देहाभिमानाख्यभ्रमाभावेतन्नाशेप्यनयोरनाश्यताद्दढीकृतेति
भावः । तृतीयार्थस्यापिद्वितीयार्थेनसंगतिमाह ॥ अविद्याद्यैरिति ॥ भिदाशब्दस्यमिश्रणार्थत्वेकेनमिश्रणमित्याकांक्षापूरणा
याविद्याद्यैरित्युक्तं । अविद्यादिदोषैर्मिश्रणंयोनपश्यतीतितृतीयोर्थः । अविद्यादिदोषामिश्रत्वंचतदभ्रांत्यै तयोरंतर्यामिरूपयोर्दे

अंतर्यामिविवक्षायांमुख्यास्यादेकभावना ॥ भिन्नभिन्नमनस्कत्वान्नचेन्नातोपितस्यवाक् ॥ ३३१ ॥
रूढलक्षणयान्यत्रबुद्धेरैक्यंचभिन्नता ॥ विषयस्यैक्यभेदाभ्यामुक्तेमुख्यंतुतद्धरौ ॥ ३३२ ॥

हाभिमानाख्यभ्रांत्यभावायनिगद्यतइतियोजना ॥ ३३० ॥ अंतर्यामिविवक्षायास्सूचकंचमूलएवास्तीत्याह ॥ अंतर्यामीति ॥
एकःभावोंतःकरणंयेषामितिह्येकभावशब्दार्थः । सचपरमात्मरूपेषुतदंतःकरणस्याप्येकत्वाद्धटते । नचे दंतर्यामिविवक्षानक्रिय
तेचेत् भिन्नभिन्नमनस्कत्वादेकभावानामितिविशेषणंनघटतइत्यर्थः । अतः एकभावानामितिविशेषणस्यघटनीयत्वात् । तस्यांत
र्यामिणः ॥ ३३१ ॥ अन्यत्रभगवतोन्यत्र । बुद्धेरैक्यंभिन्नताच बुद्ध्यैक्यंबुद्धिभेदश्चेत्यर्थः । रूढलक्षणयाविषयस्यैक्यभेदाभ्या
मुक्तै । विषयेक्याद्बुद्ध्यैक्यमुक्तं । विषयभेदाद्बुद्धिभिन्नताचोक्ता । बहुपुरुषेषुबुद्ध्यैक्यं लक्षणयैकविषयकबुद्धित्वादेववक्तव्यं ।



नतुसाक्षाद्बुद्धीनामेवैक्यमस्ति । बुद्धिभेदोपिलक्षणयाभिन्नविषयकबुद्धित्वादेववक्तव्यः । बुद्धिस्वरूपभेदस्यसर्वदाविद्यमानत्वात् ।
तस्माद्भगवतोन्यत्रोभयमप्यमुख्यमेव । बुद्धिभेदस्वरूपनिरूपणंतुप्रसंगादितिज्ञातव्यं । तद्बुद्ध्यैक्यंहरौमुख्यं । अतोमुख्यार्थला
भायोक्तविधयाभगवद्रूपाणामेवात्रनिरूपणंकर्तव्यमितिभावः ॥ ३३२ ॥ भिदांनपश्यतीतिशब्दमात्रबलात्त्रिदेवतैक्यंवदतामप्रौ
ढिंदर्शयति ॥ शब्दइति ॥ शब्दोऽनेकार्थेनेयः एकार्थायोगेन्यार्थेपिनेतुंशक्यः । नानार्थकत्वाच्छब्दानां । निर्णीतोर्थःस्वामि
भृत्यभावेनपूर्वोत्तरप्रकरणेषुनिश्चितः अस्मिन्श्लोकेपितत्समाख्ययात्रयाणामितिभेदसापेक्षत्रित्वोक्त्याएतच्छ्लोकार्थवक्तृमैत्रेयदृष्ट्या
निश्चितोब्रह्मविष्णुशिवानामन्योन्याभावरूपार्थःक्वनीयते । कथंतस्यनिषेधःक्रियते । अंतर्यामिपक्षेऽस्माकंत्रित्वोक्तिस्तुविशेषब

शब्दोनेयोह्यनेकार्थेनिर्णीतोर्थःक्वनीयते ॥ पुत्रोनपुत्रीतिवाक्यंनिर्णीतार्थानुसारिहि ॥ ३३३ ॥

लादन्यपक्षेभेदबलात् । परस्यतुनिर्विशेषवादिनःसर्वत्रभेदबलादेव । अतस्त्रित्वकथनात्कथंनभेदनिश्चयः । किंचपरमतेसर्वभू
तात्मनामितिसर्वभूतैक्यकथनात्त्रयाणामेवभेदप्रतिषेधेकारणाभावाच्च । अतोन्यत्रसंभावितविरोधरूपभेदस्यजितमनस्केष्वेषुप्र
तिषेधइत्येवपरेणापिवक्तुमुचितमितिभावः । अनेकार्थशब्दस्यनिर्णीतार्थानुसारित्वंदृष्टांतेनघटयति ॥ पुत्रइति ॥ कश्चिदल्पश
कुनज्ञः गर्भस्थशिशुःपुत्रोवापुत्रीवेतिविचारितेसतिपुत्रोनपुत्रीतिवाक्यंप्रयुङ्क्ते । तद्धिनञः पूर्वपदयोगेपुत्रीत्वमेवस्थापयति । उत्त
रपदयोगेचपुत्रत्वमेवस्थापयति । अतःपुत्रेजातेतदनुकूलतयातद्वाक्यंव्याख्याति । पुत्र्यांचजातायांतदनुकूलतयैवव्याख्याति

तथाचवाक्यस्यनिर्णीतार्थानुसारित्वमत्रैवप्रसिद्धमितिभावः ॥ ३३३ ॥ भागवतश्लोकार्थकथनमुपसंहरन्पुनर्निदर्शनांतरमप्याह ॥ अतइति ॥ यद्यस्मात् । भेदवाक्बह्वीस्फुटाच । अतोनिर्विषराशिस्थविषबिंदुर्यथानिर्विषमेवभवति । तथाइदमपिवाक्यंपूर्वोक्तरबहुतरभेदवाक्यघातकंनभवतीतिभावः ॥ ३३४ ॥ किंचपाद्मेगारुडेचविष्णुविषयस्मृतिपुराणादीनांसात्विकत्वमुच्यते ।

अतोनिर्विषराशिस्थोविषबिंदुश्चनिर्विषं ॥ ग्रंथेस्मिन्नेवयद्बह्वीत्रयाणांभेदवाक्स्फुटा
॥ ३३४ ॥ शृणुदेविप्रवक्ष्यामितामसानियथाक्रमात् ॥ येषांश्रवणमात्रेणपातित्यंज्ञानि
नामपि ॥ ३३५ ॥ मात्स्यंकौर्मंतथालैंगंशैवंस्कांदंतथैवच ॥ आग्नेयंतुषडेतानितामसा
निनिबोधमे ॥ ३३६ ॥ वैष्णवंनारदीयंतुतथाभागवतंशुभं ॥ गारुडंचतथापाद्मंवाराहं
शुभदर्शने ॥ ३३७ ॥ सात्विकानिपुराणानिविज्ञेयानिशुभानिवै ॥ ३३८ ॥ ब्रह्मांडं
ब्रह्मवैवर्तंमार्कंडेयंतथैवच ॥ भविष्यद्वामनंब्राह्मंराजसानिनिबोधमे ॥ ३३९ ॥

ब्रह्मविषयस्मृतिपुराणादीनांराजसत्वमुच्यते । रुद्रविषयस्मृतिपुराणादीनांचस्पष्टंतामसत्वमुच्यते । त्रयाणामप्येकस्वरूपत्वेसर्वेषामपिपुराणानांवैष्णवत्वान्नायंविभागोघटते । अतस्त्रिदेवतैक्यंतत्साम्यंचव्यासस्यमतंनेतिवक्तुंपुराणविभाजकपाद्मगारुडवाक्यानिपठति ॥ श्रृणुदेवीत्यादिना ॥ अत्रवर्जयेत्तान्विचक्षणइत्येतदंतवचनानिपाद्मपुराणस्थानि । शास्त्राण्यपिचसर्वाणीत्यादीनि तमोनिष्ठास्तुशूलिनमित्येतदंतानिगारुडपुराणस्थानि ॥ ३३५ ॥ ३३६ ॥ ३३७ ॥ ३३८ ॥ ३३९ ॥

॥३४०॥३४१॥३४२॥३४३॥३४४॥३४५॥३४६॥३४७॥३४८॥३४९॥३५०॥ उक्तपुराणद्वयवचनानांतात्पर्यमाह ॥ इतीति ॥

सात्विकामोक्षदाःप्रोक्ताराजसास्स्वर्गदाश्शुभाः ॥ तथैवतामसादेविनिरयप्राप्तिहेतवः ॥ ३४० ॥
तथैवस्मृतयःप्रोक्ताऋषिभिस्त्रिगुणान्विताः ॥ सात्विकाराजसाश्चैवतामसाश्शुभदर्शने ॥ ३४१ ॥
वासिष्ठंचैवहारीतंव्यासंपाराशरंतथा ॥ भारद्वाजंकाश्यपंचसात्विकामुक्तिदाश्शुभाः ॥ ३४२ ॥
वामनंयाज्ञवल्यंचआत्रेयंदाक्ष्यमेवच ॥ कात्यायनंवैष्णवंचराजसास्स्वर्गदाश्शुभाः ॥ ३४३ ॥
गौतमंबार्हस्पत्यंचसांवर्तंचयमस्मृतं ॥ शांखंचौशनसंदेवितामसानिरयप्रदाः ॥ ३४४ ॥ किम
त्रबहुनोक्तेनपुराणेषुस्मृतिष्वपि ॥ तामसानिरयायैववर्जयेत्तान्विचक्षणः ॥ ३४५ ॥ शास्त्राण्य
पिचसर्वाणित्रिविधानिमहायते ॥ ३४६ ॥ यानिसत्त्वपरंविष्णुंवदंतिपरमेश्वरं ॥ तानिसर्वाणि
शास्त्राणिसात्विकानिमतानिवै ॥ ३४७ ॥ प्रजापतिंकृशानुंचतथादेवींसरस्वतीं ॥ परत्वेनवद
च्छास्त्रंराजसंपरिचक्षते ॥ ३४८ ॥ यच्छास्त्रंलिंगपारम्यंपरंदेवमुमापतिं ॥ तमःप्रवर्तकंवक्तित
त्तामससमुदाहृतं ॥ ३४९ ॥ सत्वनिष्ठाहिपुरुषाविष्णुमेवयजंतिते ॥ ब्रह्माणंराजसास्सर्वेतमोनि
ष्ठास्तुशूलिनं ॥ ३५० ॥ इतिपाद्मेगारुडेचत्रिदेवपदसेविनां ॥ विरुद्धंत्रिप्रकारत्वंतद्ग्रंथस्यत्रिरू
पता ॥ कथंत्रिदेवतैक्यंस्यात्समत्वंवाकथंवद ॥ ३५१ ॥ ॥ ॥

॥ ३५१ ॥ ब्रह्मरुद्रयोर्विष्ण्वात्मकत्वेतद्ग्रंथानाराजसत्वंतामसत्वंचनस्यादित्यत्रदृष्टांतमाह ॥ कृष्णरामादीति ॥ कृष्णरामादिभक्तेषु व्यासमतानुसारेणकृष्णरामादिभजकेषु तद्ग्रंथेषु व्यासकृततन्महिमप्रतिपादकभारतरामायणादिग्रंथेषु ॥ ३५२ ॥ सात्विकपुराणेषुपठितपाद्मस्यविरुद्धार्थकथकपूर्वकांडंपूर्वपक्षीकर्तुंयुक्तिमाह ॥ पंचेति ॥ पाद्मस्योत्तरःकांडः पंचानांसात्विकानां विष्णुपुराणादीनां साचिव्या देकार्थप्रतिपादकत्वेनस्वसहायत्वात् स्पष्टायाः यानिसत्वपरंविष्णुमितिगारुडवाचोबलात् उत्तरकांडाख्यसंज्ञाशक्त्याच स्वयंसिद्धांतएवसन् यच्छास्त्रंलिंगपारम्यमितिस्पष्टगारुडवाग्बलात् पूर्वकांडाख्यसंज्ञाशक्त्याचस्यपूर्वांशं

कृष्णरामादिभक्तेषुतद्ग्रंथेष्वपिनेदृशः ॥ विभागोदृश्यतेतस्माद्ब्रह्मेशौनहरिस्स्वयं ॥ ३५२ ॥ पंचसात्विकसाचिव्यात्स्पष्टगारुडवाग्बलात् ॥ पाद्मस्यह्युत्तरःकांडस्स्वयंसिद्धांतएवसन् ॥ संज्ञाशक्त्याचपूर्वांशंपूर्वपक्षीकरोतिहि ॥ ३५३ ॥ ऊर्ध्वंगच्छंतिसत्वस्थामध्येतिष्ठंतिराजसाः ॥ जघन्यगुणवृत्तिस्थाअधोगच्छंतितामसाः ॥ ३५४ ॥

पूर्वकांडंपूर्वपक्षीकरोति । सात्विकपुराणस्थोपिसोंशःपूर्वपक्षएव । नसिद्धांतइतिविवेचयतीत्यर्थः । हिशब्देन शंकाग्रंथस्य पूर्वकांडापरपर्यायपूर्वपक्षत्वं सिद्धांतस्यचोत्तरकांडापरपर्यायोत्तरपक्षत्वंचप्रसिद्धमितिसूचयति । विष्णुपुराणादिसात्विकपंचपुराणेषुसर्वत्रविष्णोर्महिमैवोच्यते । नपंचस्वपिक्कचित्पाद्मवद्विरुद्धोभागोस्ति । अतःपाद्मेपितेषांसात्विकानामनुकूलोभागस्सात्विकः । विपरीतस्तुतामसोराजसोवा । अतःपाद्मस्यसात्विकपुराणत्वेपितत्पूर्वकांडोनग्राह्यएव ॥ ३५३ ॥ नन्वाप्ततमस्यव्यासस्योक्तरी



त्यात्रिविधपुराणकरणेकिंप्रयोजनमित्यतःत्रिविधाधिकारिणांतत्तद्योग्यगतिदानायेतिवक्तुमधिकारित्रैविध्यंतेषांगतीश्चगीतावाक्येनैवदर्शयति ॥ ऊर्ध्वमिति ॥ जघन्यगुणस्तमोगुणः । सर्वज्ञव्यासकृतत्वेपिविप्रलिप्सामूलत्वात्तामसपुराणानामप्रामाण्यंघटतइत्यत्रदृष्टांतमाह ॥ बुद्धइति ॥ ३५४ ॥ ३५५ ॥ नन्वयंविभागःपाद्मगारुडयोरिवतामसपुराणेष्वपिकुतोनदर्शितइत्यतआह

इतिगीतोक्तिमार्गेणत्रयाणामधिकारिणां ॥ गतित्रयंदातुमेवचक्रेव्यासात्मकोहरिः ॥ त्रिविधानिपुराणानिबुद्धोबौद्धागमंयथा ॥ ३५५ ॥ हेयाहेयविभागश्चसात्विकेष्वेवदर्शितः ॥ योग्यानांबुद्धिशुद्ध्यर्थंयतस्तेसात्विकप्रियाः ॥ ३५६ ॥ राजसेतामसेचैवविवेकोयंनदर्शितः ॥ अयोग्यानामबोधार्थंततस्तत्रैवतेरताः ॥ ३५७ ॥ एवंपुराणकर्त्रैवस्वकृतग्रंथराशिषु ॥ ग्राह्यग्राह्यविभागोक्तेर्नसंदेहोविवेकिनां ॥ ३५८ ॥ तस्माच्चैवब्राह्मणपक्षपुराणवचनाश्रयात् ॥ नतत्वप्रच्युतिःकार्याकार्याकार्यविवेकिना ॥ ३५९ ॥ द्वितीयाभिनिवेशोनभयंस्यादितियद्वचः ॥ तच्चात्मदेहगेहादिद्वयशब्देनभण्यते ॥ ३६० ॥

॥ हेयाहेयेति ॥ तेयोग्याः ॥ ३५६ ॥ अबोधार्थउक्तत्रैविध्याज्ञापनार्थं । तत स्तामसत्वाद्यज्ञानात् । तत्रैव तामसराजसपुराणेष्वेव ॥ ३५७ ॥ ३५८ ॥ अनेनविभागप्रदर्शनेनप्रयोजनांतरमपिसिद्धमित्याह ॥ तस्मादिति ॥ ३५९ ॥ इदानीं भयंद्वितीयाभिनिवेशतस्स्यादीशादपेतस्यविपर्ययास्मृतिः । यन्मायायातोबुधआभजेत्तंभक्त्यैकयेशंगुरुदेवतात्मा । इतिभागवतवाक्यस्यैक्यपरतांनिराकृत्यस्वाभिमततार्थपरतांस्थापयति ॥ द्वितीयाभिनिवेशेनेति ॥ आत्मदेहगेहादि जीवदेहगेहादि । आत्मनो

देहगेहादिद्वयशब्देनभण्यतइतिस्मृतिंस्मारयितुंकीर्त्यतइत्यनुक्त्वाभण्यतइत्युक्तं । तेस्यादितिजीवंप्रतिवचनं । ततो देहगेहाद्या ग्रहस्यभयहेतुत्वात् । नोचे देवमर्थोनचेत् ॥ ३६० ॥ ३६१ ॥ तर्हिंकोर्थःपरस्येत्यतः पराभिमतमर्थमनूद्यपूर्वोत्तरविरोधमेवविश दयति ॥ आत्मतइति ॥ आत्मतःपरमात्मतःअन्यज्जगत् । तत्रब्रह्मव्यतिरिक्तेजगति । ईशश्चभक्तिश्चभजनंचतान्येवरूपंयस्य तस्मिन्मुख्यद्वितीयकेसाक्षादद्वैतविरोधिभेदवासनारूपत्वेनपरानभिमतघटपटादितोप्यस्यैवद्वितीयस्यमुख्यत्वादितिभावः । मा यावादिमतेहिनिर्विशेषचितःअविद्याशाबल्येसतीश्वराख्यंद्वितीयंतस्मिन्भक्तिस्तस्यसेवाचेतिद्वितीयंचप्रथमंभवति । पश्चाद्घटप

तत्राग्रहाद्भयंतेस्यात्ततोभक्त्याभजेश्वरं ॥ इत्याह नोचेद्वाक्यस्यपूर्वोत्तरविरुद्धता
॥ ३६१ ॥ आत्मतोन्यद्द्वितीयंचेद्भयंतत्राग्रहाद्यदि ॥ तर्हीशभक्तिभजनरूपेमुख्ये
द्वितीयके ॥ कथमंतेविधिश्चस्याद्यत्पूर्वार्धेनिषिध्यते ॥ ३६२ ॥ गुरुदेवतयोरात्मा
चित्तंयस्येतिविग्रहे ॥ पदंतदपिवक्तीशभजकस्यगुणांतरं ॥ ३६३ ॥ ॥

टादिकंजगत् । अंते श्लोकस्योत्तरार्धे विधिःआभजेदितिलिङंतपदेनविधानं । यतःपूर्वार्धेब्रह्मणोद्वितीयेऽभिनिवेशतःभयंस्या दितिद्वितीयंदूषयित्वापुनरुत्तरार्धे अतइतिद्वितीयाभिनिवेशस्यभयहेतुत्वमेवहेतूकृत्यईशंभक्त्याऽऽभजेदितिवाचोभंग्यंतरेणेश्वरा दिद्वितीयेऽभिनिवेशएवविधीयते । अतःपूर्वोत्तरविरोधः । सेव्यसेवकभावोहिभेदघटितत्वात्परस्यमुख्यंद्वितीयं । तस्यैवविधा नेकथंनपूर्वोत्तरविरोधइतिभावः॥३६२॥ ननुतर्हिंगुरुदेवतात्मेतिपदस्यकोर्थइत्यतआह ॥ गुरुदेवतयोरिति ॥ विग्रहेविवक्षिते

गुणांतरं गुरौदेवतायांचकृतमनस्कत्वरूपगुणं॥ ३६३ ॥ नचेत्एवमर्थोनचेत् । प्रागुक्तेश्वरभजनविरुद्धःगुरुदेवतास्वरूपत्वरूपो
र्थः । पूर्वमीश्वरभेदघटिततत्सेवामुक्त्वाइदानींपुनस्तदभेदोपिकथंवक्तव्यइतिभावः। लिङर्थः आभजेदितिलिङर्थः । सः सेव्यसे
वकभावः । बलवान् उद्देश्यपदार्थत्वादावश्यकः । विशेषणपदार्थतः बुधाख्यस्यविशेष्यस्यविशेषणीभूतगुरुदेवतात्मपदार्थात् ।
लिङ्लोट्तव्यप्रत्ययार्थोहिवाक्यमुख्यार्थः । तदनंतरंअधिकारिवाचकबुधपदं । ततःपरंतस्यविशेषणीभूतपदं । अतोमुख्येबाधायो

नचेत्प्रागुक्तभजनंविरुद्धार्थःकथंवद ॥ लिङर्थस्सोपिबलवान्विशेषणपदार्थतः ॥ ३६४॥
अतोग्रांथिकमुद्राज्ञोनापातार्थेनतुष्यति ॥ ३६५ ॥ पूर्वोत्तराविरुद्धार्थंवदेन्मीमांसया
बुधः ॥ नचेदाकाशशब्देनपरंब्रह्मकथंजगुः ॥ ३६६ ॥ ग्रंथेस्मिन्देहगेहादि भयहेतुतयो
च्यते ॥ स्थलेस्थलेतत्समोक्त्यातस्यैवस्याद्द्वितीयता ॥ ३६७ ॥ सद्धर्मंसाधुभिस्संगंत
त्पूरुषनिषेवणं ॥ योह्यपेक्षितमाचष्टेनिराचष्टेकथंहितत् ॥ ३६८ ॥ ॥ ॥

गात्तदानुकूल्येनैवान्यत्पदंयोज्यमितिभावः ॥ ३६४ ॥ अतः परकीयार्थस्यपूर्वोत्तरविरुद्धत्वात् ॥ ३६५ ॥ नचेत्पूर्वोत्तरावि
रुद्धोर्थोनवक्तव्यश्चेत् ॥ ३६६ ॥ द्वितीयशब्देनदेहगेहादिकमेवग्राह्यमित्यत्रांऽऽतरयुक्तिमप्याह ॥ ग्रंथइति ॥ अस्मिन्ग्रंथेभा
गवते । तस्माद्रजोरागविषादमन्युमानस्पृहाभयदैन्याधिमूलं । हित्वागृहंसंसृतिचक्रवालंनृसिंहपादंभजताऽकुतोभयमित्यादौ
स्थलेस्थले । तत्समोक्त्या तत्समाख्यया । द्वितीयता भयहेतुभूतद्वितीयता ॥ ३६७ ॥ युक्त्यंतरंचाह ॥ सद्धर्ममिति ॥

यु॰ म॰ ४८

सद्धर्मःशेवधिर्नृणां संगोयदिस्याद्भगवत्प्रियेषुनः तत्पूरुषनिषेवया इत्यादौ अपेक्षितमाचष्टेइतियोजना । तदेव भयंद्वितीयाभि निवेशतइतिश्लोकेद्वितीयपदेनकथंनिराचष्टे । ब्रह्मव्यतिरिक्तस्यसर्वस्यद्वितीयपदार्थत्वेसद्धर्म सत्संग श्रवणमनननिदिध्यास नादेरपिभयहेतुत्वापत्त्यानपरकीयव्याख्यानमुचितं किंत्वस्मदुक्तएवार्थइतिभावः ॥ ३६८ ॥ अस्तुवापरकीयएवार्थः । तथापि ब्रह्मणोनाद्वितीयत्वसिद्धिरित्याह ॥ अपिचेति ॥ सएवाभिनिवेशएव । सोप्यभिनिवेशोपि । एवशब्दस्यव्यवच्छेद्यमाह ॥ द्वितीयमिति ॥ यथाकंटकस्पर्शस्यभयहेतुत्वेतत्स्पर्शएवपरिहरणीयोनतुकंटकस्यापिमिथ्यात्वं । तथेहापिद्वितीयाभिनिवेशस्यभ

अपिचाभिनिवेशस्यभयदत्वेसएवहि ॥ त्याज्यस्स्यात्सोपिवाध्योनंद्वितीयंकेनबाध्यते ॥ ३६९ ॥
अतोऽद्वितीयभावस्यकथमाशात्रकथ्यतां ॥ गृहात्प्रव्रजितेभिक्षौकिंगेहंभस्ससाद्भवेत् ॥ ३७० ॥
द्वयोर्यद्देहगेहादिस्वभावेनैवदेहिनां ॥ अविद्यमानोभिमानाद्भातिस्वीयतयाकिल ॥ ३७१ ॥

यहेतुत्वेसएवत्याज्योनपुनर्द्वितीयादेर्मिथ्यात्वमप्यंगीकार्यं । इयांस्तुविशेषः । अस्मदाचार्याःज्ञानभक्त्यादिगुणभरिताःविषयए वविरक्ताःदेहगेहादिदुर्विषयमेवहेयकोटौनिक्षिप्तवंतः । त्वंतुसर्वावलक्षणश्शोभनमपिजगदाभासीकरोषीति । बाध्यत्वाभावस्तू भयत्रापिसमइतिभावः ॥ ३६९ ॥ अतः द्वितीयबाधाभावात् । अद्वितीयभावस्येतिपदच्छेदः । अत्रश्लोके । तत्रोदाहरणमाह॥ गृहादिति ॥ ३७० ॥ एवमाद्यपद्यस्यार्थमुक्त्वा अविद्यमानोप्यवभातिहिद्वयोध्यातुर्धियास्वप्नमनोरथोयथा । तत्कर्मसंकल्पवि



कल्पकंमनोबुधोनिरुंध्यादभयंयतस्यादितिद्वितीयपद्यस्यार्थमाह ॥ द्वयोर्यमिति ॥ स्वभावेनैव परंनिरपेक्षतयास्वभावतएव । देहिनामविद्यमानः नतुवस्तुस्थित्याऽविद्यमानः । ईश्वरकालकर्माद्यधीनदेहस्यप्रत्यक्षादिप्रमाणसिद्धत्वेनसर्वथाऽविद्यमानत्वस्या योगात् स्वप्नमनोरथाख्यदृष्टांतायोगाच्चपदांतरमध्याहृत्यैवव्याख्येयं । स्वाप्नोहिपदार्थःस्वेच्छयैवपरंजीवानांनवर्तते । संध्येसृष्टि राहहीतिसूत्रादीश्वरेच्छयास्त्येव। मनोरथविषयोपिराज्यादिर्नस्वरूपतएवाविद्यमानः किंतुध्यातुःपुरुषस्यस्वभावतएवाविद्यमानः। अतःकथंनदृष्टांतायोगः । अकारवाच्येनपरमात्मनानिमित्तेनविद्यमानइतिवा । अभिमाना द्रजोगुणनिमित्तरागविशेषात्

सर्वथाविद्यमानत्वेशशश्रृंगायितोभवेत् ॥ पारमार्थ्येनताद्दक्त्वंतवमेतूक्तवर्त्मना ॥ ३७२ ॥
ईशात्सर्वेश्वराद्विष्णोरपेतस्यततःप्रभोः ॥ ब्रह्मणस्तुद्वितीयेपिब्रह्मण्यभिनिवेशतः ॥ ३७३ ॥
निर्गुणाख्येभिमानेनभयंभवतियन्नृणां ॥ विपर्ययःस्मृतिश्चस्यान्मुकुंदब्रह्ममोचनात् ॥ ३७४ ॥

॥ ३७१ ॥ यथाश्रुतार्थेदोषांतरंचाह ॥ सर्वथेति ॥ ताद्दक्त्वं अविद्यमानत्वं । तवमायावादिनः । तुशब्देनार्थक्रियाकारिणोदे हादेरपारमार्थ्यायोगात्स्वकृताध्याहारस्यैवविशेषमाह ॥ ३७२ ॥ इदानींभयंद्वितीयाभिनिवेशतइतिपराभिमतपद्येनैवमायावादशे वादिसकलमतनिराकरणंकरोति॥ ईशादिति ॥ यद्यस्मात् । ईशादित्यस्यार्थकथनंसर्वेश्वरादिति । सचकइत्यतउक्तं ततःमन्येऽ कुतश्चिद्भयमच्युतस्येति नारायणायेतिसमर्पयेत्तदितिचप्राचीनपद्यद्वयेप्रस्तुतत्वात्प्रभोस्समर्थाद्विष्णोरिति । द्वितीयमित्यस्यावधि

पूरकमपितदेवेशपदमितिभावेनोक्तं ततस्तस्मात्प्रभोर्विष्णोर्ब्रह्मणः विष्णवाख्यब्रह्मणस्त्विवति । पूर्वपद्येविष्णोःप्रस्तुतत्वात्अस्मि न्पद्येपीशपदेनविष्णुरेवग्राह्यः । कस्माद्द्वितीयमितिशंकापूरणायाप्यस्मिन्पद्येपंचमीविभक्त्यंतेशपदेनप्रस्तुतएवग्राह्यइत्यर्थद्वयसू चनायततःपदस्यावृत्त्यायोजनाकृता । द्वितीयेपिनिर्गुणाख्येब्रह्मणीतिसंबंधः । विपर्ययःविपरीतज्ञानं । अंधंतमोवा । मुक्तिदा यकाद्विष्णोरन्यद्ब्रह्मआग्रहादेवोक्तमितिसूचनायमुकुंदब्रह्ममोचनादित्युक्तं ॥ ३७३ ॥ ३७४ ॥ ननुविष्णोर्द्वितीयंब्रह्मनिर्गुणमे वकुतःस्यादित्यतआह ॥ **सगुणस्येति** ॥ भावाद्वितीयोऽभावइतिवत्सगुणाद्वितीयंनिर्गुणमेवभवतिनान्यदितिभावः । शब्दशक्त्या पिसगुणस्यद्वितीयंनिर्गुणमेवेतिभावेनाह ॥ **निरर्थोसीति** ॥ निर्गतोर्थोयस्मात्सःनिरर्थः । शब्दार्थानभिज्ञइतियावत् । निरर्था

**सगुणस्याद्वितीयंहिनिर्गुणंस्यान्नचापरं ॥ निरर्थोसिनिरर्थाख्यंभेदकंयदि**
**मुंचसि ॥ ३७५ ॥ द्वितीयकोटिस्थेशात्तोद्वितीयंस्यात्तदेवहि ॥ ३७६ ॥**

ख्यं निरः निरित्युपसर्गस्य अर्थअभावंविरोधंवा भेदकं सगुणाद्भेदसाधकं । द्वितीयशब्दोयदिसदृशवाचीस्यात् तदासगुणस्य सगुणमेवद्वितीयंवाच्यं । नतुनिर्गुणं । इहचद्वितीयशब्दस्तवचममचमतेभिन्नवाच्येव । भिन्नवाचित्वेचयत्रभेदकमस्तितदेवद्वि तीयंस्यात् । नतुसजातीयं । सगुणाद्भेदकंचगुणरहितत्वंनिर्गुणएवास्ति नतुवस्त्वंतरे । उक्तवक्ष्यमाणरीत्यासगुणस्यैवात्रप्रस्तुत त्वेततोद्वितीयंनिर्गुणब्रह्मैवस्यात् । नतुज्ञानादिगुणभरितं त्रिगुणभरितप्रकृत्यात्मकंवाजगदितिभावः ॥ ३७५ ॥ युक्त्यंतरंचाह ॥ **द्वितीयकोटिस्थेति** ॥ अद्वितीयंनिर्गुणब्रह्म द्वितीयंजगदितिकोटिद्वयंहिमायावादिनोमते । तत्रद्वितीयकोटिस्थेश्वरस्येशप

देनसंग्रहेद्वितीयकोटेरेवसंगृहीतत्वात्ततोद्वितीयंभिन्नमद्वितीयनिर्गुणमेवस्यात्। अथवा निर्गुणब्रह्माख्यकोटेःप्राग्ग्रहणेतत्प्रथमं जगदेवद्वितीयंस्यात्। जगत्कोटेःप्राग्ग्रहणेचपश्चाद्गृह्यमाणानिर्गुणकोटिरेवद्वितीयास्यात्। प्रथमद्वितीयभावस्यविवक्षानुसारित्वादितिभावः। वस्तुतस्त्वालोकस्याभयदत्वेंऽधकारस्यैवभयदत्ववदकुतश्चिद्भयमितिसगुणहरिपादोपासनस्याभयदत्वोक्तेर्भयदंतद्विरुद्धंनिर्गुणमेवस्यात् इतिज्ञेयं ॥ ३७६ ॥ गुरुदेवतात्मेतिपदस्यार्थमाह ॥ यस्त्विति ॥ यःपुरुषःगुरुर्भवेत् देवताचभवेत्। मूलरूपविचारेदेवोभवेत्। अवताररूपविचारेगुरुर्भवेत्। सचवायोरवताररूपोमध्वएव। तादृशाचार्येयत्नवानितिसमस्त

अतोभक्त्यातमेवेशंभजे द्यस्तुगुरुर्भुवि ॥ देवताचभवेत्तादृशाचार्येयत्नवान्बुधः ॥ ३७७ ॥
इतिवाक्यार्थमालोच्यत्यजान्य द्भजनःप्रभुं ॥३७८॥ अविद्यमानोह्यत्यंतासन्नपिद्वयशब्दितः ॥
द्वितीयोनिर्गुणाख्यात्माध्यातुर्नैर्गुण्यवादिनः ॥ दुर्धियाभातितत्वंतुतन्नकिंत्वच्युताभिधः
॥३७९॥ अस्मात्पद्यद्वयात्पूर्वपद्येस्पष्टोदितःकिल ॥ उपर्युपरिचक्रांकोऽधोऽधोनारायणश्चयः॥३८०॥

पदस्यार्थः। अनेनगुरुश्चासौदेवताचगुरुदेवता गुरुदेवताया मात्मा श्रवणाद्यर्थंप्रयत्नोयस्येतिविग्रहस्सूचितोभवति। आत्मायत्नेधृतौदेहे स्वभावेपरमात्मनीत्यभिधानात्। एतादृशभजनकौशलंवातावतारमध्वभजकस्यैवस्यात्। नाल्पज्ञगुरुभक्तस्येतिभावः ॥ ३७७ ॥ श्लोकार्थमुपसंहरति ॥ इतीति ॥ अन्यन्निर्गुणंब्रह्म ॥ ३७८ ॥ अस्मिन्पक्षेप्यविद्यमानइतिश्लोकंयोजयति ॥ अविद्यमानइति ॥ निर्गुणब्रह्मणोप्रामाणिकत्वात्यथास्थितएवशब्दार्थः। द्वयशब्दितः द्वितीयशब्दपर्यायद्वयशब्दवाच्यः

पूर्वपद्ये किंचिद्व्यवधानेनपूर्वविद्यमाने । मन्येऽकुतश्चिद्भयमच्युतस्यपादांबुजोपासनमत्रनित्यं । इतिपद्ये । उपर्युपरि अव्यवहितोपरितने श्रृण्वन्सुभद्राणिरथांगपाणेर्जन्मानिकर्माणिचयानिलोकेइतिपद्येयश्चक्रांकइत्यसाधारणलिंगवत्तयाकीर्त्यते । अधोधः अव्यवहिताधोभागस्थे कायेनवाचेतिपद्ये यःनारायणः नारायणाख्यासाधारणनामवान्नारायणायेतिसमर्पयेत्तदितिकीर्त्यते सइतिपूर्वेणान्वयः । विष्णुविषयकश्रुतिद्वयेनलिंगेनचास्याध्यायस्यविष्णावेवतात्पर्यमतस्सएवपरतत्वमितिभावः ॥ ३७९ ॥३८०॥ इदानींशैवादिमतखंडनपरतयापियोजनिकांसूचयति ॥ दैवत्वेनेति ॥ दैवत्वेनपरदैवत्वेनअसतोऽविद्यमानस्येशादेर्महादेवादेः । द्वयस्य द्वयशब्दवाच्यस्य । उपलक्षणंचैतत् । पूर्वश्लोकेद्वितीयशब्दवाच्यस्येत्यपिद्रष्टव्यं । ईशपदोदितविष्णोस्सकाशाद्द्वितीय

दैवत्वेनासदीशादेर्वोद्वयस्याग्रहाचभीः ॥ गुरुत्वेनतुतत्सेवाऽसूचिपूर्वविशेषणात् ॥ ३८१ ॥

त्वंततोर्वाचीनब्रह्मरुद्रादेरपिघटते । अतस्तेष्वप्याग्रहात्परदैवत्वेनाग्रहात् भीर्भयंभवति । शैवादिमतान्यप्यनेनैवश्लोकेननिरस्तानिभवंतीतिभावः । शिवादयोपिसर्वथानत्याज्याइत्याह ॥ गुरुत्वेनेति ॥ पूर्वविशेषणात् पूर्वव्याख्यातगुरुदेवतात्माख्यविशेषणात् । गुरुभूतदेवताभजनेयत्नवानित्युक्तत्वात्गुरुभूतदेवतात्वेनशिवादेरपिभजनमसूचि । परदेवतात्वेनभजनंनिषिद्धमित्युक्तं भवति । किंचपूर्वश्लोकाभ्यांसाकाराच्युतपादार्चनादिसेवारूपकर्मणांफलमनपेक्ष्यभगवत्येवसमर्प्यमाणनिवृत्तिकर्मणांचाकुतश्चिद्भयत्वमुक्त्वा स्मिन्पद्यद्वयेततोत्यंतविभिन्नतयाद्वितीयशब्दवाच्यकाम्यकर्मप्रवाहस्यभयहेतुत्वमुक्त्वा श्रृण्वन्सुभद्राणीत्यंतिम



श्लोकेपूर्वोक्तनिवृत्तिकर्माण्येवस्थिरीकरोतीतिव्याख्यानमप्युचितं । देहगेहादीत्यत्रादिशब्देनदेहगेहाद्युपयुक्तकाम्यकर्मणामपि हेयकोटौसंगृहीतत्वात्पूर्वोत्तरश्लोकेषुनिवृत्तिकर्मणांस्तूयमानत्वाचमध्येप्रसक्तहेयकाम्यकर्मनिंदैवन्याय्या । तत्कर्मसंकल्पविकल्पकंमनोबुधोनिरुंध्यादितितत्रैवोपसंहारे तत्तस्मादिति पूर्वोक्तभयहेतुत्वंनिमित्तीकृत्य कर्मसुसंकल्पंविकल्पंचकुर्वन्मनोनिरुंध्यादितिकर्मनिंदनेनैवनिगमनाच्चपूर्वद्वितीयद्वयशब्दाभ्यांप्रवृत्तिकर्मणामेवदुःखहेतुत्वंवाच्यं । अन्यथाद्वितीयजगन्निषेधपरत्वेहेतुसाध्ययोर्वैयधिकरण्यप्रसंगात् । अस्माकंतुतृतीयेऽर्थेस्पष्टैवसंगतिः । देहगेहाद्यर्थत्वेपि तत्तस्मा द्देहगेहादीनांदुःखदत्वात्ऐहिकामुष्मिकानित्यदेहगेहादिसाधककाम्यकर्मणिमनोनिरुंध्यादितिसंगतिसंभवात् । निर्गुणशिवाद्यर्थत्वेपि तत्तस्मा न्निर्गुणशिवाद्याग्रहस्यदुःखहेतुत्वात् तदुपासनादिकर्मणिमनोनिरुंध्यादितिसंगतिसंभवात् । तवतुद्वितीयजगदाग्रहस्यदुःखहेतुत्वेद्वितीयेजगत्येवमनोनिरोधोवक्तव्यः । कर्ममात्रेमनोनिरोधस्यकासंगतिः । नहियज्ञादिकंजगत्साधकं जगदुपासनादिकर्मवा कस्यचिन्मते प्रसक्तं । अतःपरमतेसुस्थैवासंगतिः । उक्तरीत्यानिवृत्तिकर्मणामंगीकृतत्वात्साधारणोप्ययंकर्मशब्दःप्रवृत्तिकर्ममात्रपरः । अविद्यमान इशास्त्रेष्वविद्यमानः । रोचनार्थफलश्रुतिरितिवचनात्ज्योतिष्टोमेनस्वर्गकामोयजेतेत्यादिशास्त्रतात्पर्याविषयइत्यर्थः । द्वयः प्रवृत्तिकर्मसमूहः ध्यातुः विषयानेवध्यातुः पुंसः धिया रागकलुषितबुद्ध्याऽवभाति शास्त्रविषयतयाप्रतिभाति । तत्तस्माद्बुधः कर्मसंकल्पविकल्पकंमनोनिरुंध्यादितिपूर्वोत्तरयोजनासौकर्यादयमेवशास्त्रार्थइतिनपरेषामवकाशः । दैवत्वेनासदीशादेरित्यत्रादिपदेनमीमांसकाभिमतकाम्यकर्मणामपिसंगृहीतत्वात्तद्दूषणायेदमपिव्याख्यानंमूलकृतएवाभिमतं ॥ ३८१ ॥ अधुना

वाक्यांतरेप्यैक्यशंकांनिराकर्तुमुपोद्धातसंगतिमाह ॥ त्वमेवाहमिति ॥ यतःयस्मात्अतिस्निग्धमतिप्रियंसखायंजनास्त्वमेवा हमितिप्राहुः ततइतिपूर्वेणान्वयः ॥ ३८२ ॥ उदाहरणांतरमाह ॥ अहमिति ॥ किंशब्दस्योभयत्रापिसंबंधः । प्रियंवदःप्रभु रितिसंबंधः ॥ ३८३ ॥ उदाहरणमुपसंहरन्प्रमेयविशेषंचाह ॥ तस्मादिति ॥ प्रतीतार्थे आपाततःप्रतीतैक्यरूपार्थेबाधिते सर्व

त्वमेवाहमितिप्रोक्तेप्यैक्याशानैवशक्यते ॥ त्वमेवाहमितिप्राहुरतिस्निग्धंयतोजनाः
॥३८२॥अहंपृथक्पृथक्त्वंकिंत्वमेवाहमितिप्रभुः॥ स्वमंत्रिणमतिप्रेम्णाकिंनवक्तिप्रियंवदः
॥ ३८३ ॥ तस्मादेतादृशेवाक्येप्रतीतार्थेतुबाधिते ॥ प्रेमग्राह्यमबाधेतुस्वरूपैक्यामिति
स्थितिः ॥ ३८४ ॥ अहंभवान्नचान्यस्त्वंत्वमेवाहंविचक्ष्वभोः ॥ ननौपश्यंतिकवयश्छिद्रं
जातुमनागपि ॥ ३८५ ॥ इतिभागवतेप्रोक्तातत्तोहंसस्यवागपि ॥ लोकानुसारिणी
बोध्यहंसेप्रेमैवशंसति ॥ बोध्यबोधकयोरज्ञसुज्ञयोरैक्यवादिनी ॥ ३८६ ॥

सिद्धविरुद्धधर्मादिनावक्तुमशक्ये । अबाधे अनंतासनस्थेनहरिणास्वावतारंकृष्णंप्रतींद्रादिभिरर्जुनादीन्प्रतिचेदृग्वाक्यकथनद र्शनात् । बोध्यहंसइतिबोध्यबोधकभावादिरूपविरुद्धधर्मस्फोरणार्थमुक्तं । तदेवविशदयति ॥ बोध्यबोधकयोरज्ञसुज्ञयो शायामुभयोरपिसमगुणत्वेनमुख्यार्थबाधाभावे ॥ ३८४ ॥ यदर्थमुपोद्धातस्तदधुनाऽऽह ॥ अहंभवानिति ॥ ततःउक्तनिद

॥ २८६ ॥

रिति ॥ बोधकस्सुज्ञः बोध्यस्त्वज्ञइतिसुप्रसिद्धमेव । लोकेस्वसुहृदंप्रतिसुहृद्वा राजकार्यादौमंत्रिणंप्रेषयन्नतिकुशलोराजावा तस्यस्वकार्यसंपादनायतस्मिन्स्वभटानांभयसंपादनायचयथात्वमेवाहमित्यादिप्रियवचनंवक्ति तथापरमात्माख्यबोधकहंसोपिवि षयेष्वेवासक्तंजीवाख्यबोध्यहंसंस्वभक्तमेवकर्तुमेवंवक्तीतिभावः ॥ ३८५ ॥ ३८६ ॥ अर्थांतरमप्याह ॥ अथवेति ॥ स्वस्यप रमात्मरूपहंसस्य स्वप्रतिबिंबतः परमात्मप्रतिबिंबात् जीवाज्जीवाख्यहंसात् । अविनाभावपदं सादृश्यस्याप्युपलक्षणं । बिंबप्र

अथवाबिंबभूतस्यखस्यस्वप्रतिबिंबतः ॥ जीवाद्वक्त्यविनाभावंनत्वैक्यंवक्तिबाधितं
॥ ३८७॥ विशिष्टैक्यानभिमतेर्मुख्यार्थस्तुतवापिन ॥ अमुख्यार्थानुसारेणकुतोलोकव्य
तिक्रमः ॥३८८॥ बर्हिष्मन्नेतदाख्यानंपारोक्ष्येणप्रकीर्तितं ॥ यत्परोक्षप्रियोदेवोभगवान्
विश्वभावनः ॥ इतिपौरंजनोपाख्यानोपसंहारवागियं ॥ ३८९ ॥ अतःपरोक्षतस्तत्व
मत्रसर्वत्रकीर्तितं ॥ इतोप्यापातदृश्योर्थोनात्रमान्योमनीषिणा ॥ ३९० ॥ ॥

तिबिंबयोरैक्यव्यपदेशश्चदर्पणेमुखमित्यादौदृष्टः ॥ ३८७ ॥ बाधकांतरंचपरमतेदर्शयन्नुक्तमेवार्थंदृढीकरोति ॥ विशिष्टेति ॥ मुख्योर्थस्साक्षादैक्यं । लोकव्यतिक्रमः अस्मदुक्तलौकिकदृष्टांतातिक्रमः । जहदजहल्लक्षणायालोकेष्वदर्शनात् अस्मदुक्तनि दर्शनानुसारेणैवार्थोवाच्यइतिभावः ॥ ३८८ ॥ किंचोपसंहारवाक्यानुसारित्वाच्चास्मदुक्तएववाक्यार्थोनत्वदुक्तइतिवक्तुमुपसंहा रवाक्यमेवपठति ॥ बर्हिष्मन्निति ॥ बर्हिष्मन्नितिश्रोतुस्संबुद्धिः । पौरंजनोपाख्यानमितिपुरंजनकथारूपस्यास्याध्यायस्यसंज्ञा ।

अतः उपसंहारानुसारित्वात्पूर्वभागस्य । सर्वत्र पूर्ववाक्येष्वपि । पारोक्ष्यं तत्वस्यसाक्षाददृश्यत्वेननिगूहितत्वं । इतः पारोक्ष्ये णैवतत्वनिरूपकत्वात् ॥ ३८९ ॥ ३९० ॥ अधुनापरायुधेनैवपरंखंडयितुंप्रकारांतरेणश्लोकंयोजयति ॥ अहंभवान्नचेति ॥ अत्रश्लोके । तेनवाक्येन हंसांतराभेदं जीवाख्यहंसाभेदं निन्हुतेनिराकरोति । घटःपटोनेत्युक्तेघटपटाभेदनिवृत्तिरूपान्योन्याभावसिद्धिवत् अहंभवान्नैवेत्युक्तेपि अहंपदार्थरूपेपरमात्मनि भवच्छब्दोदितजीवाख्यहंसाभेदनिवृत्तिरूपान्योन्याभावसिद्धिरितिभावः ॥ ३९१ ॥ अन्यदेववाक्यं वाक्यांतरमित्यर्थः । तेन त्वमन्यइतिवाक्येन आत्मनस्स्वस्माद्भिन्नतां । तस्यजीवस्य ।

अहंभवान्नचेत्येकंवाक्यंवात्रविभिद्यते ॥ तेनहंसांतराभेदंहंसराट्स्वस्यनिन्हुते ॥ ३९१ ॥
अन्यस्त्वमित्यन्यदेववाक्यंतेनात्माभिन्नतां ॥ तस्यब्रवीतिहंसोसौत्वमेवाहंविचक्ष्वभोः॥३९२॥
इतिवाक्यांतरेणासौत्वमेवत्वय्यहंमतिं ॥ कुरुनान्यैरितिब्रूतेस्पष्टंतर्ह्यावयोर्भिदा ॥ ३९३ ॥

घटोन्यइत्युक्ते घटे पटप्रतियोगिकभेदस्यसिद्धिवत्त्वमन्यइत्युक्तेपित्वंपदवाच्येजीवेऽहमितिप्राक्प्रस्तुतस्वप्रतियोगिकभेदस्यैवसिद्धिः । पूर्ववाक्येजीवप्रतियोगिकस्वधर्मिकभेदंसाधयित्वोत्तरवाक्येस्वप्रतियोगिकजीवधर्मिकभेदंसाधयतीतिभावः । वाक्यद्वयस्यार्थमुक्त्वातृतीयवाक्यस्यार्थमाह ॥ त्वमेवाहमिति ॥ असौपरमात्माख्यहंसः । भोजीव त्वमेवाहमितिविचक्ष्व । त्वय्येवाहंमतिंत्वंकुरु । अन्यैर्जीवांतरैःपरमात्मनाचाहंमतिंनकुर्वित्येवशब्दार्थकथनं । विचक्ष्वेतिलोटास्वस्मिन्नेवस्वस्याहंमतिंविधत्ते ।



अन्येषुस्वस्याहंमतिंप्रतिषेधतिच । अतोविहितैवमतिःकर्तव्या । निषिद्धा पापसाधनत्वात्कदापिनकर्तव्येतिभावः । उत्तरार्धस्यार्थमाह ॥ स्पष्टमिति ॥ आवयोस्तवचममचस्पष्टंनदृश्यतइतिसंबंधः । तस्मात्पूर्वार्धात् ॥ ३९२ ॥ ३९३ ॥ ३९४ ॥ यद्यस्मादावां जीवपरमौमिथस्सदामिश्रावितिसंबंधः । बिंबभूतस्यस्वस्यप्रतिबिंबभूतेजीवेनीरेक्षीरवत्सदामिश्रणादितिभावः । तत्तस्मात् । नौ आवयोर्मध्येछिद्रमवकाशंजातुकदाचित् । मनागल्पं । तेनातिमिश्रितत्वेन क्षीरनीरवदतिमिश्रितत्वात् विद्यमानोपिबिंबप्रतिबिंबयोरिवावयोर्भेदः दूरस्थयोर्घटपटयोर्भेदइवनस्पष्टंविविक्ततयादृश्यते । नाहंसर्वज्ञोनाहंसर्वेश्वरोनाहंनिर्दुःखइत्याद्या

कुतोनदृश्यतेसर्वैरितिशंकांतरेसति ॥ तस्मादुत्तरवाक्येनतांशंकांप्रतिषेधति ॥ ३९४ ॥
क्षीरांतर्नीरमिवयदावांमिश्रौसदामिथः ॥ ननौपश्यंतितच्छिद्रंमध्येतेनावयोर्भिदा ॥ ३९५ ॥
नस्पष्टंदृश्यतेसावैदृश्यतेचविवेकिभिः ॥ इतिवागूढतत्वोक्तेर्हृदयंबुध्यतांबुधैः ॥ ३९६ ॥
व्याप्यव्यापकभावंचव्यतिरिक्तत्वमात्मनः ॥ अन्योन्याश्रिततांनोचेद्बोध्यबोधकतांतथा ॥ ३९७ ॥

कारेणदृश्यतेचेत्यपिपदेनसूचयति । रूपांतरेभ्योमूलरूपाच्चभेद स्तत्कृतदुष्टसंहारजगत्सृष्ट्यादेश्चजीवेषुसर्वथाऽसंभवात्सर्वदासर्वैरप्यतिस्पष्टंदृश्यते । अतोनक्काप्यभेदवार्तेतिभावः । गूढतत्वोक्तेर्हृदयमितिवाबुध्यतामितिसंबंधः । गूढतत्वोक्तिरितिहेतुगर्भविशेषणं । तत्वपरोक्षीकरणायप्रवृत्तवाक्यत्वात्आपाततोन्यार्थस्याप्यवकाशंददाति । विविच्यविचारेतूक्तरीत्यातत्वमेवबोधयतीतिभावः ॥ ३९५ ॥ ३९६ ॥ ऐक्यार्थकथनेपुनरप्यतिस्पष्टांऽऽतरानुपपत्तीराह ॥ व्याप्यव्यापकेति ॥ नोचेत्अस्मदुक्ता

र्थोनोचेत् । सःपरमात्माख्यहंसः । आत्मनःपरमात्मनः । सर्वस्यापिद्विितीयांतपदस्यकथमवददित्युत्तरेणान्वयः । अविनाभा
वपर्यायात् अव्यभिचारतइतिसंबंधः ।· स्वोक्तपूर्वश्लोकस्यैक्यार्थत्वेतत्रैवसएवहंसःऐक्यविरुद्धमिदंसर्वंप्रमेयंनवदेदेवेतिभावः
॥ ३९७ ॥ ३९८ ॥ उक्तार्थप्रतिपादिकास्तत्रत्याएवकारिकाःपठति ॥ सव्यापकतयेत्यादिना ॥ विद्वा न्परमात्महंसोपदिष्ट
मार्गेणज्ञानवान् सःजीवहंसः । साक्षिणंसाक्षाद्द्रष्टारं आत्मानंपरमात्मानंआत्मनिस्वस्मिन्व्यापकतयाव्यतिरिक्ततयाचाऽमृश्यस
म्यग्विचार्य । स्वप्नइवेत्यल्पकालीनत्वापेक्षयोक्तं । नतुमिथ्यात्वापेक्षया । तथासतिविद्वानित्युक्तहंसविशेषणविरोधात् । विद्व

व्यभिचारेणनष्टांचस्मृतिमव्यभिचारतः ॥ अविनाभावपर्यायात्कथंलब्धांचसोवदत् ॥ ३९८ ॥
सव्यापकतयात्मानंव्यतिरिक्ततयात्मनि ॥ विद्वान्स्वप्नइवामृश्यसाक्षिणंविररामह ॥ ३९९ ॥

त्त्वंमिथ्याज्ञानित्वंचपरस्परविरुद्धमितिसुप्रसिद्धमेव । आमृश्येतिपदविरोधाच्च विररामेतिफलकथनविरोधाच्च । अनेनस्वप्नस्या
पिसत्यत्वमर्थात्सिद्धमितिद्रष्टव्यं । विरराम सांसारिकभ्रमादुपरतोभूत् । व्यापकतयाव्यतिरिक्ततयाचाऽत्मानमात्मन्यामृश्ये
त्युक्त्या स्वस्यव्याप्यत्वं परमात्मधर्मिकभेदप्रतियोगित्व माधारत्वं साक्षिणमित्युक्त्या परमात्मनस्सर्वज्ञत्वं विररामेत्युक्त्या
स्वस्यासर्वज्ञत्वं हेत्युक्त्यास्यसर्वस्यप्रमाणसिद्धतांचाऽऽह । कथंपुनरस्मिन्नध्यायऐक्यस्यावकाशः । परेब्रह्मणीतिश्लोकेन जीव
परयोरन्याश्रितत्वकथना त्परेतिविशेषणभावाभावाभ्यांब्रह्मणःपरमत्वलाभात् स्वस्यचतदलाभात् ब्रह्मणिद्विःपरत्वोक्त्याउक्त

मत्वेतात्पर्यलाभात् अनिवार्योच्चनीचत्वप्राप्त्याचकथमैक्यावकाशः । अस्मात्संसारात् । अविहायेतिपदच्छेदः । अन्यथानष्टां स्मृतिमवापहेत्युत्तरवाक्यविरोधात् । विहायेतिपदच्छेदेपिऋजुभ्योन्यत्रापरोक्षज्ञानस्यसार्वकालीनत्वाभावात् ईक्षांविहायपरोक्ष ज्ञानएवस्थिरोभूत्वेत्यर्थः । सर्वथाज्ञानपरित्यागेऽस्मादुपररामेत्युक्तसंसारविरामायोगात् । ईक्षापदस्यस्त्रीलिंगत्वेनास्मादितिपरा मर्शायोगात् । कथंचित्परामर्शेचविहायेक्षामित्यनेनास्मादुपररामेत्यस्यपौनरुक्त्यापातात् । अविहायेतिपदच्छेदेपरस्परविरोधा त्प्रागुक्तव्यापकत्वव्यतिरिक्तत्वपरत्वादिलिंगविरोधानिस्ताराच्च । संसारस्यैवायंपरामर्शः । एतत्समाख्ययाचपूर्वश्लोकेपिसंसारा देवोपरमइतिज्ञातव्यं । ज्ञानस्यैवत्यागेउपदेशवैयर्थ्याच्च । नहिस्वोक्तज्ञानपरित्यागार्हंकोप्युपदिशति । एवमितिमैत्रेयोक्तश्लोके चपूर्वंनारदोक्तसकलज्ञानान्येवमितिपरामृश्यहंसेनप्रतिबोधितइतिहंसोपदिष्टप्रबोधापरपर्यायप्रतिबोधनकथनात् सर्वमपिज्ञानंस म्यग्ज्ञानमेवेतिसिद्धं । मैत्रेयोक्तिसंवादेनैवमितिपरामृष्टप्राचीननारदवाक्योत्थज्ञानस्यप्रमारूपत्वंचसिद्धं । स्वप्ननिदर्शनंचकिंचि त्साम्येनैव । नसर्वसाम्येनेतिचसिद्धं । सर्वथास्वप्नसमानत्वेप्रतिबोधितइतिमानसहंसस्यप्रबुद्धत्वोक्त्ययोगात् । उक्तरीत्याज्ञान स्यसंवादित्वाच्च । अथवात्रस्पष्टंप्रतिबुद्धत्वोक्त्यास्वप्नइतिदृष्टांतोयथामहाह्रदइतिवद्वैधर्म्यदृष्टांतोवा । स्वप्नेयथामिलिमिलायमानं ज्ञानंतथान किंतुसम्यगामृश्येत्यर्थस्यैवैतत्पदानुसारित्वात् । अन्यथास्थिरज्ञानत्वार्थकस्वस्थपदविरोधात् । तद्व्यभिचारेणनष्टांस्मृ तिंतदव्यभिचारेणपुनरापेतिप्राङ्नष्टायास्स्मृतेःपुनःप्राप्तिकथनायोगाच्च । नहिस्वप्नदृष्टोर्थःपौनःपुन्येनदृश्यते ॥ ३९९ ॥

॥४००॥४०१॥ श्लोकचर्चामुपसंहरति ॥ इतीति ॥ तत्रपौरंजनोपाख्याने । तेननारदेनमैत्रेयेणच । नीचस्यजीवस्य । उच्चभावेब्र ह्मभावे ॥ ४०२ ॥ इदानींतृतीयस्कंधेकपिलाख्यानेविद्यमानविस्पष्टभेदवचनमुद्धरति ॥ यथेति ॥ उल्मुकात् अंगारात् । स्व संभवात् स्वस्मादग्नेस्संभवोयस्यसः । अनेनजन्यजनकभावरूपभेदकधर्मंसूचयति । आत्मत्वेनअग्नित्वेन । वह्निनादह्यमानका ष्ठादिष्वयमग्निरितिलोकस्याभिमानादितिभावः । दाहकइत्यनेनतत्रापिदाह्यदाहकभावरूपभेदकधर्मंसूचयति । मतः विवेकिनां

परेब्रह्मणिचात्मानंपरंब्रह्मतथात्मनि ॥ वीक्षमाणोऽविहायेक्षामस्मादुपरराम ह ॥ ४०० ॥
एवंसमानसोहंसोहंसेनप्रतिबोधितः ॥ स्वस्थस्तद्व्यभिचारेणनष्टामापपुनस्स्मृतिं ॥ ४०१ ॥
इतितत्रैवतेनोक्तवचनानिविचारय ॥ नचारयमतिंनीचस्योच्चभावेकदाचन ॥ ४०२ ॥
यथोल्मुकाद्विष्फुलिंगाद्धूमाद्वापिस्वसंभवात्॥अप्यात्मत्वेनाभिमतादाहकोग्निः पृथङ्मतः॥४०३॥
भूतेंद्रियांतःकरणात्प्रधानाज्जीवसंज्ञितात् ॥ आत्मातथापृथग्द्रष्टाभगवान्ब्रह्मसंज्ञितः ॥४०४॥

संमतः । उल्मुकविष्फुलिंगयोस्सकाशाद्दाह्यदाहकभावेनपृथक् धूमाज्जन्यजनकभावेनपृथगितिविवेकः । प्रधानात्प्रकृतेः जीवसं ज्ञिताच्चैतन्यात् । आत्माव्याप्तः । द्रष्टासाक्षी भगवान्षड्गुणैश्वर्यपरिपूर्णः । ब्रह्मसंज्ञितः पूर्णगुणसंज्ञितः । द्रष्टृत्वंजडभेदकं । अन्य ज्जीवभेदकं तथोल्मुकादिव भूतेंद्रियांतःकरणात्पृथक् । विस्फुलिंगादिवप्रधानात्पृथक् । धूमादिवजीवात्पृथगितिभगवानप्यग्निरिव



त्रितयादपिपृथगितियोजना । वस्तुतस्तुचेतनाचेतनात्मकजगतोभिन्नइतिभावः ॥४०३॥४०४॥ अनेनैववाक्येनप्रयोजनांतरंचसि द्धमित्याह ॥ तृतीयस्कंधेति ॥ एषावाक् जडाज्जीवात्पृथक्कृतं । अतएवतृतीयंब्रह्म अद्वितीयश्रुतेरर्थंशंसतीतियोजना । नेति नेत्यात्मागृह्यइतिश्रुत्या नञ्द्वयेन जडंन जीवोनेति आत्मनस्तृतीयकोटौप्रवेशनवत् मयापिपरमात्मनस्तृतीयकोटौप्रवेशनात् एकमेवाद्वितीयमितिश्रुतिरपिमत्समाख्यया ब्रह्म द्वितीयंन किंतुतृतीयमेवेतिब्रह्मणस्तृतीयकोटौप्रविष्टत्वमेववक्ति । नतुद्विती याभावमितिस्वविरुद्धैक्यवचनस्यगतिकथनपूर्वकमनयावाचाभगवतिजीवजडभेदस्साधितइतिभावः ॥ ४०५ ॥ एतदेवविशद

तृतीयस्कंधगैषावाग्जडाज्जीवात्पृथक्कृतं ॥ अद्वितीयश्रुतेरर्थंतृतीयंब्रह्मशंसति ॥४०५॥
तस्माद्भेदमभेदोक्तेरर्थंचाहेतिमेमतिः ॥ ४०६ ॥ अप्यात्मत्वेनाभिमतादित्यज्ञान्यभिमा
नजां ॥ अश्रद्धेयामैक्यबुद्धिंगर्हार्थोपिरगर्हयत् ॥ ४०७ ॥ ॥ ॥

यति ॥ तस्मादिति ॥ तस्मादुक्तविधयाऽर्थद्वयस्यापिलाभात् ॥ ४०६ ॥ दृष्टांतेआत्मत्वेनाभिमतादपीत्युक्त्यादार्ष्टांतिकेपिब्र ह्मत्वेनाभिमतादपीतिसिद्ध्यति । अन्यथातथेत्युक्तदृष्टांतसाम्याभावप्रसंगात् । निषेधस्यप्रसक्तिपूर्वकत्वनियमाच्च । ततश्चेदंसि द्धमित्याह ॥ अपीति ॥ अज्ञान्यभिमानजां अज्ञानिनां अद्वितीयंब्रह्मेतिश्रुत्याब्रह्मणिजीवजडाभेदंवदतांमायावादिनामभिमा नजां । भागवतवाक्यसमाख्ययासंभवद्वाक्यार्थापरिज्ञानादज्ञानिनामित्युक्तं । अपिस्संभावनान्ववसर्गगर्हासमुच्चयेष्वितिवच

नात्गर्हार्थः अपिः अपिरितिशब्दः ॥ ४०७ ॥ यद्यस्मात् ॥ ४०८ ॥ अस्मादेववाक्यात्मतांतरखंडनप्रकारमप्याह ॥ भगव त्त्वेनेति ॥ ऐश्वर्यादिषड्गुणपूर्णत्वेनेत्यर्थः । ब्रह्मसंज्ञितइत्यत्रोक्तसंज्ञया वाचकशब्देन सम्यङ्मुख्यतःज्ञायतेप्रतिपाद्यतेऽर्थोनेनेति व्युतपत्त्यामुख्यवाचकशब्दएवहिसंज्ञापदेनोच्यते । अखंडार्थ । अखंड स्सत्यादिपदवाच्यसत्यत्वादिरहितःअर्थस्सत्यादिपदाना मर्थोयस्मिन्वादे सोखंडार्थः । तं । ब्रह्मणिसकलशब्दलक्षणापक्षमितियावत् । ब्रह्मनिष्ठामन्यतांस्पष्टमाचष्टच । पंचम्यंतजीवा

परपक्षंप्रतिक्षिप्यस्वपक्षस्थापनोद्यता ॥ यदियंवाक्ततश्चैषाकेषांतोषायनेष्यते ॥ ४०८ ॥ भगवत्त्वे ननैर्गुण्यमखंडार्थचसंज्ञया ॥ निराचष्टब्रह्मनिष्ठांस्पष्टमाचष्टचान्यतां ॥ अनुवादित्वशंकायागर्भ स्रावोभवत्ततः ॥ ४०९ ॥ तत्वसंख्यानकार्यायपोवतीर्णोमहीतले ॥ सोंबांप्रत्याहनातत्वंतत्सर्वंपर मार्थसत् ॥४१०॥ स्पष्टदृष्टांतदृष्टत्वादंबासंबोधनत्वतः॥ तत्वदृक्कपिलोक्तित्वात्सेयंनैवपदाच्चलेत् ॥ ४११ ॥

दिभ्यःप्रतियोगिभ्योभगवान्पृथगितिभगवन्निष्ठभेदस्यैवसाधनात् । ततस्तस्माद्धेतोः अनुवादित्वशंकायाः भेदवाक्यस्यप्रत्यक्षसि द्धभेदानुवादित्वशंकायाः । ब्रह्मनिष्ठभेदस्यैवसाधितत्वेनतस्यचास्मदादिप्रत्यक्षाविषयत्वेनोक्तशंकायाएवानुत्थानादितिभावः ॥ ४०९ ॥ यस्मादतत्वंनाऽह । तत्तस्मादितिसंबंधः । सर्वं भेद सद्गुणत्व मुख्यवाच्यत्व विरुद्धधर्मादिकं ॥ ४१० ॥ शंकां तरखंडनंचसूचयन्नुक्तार्थमुपसंहरति ॥ स्पष्टदृष्टांतेति ॥ सेयंवाक् दाहकोग्निःपृथगितिस्पष्टंदृष्टांतेपृथक्पदवत्तयादृष्टत्वात् ।

आत्मातथापृथग्द्रष्टेतिदार्ष्टांतिकेपि अस्मादुक्तात्पृथगितिपदात् नचलेत् । पृथगितिपदंत्यक्त्वाऽपृथगितिपदच्छेदंनप्राप्नुयादित्यर्थः । तथासतिदृष्टांतानानुगुण्यादितिभावः । उत्तरविशेषणद्वयात् । पदान्मुक्तिपदात् । मुक्तिस्थानादितियावत् । नचलेत् पारमार्थिकतयामुक्तिकालीनमेवभेदंप्रतिपादयेत् । नत्वमुक्तिकालीनमितिभावः ॥ ४११ ॥ अनयैववाचाप्रयोजनांतरंचसिद्धमित्याह ॥ अस्पष्टेति ॥ अस्मा दिदानीमुक्तात् । तृतीयस्कंधगत्वेनचतुर्थस्कंधगहंसवाक्यात्पूर्वकालीनाद्वा । यस्मादविना

अस्पष्टहंसवाक्तस्मादस्माद्विस्पष्टवाक्यतः ॥ अविनाभावमेवाहतत्सर्वमतिमंगलं
॥ ४१२ ॥ मतिभेदोपिभेदेस्यान्नैकदैकस्यधीर्द्विधा ॥४१३॥ युगपन्मतिभेदोवायुगपत्स्था
नभिन्नता ॥ वैलक्षण्यंचयुगपद्भिन्नयोरेवनान्यथा ॥ ४१४ ॥ तद्भेदश्रुतिसुंदर्यास्स्वार्थस्सू
त्रायतेगले ॥ उक्तार्थेषुविनीतापियद्भेदंनैवमुंचति ॥ ४१५ ॥ ॥

भावमेवाह । तत्तस्मात्सर्वभागवतवाक्यमतिमंगलं भगवतोमहिम्नएवप्रतिपादकत्वेनपरममंगलमित्यर्थः ॥ ४१२ ॥ निरवकाशभेदश्रुतिविरुद्धत्वाच्चसावकाशैक्यवाक्यानिनस्वार्थपराणीतिवक्तुंद्वासुपर्णेत्यादिभेदश्रुतेस्सुपर्णावेतावितितत्समाख्यास्मृतेश्चनिरवकाशतामुपपादयति ॥ मतिभेदइति ॥ भेदेस्वरूपभेदेसति । एकदा । एकस्यधीर्द्विधान ॥ ४१३ ॥ भिन्नयोस्स्वरूपभेदसहितयोः । अन्यथा स्वरूपभेदाभावेन ॥ ४१४ ॥ तत्तस्मात् युगपन्मतिभेदादेरपिस्वरूपभेदाविनाभूतत्वात् । स्वार्थस्स्वरूप

भेदः । यद्यस्मात् उक्तार्थेषु मतिभेदाद्यर्थेषु विनीता बलात्प्रापितापि । भेदं स्वरूपभेदं । तस्मादितिपूर्वेणान्वयः । यथापतिम तीकंठसूत्रंकदापिनत्यजति । एवंभेदश्रुतिरपिमतिभेदाद्यर्थकथनेपिस्वार्थभूतंस्वरूपभेदंनैवत्यजतीतिभावः ॥ ४१५ ॥ किंचद्वासु पर्णेतिश्रुतेरर्थांतरशंकैवनघटतइत्याह ॥ सखायाविति ॥ सखायौ एकविषयमतिमंतौ । इदमेवहिसख्यंनाम । सयुजौ सदैक स्मिन्देहेसंबद्धौ । चलेत् । मतिभेदादौगच्छेत् । मत्यैक्यस्थानैक्यकथकपदद्वयबलान्मतिभेदादौनेतुमपिनशक्येतिभावः । प्रसं गात्प्राक्प्रस्तावितोप्ययमर्थश्रौतपदानांशोधनसमयेऽवश्यवक्तव्यत्वात्पुनरपिप्रदर्शितः ॥ ४१६ ॥ पदांतरबलादप्यर्थांतरशंका

सखायौसयुजौचेतिपददार्ढ्याचलेचन ॥ ४१६ ॥ अन्योयमन्यइत्युक्तेद्वाविमाविितिचो
दिते ॥ भिन्नाविमाविितिप्रोक्तेकिमन्योर्थोपिमान्यते ॥ ४१७ ॥ बद्धत्वापूर्णतात्तृत्वपूर्वै
र्जीवप्रकाशकैः ॥ नित्यमुक्तत्वपूर्णत्वानत्तृत्वाद्यैःपरप्रियैः ॥ ४१८ ॥ ॥

नात्रघटतइत्याह ॥ अन्योयमिति ॥ तयोरितिद्विवचनांतपदेनद्वौप्रस्ताव्यायमन्योयमन्यतइतिपुनर्विविच्यकथनेसति द्वाविमौ भिन्नाविमाविितिचस्पष्टंद्विवचनांतपदेनकथनेचसतीत्यर्थः । अन्योर्थः मतिभेदस्थानभेदाद्यर्थः । शतशोमतिस्थानभेदेजातेप्येक स्मिन्द्विवचनांतपदप्रयोगादर्शनात्क्रमिकमतिभेदादेरपिशंकानात्रघटतइतिभावः ॥ ४१७ ॥ विरुद्धधर्माख्यस्वरूपभेदसाधकोप पत्तिसद्भावाच्चस्वरूपभेदरूपस्वार्थएवतात्पर्यवतीत्याह ॥ बद्धत्वेति ॥ अत्तीतिजीवस्यकर्मफलभोक्तृत्वकथनात्कर्मबद्धत्वमपू



र्णत्वंचश्रुतावर्थात्सिद्धं । स्मृतौतुयोऽविद्ययांधस्सतुनित्यबद्धइतिस्पष्टंबद्धत्वापूर्णत्वेसिद्धे । अनश्नन्नन्यइतिपरमात्मनःकर्मफला नशनकथनात्कर्माबद्धत्वरूपनित्यमुक्तत्वंपूर्णत्वंचश्रुतावर्थात्सिद्धं । स्मृतौतुविद्यामयोयस्सतुनित्यमुक्तइतिविद्यादिगुणपूर्णत्वनि त्यमुक्तत्वेस्पष्टमेवसिद्धेइतिद्रष्टव्यं । एकास्य शिशुपालः । दशास्यो रावणः इतिध्वनिः । एकमुखवान्दशमुखस्वीकारवान्वेति प्रकृतोपयोग्यर्थः । तां । श्रुतिसुंदरीं । सीतामिवरुग्मिणीमिव वेतिध्वनिः ॥ ४१८ ॥ ४१९ ॥ एकीभवंतीत्याद्यैक्यश्रुतेस्स्वरूपै

विरुद्धधर्मसद्रत्नैश्शृंगारतायितैःसदा ॥ अलंकृताभेदवाक्तुनैवस्वार्थंविमुंचति ॥ एका
स्योवादशास्योवातांनभीषयितुंक्षमः ॥ ४१९ ॥ ऐक्यश्रुतिस्तुमत्यैक्येस्थानैक्येस्वार्थमु
ज्झति ॥ एकीभूताविमाविित्यत्रैक्यंनहितयोर्द्वयोः ॥ ४२० ॥ अतोभेदश्रुतेरग्रेकस्य
स्यात्प्रत्यवस्थितिः ॥ तस्मात्क्रूरकृपाणीसारिपुसैन्यभयंकरी ॥ ४२१ ॥ नित्यानामपिनि
त्योयश्चेतनानांचचेतनः ॥ काम्यानर्थानिमान्सर्वाननित्यसुखदान्जडान् ॥ ४२२ ॥

क्यंविनैवप्रवृत्तिप्रकारंस्मारयति ॥ ऐक्यश्रुतिस्त्विति ॥ स्वार्थस्वरूपैक्यं ॥ ४२० ॥ अतः । ऐक्यश्रुतेस्सावकाशत्वात् । तस्मा त्सावकाशनिरवकाशयोर्निरवकाशस्यैवप्रबलत्वात् ॥ ४२१ ॥ अधुनानित्योनित्यानांचेतनश्चेतनानामेकोबहूनांयोविदधा तिकामान् । तमात्मस्थंयेनुपश्यंतिधीरास्तेषांसुखंशाश्वतंनेतरेषामितिभेदविषयकनिरवकाशश्रुत्यंतरंचव्याख्याति ॥ नित्यानामि त्यादिना ॥ नित्यानांजीवानांमध्ये । नित्यः । अतिशयेननित्यइत्यर्थः । चेतनानां जीवानांमध्ये चेतनः अतिशयेनचेतनइत्य

र्थः । नित्योनित्यानांचेतनश्चेतनानामित्यस्यार्थकथनमिदं । काम्यानर्थानिमान्सर्वानिति कामानित्यस्यार्थकथनं । काम्यंतइति कामाइतिव्युत्पत्तेरितिभावः । कामान्विदधातीतिकामानांसृज्यत्वोक्तेश्शाश्वतसुखस्यचदर्शनफलतयाभाव्यत्वोक्तेश्चानित्यसुखदा न्जडानित्युक्तं । जीवानामेवकामसंभवाद्बहूनांजीवानामित्युक्तं । सः परमात्मा । एतेषां जीवानां । आत्मस्थपदफलितकथनं अंतर्यामीति । अनित्यसुखस्यप्रागेवसिद्धत्वकथनात्पुनर्ध्यानदर्शनादेर्भाविशाश्वतसुखमेवफलतयाऽभिलषितमितिभावेनोक्तं सर्वे

एकोबहूनांजीवानांविदधातिकिलांजसा ॥ सोंतर्यामीकिलैतेषांसर्वेनित्यसुखार्थिनः ॥४२३॥
आत्मस्थमनुपश्यंतिनाभेदेनतमीश्वरं ॥ केचित्पश्यंतिकेचिच्चनपश्यंतिकिलप्रभुं ॥ ४२४ ॥
शाश्वतंतुसुखंतेषामुक्तरीत्यैवपश्यतां ॥ नाभेदकृतबुद्धीनांनाज्ञानांचभवेत्किल ॥ ४२५ ॥

नित्यसुखार्थिनइति ॥ ४२२ ॥ ४२३ ॥ आत्मस्थमनुपश्यंतीतिविशिष्योक्तेर्व्यावर्त्यकथनंनाभेदेनेति । आत्मस्थमेवपश्यंति । नत्वात्मतयेतिभावः । नेतरेषामित्यस्यार्थकथनं । केचिच्चनपश्यंतिकिलप्रभुमिति ॥ ४२४ ॥ अनुपश्यद्भ्यइतरेषामपश्यतां दर्श नायोग्यानामितियावत् । तेषांसुखंनेत्युक्तेरिदंलब्धं । सर्वेपिपश्यंतिचेदितरेषांनेतिनिषेधोव्यर्थस्स्यादितिभावः । तेषामित्यस्यैवा र्थकथनमुक्तरीत्यैवपश्यतामिति । यच्छब्दोक्तानामेवतच्छब्देनपरामर्शादितिभावः । एवकारव्यवच्छेद्यमाह ॥ नाभेदकृतबु द्धीनांनाज्ञानांचेति ॥ भेदेनपश्यद्भ्यइतरत्व मभेदेनपश्यतां सर्वथाऽपश्यतांचसंभवतीतिभावः ॥ ४२५ ॥ इत्यशेषंप्रमेयं ।

नित्योनित्यानामितिश्रुतिरितिसंबंधः ॥ ४२६ ॥ एतच्छ्रुतिसिद्धंप्रमेयांतरंचाह ॥ चेतनस्यैवेति ॥ चेतनश्चेतनानामित्यत्रोक्त चेतनस्यैवकाम्यपदोक्तजडजगज्जन्मादिकर्तृत्वं । यद्यस्मात् । लटा विदधातीत्यत्रविद्यमानकर्त्रर्थकलटा । तस्यजन्मादिकारणत्व लक्षणस्य । तटस्थत्वकथा । अविद्यानिष्ठत्वकथा । मठस्था मठएवस्थिता नतुसभायांकथितुंयोग्येत्यर्थः । अनयाश्रुत्याजगज्ज न्मादिकर्तृत्वस्यस्पष्टंब्रह्मचितिशंसनात् तस्यैवश्रौतत्वाविशेषेण विश्वतोमुखतयाबहुश्रुत्यर्थसूचकजन्मादिसूत्रेपिलक्षणत्वसंभवेन

इत्यशेषंश्रुतिर्नित्योनित्यानामितिशंसति ॥ ४२६ ॥ चेतनस्यैवजन्मादिकर्तृत्वंयल्लटोदितं ॥
तटस्थत्वकथातस्यमठस्थाभूत्कुयोगिनां ॥ ४२७ ॥ ब्रह्मोपादानतावार्तानिर्मूलाचाभवत्ततः ॥
कर्तृत्वाद्येशधर्माणामध्यासोपिनिराकृतः ॥ ४२८ ॥ महासामर्थ्यमीशस्यप्रभुत्वंचप्रसाधितं ॥
उपादानादिविज्ञानात्सार्वज्ञादिमहागुणाः ॥ स्वातंत्र्यंतस्यजीवानांपारतंत्र्यंचसाधितं ॥ ४२९ ॥

ब्रह्मलक्षणस्याब्रह्मनिष्ठत्वकथनमपिनसभायोग्यं । सूत्रेचास्यजन्मादियतोभवतितद्ब्रह्मेत्येवयोजनायाःप्रसिद्धत्वेनोपादानत्वप्रा प्तेःकारणाभावात् । कर्तृत्वस्यचचित्येवानुशासनेनान्यत्रनयनेकारणाभावाच्छ्रुतित्वाविशेषेणास्याएवश्रुतेर्विषयवाक्यत्वसंभवाच्चे तिभावः ॥ ४२७ ॥ ततः जन्मादिसूत्रेउपादानत्वाप्रसंगात् । कर्तृत्वाद्यानामीशधर्माणामध्यासोपि ततो मोक्षोपयोगिसाक्षा त्कारविषयत्वान्निराकृतइतिततश्शब्दस्यावृत्तिः ॥ ४२८ ॥ ततोनंतजीवापेक्षितकाम्यपदार्थस्रष्टृत्वात्तैर्ध्येयत्वाच्चमहासामर्थ्यंप्रभु

त्वंचप्रसाधितमितिपूर्ववदावृत्त्यायोजनीयं । महासामर्थ्यमित्युपलक्षणं । अनंतपदार्थोपादानद्रष्टृत्वात्सार्वज्ञ्यंच । तस्य । नारा यणस्य । एकएवविदधातिनत्वन्यप्रेरितइत्युक्त्यास्वतंत्रःकर्तेतिवचनात्कर्तृत्वोक्त्याचस्वातंत्र्यं । तद्दत्तभोगभोक्तृत्वाज्जीवानांपा रतंत्र्यंच ॥ ४२९ ॥ अतःकारणाच्च चेतनश्चेतनानामित्यनेनसार्वज्ञं । नित्योनित्यानामित्यनेननित्यदेहिता अनित्यदेहेभ्यस्स्व रूपतोनित्येभ्यश्चजीवेभ्योतिशयः परिशेषात्साधिताएवेतिभावः । पूर्वमपिसार्वज्ञस्यप्रसाधितत्वाच्चशब्दः ॥ ४३० ॥ गुणेषु नि

निर्धारणेतुयाषष्ठीसानिर्धारितवस्तुनि ॥ आधिक्यंवक्त्यतश्चेशेसार्वज्ञंनित्यदेहिता ॥ ४३० ॥
अभ्यासेनगुणेष्वस्यास्तात्पर्यंगम्यतेश्रुतेः ॥४३१॥ अनंतानंतजीवेषुस्थितस्याप्येकतोक्तितः ॥
अनंतस्वावताराणांस्वस्यचाभेदईरितः ॥ ४३२ ॥ भेदकार्यकरश्शक्तिविशेषःपरमात्मनि ॥
पुच्छस्यपुच्छिनैक्यंतत्कैमुत्येनप्रसाधितं ॥ ४३३ ॥ ॥ ॥

त्यत्वचेतनत्वैकत्वकर्तृत्वाद्युक्त्याभगवद्गुणेष्वेवाभ्यासेनासकृदुक्त्या पौनःपुन्येनगुणानामेवकथितत्वादित्यर्थः । अस्याश्श्रुतेरि तिसंबंधः ॥ ४३१ ॥ स्थितस्य आत्मस्थमित्युक्त्यानंतरूपैस्स्थितस्य । एकइत्येकत्वोक्तितः ॥ ४३२ ॥ भेदकार्यकरः एकत्वेप्यनं तरूपत्वाख्यभेदकार्यकरः । एकइतिश्रुत्याब्रह्मणिस्वगतभेदाभावस्सर्वसंप्रतिपन्नः । उक्तविधयाभेदकार्यस्यापिदर्शनात्तत्साधको भेदप्रतिनिधिस्सामर्थ्यविशेषाख्योविशेषोपिभगवत्यनयैवश्रुत्याऽर्थात्प्रसाधितइतिभावः । तत्तस्मात् । दूरदूरस्थानेकरूपैर्मूलरू



पस्यैक्यकथनात्पुच्छस्याऽनंदमयपादस्यपुच्छिनाऽनंदमयाख्यावयविना । भिन्नभिन्नजीवगतान्योन्यासंबद्धरूपाणामैक्यसिद्धौस दासंबद्धैकदेहभागभूतपुच्छैक्यस्यसुतरांसिद्धेःकैमुत्येनेत्युक्तं ॥ ४३३ ॥ स्वाभेदेन स्वगतसकलगुणाद्यभेदकथनेन । आदिपदेनदे हादिकंगृह्यते । आत्मस्थ मात्मनिध्येयतयास्थितमित्यपरोक्षज्ञानसाधनध्यानस्यापिकथनाद्ध्येयतोक्त्येत्युक्तं । अन्यथाऽऽत्मस्थ त्वमात्रस्यासुरजीवेष्वपिविद्यमानत्वात्तेषामपिदर्शनप्रसंगः ॥ ४३४ ॥ भेदसाधनार्थमुक्तयाश्रुत्याऽऽनुषंगिकतयासिद्धभगवद्गुणा

स्वाभेदेनगुणादीनांचिन्मयत्वं(मबाध्यता)प्रसाधितं ॥ ध्येयतोक्त्येष्टदैवत्वंसौंदर्यंसुप्रस
न्नता ॥ ४३४ ॥ तदंतस्थस्यसार्वज्ञशक्तिस्वातंत्र्यपूर्वकाः ॥ स्रष्टृत्वकामदातृत्वमुक्तिद
त्वादयोगुणाः ॥ सर्वेश्वरत्वपूर्णत्वनित्यत्वाद्याश्चसाधिताः॥४३५॥ मोक्षोपयोगिज्ञानत्वं
तमित्युक्त्यैषुदर्शितं ॥ ततोपितद्गुणांभोधेःपारमार्थ्यंप्रसिद्ध्यति ॥ ४३६ ॥ मुक्तानांबहु
तामुक्तस्वामित्वंचप्रभोरभूत् ॥ आत्मस्थभगवद्दृष्टेर्मुक्तावप्यनुवर्तनं ॥ ४३७ ॥ ॥

नपिबुद्धावारोहायसंगृह्णाति ॥ तदिति ॥ तत्श्रौतपदरत्वबलात् । बहूनांकामान्विदधातीत्युक्त्यास्वस्यतदनपेक्षत्वलाभात्पूर्ण त्वसिद्धिरितिद्रष्टव्यं ॥ ४३५ ॥ एषुगुणेषु ॥ ४३६ ॥ तेषांशाश्वतंसुखमित्युक्त्यामुक्तानांबहुता । तस्यचसुखस्य तंयेनुपश्यंति तेषांसुखमितरेषांनेत्युक्त्याऽपरोक्षज्ञानप्रसन्नभगवदधीनत्वलाभात्मुक्तस्वामित्वंचसिद्धमितिभावः । येऽन्वपश्यन्नित्यनुक्त्वाऽनु

पश्यंतीतिलटानिर्देशात्सुखकालेआत्मस्थसगुणभगवद्दर्शनस्याप्युक्त्यातस्यमुक्तावप्यनुवर्तनंसिद्धमित्यर्थः । इतोपिगुणादेर्नमिथ्यात्वमितिभावः ॥ ४३७ ॥ तयाश्रुत्या । पंचभेदसिद्धिप्रकारंस्वयमेववक्ष्यति । सुखस्यशाश्वतत्वकथनादात्मस्थंयेनुपश्यंतीतिकथनाच्च मुक्तेर्नित्यसुखात्मता भेदज्ञानैकसाध्यत्वंचसिद्धमितियोजना । तमितिश्रुत्युक्तसकलविशेषणविशिष्टस्यपरामर्शात्तदित्युक्तं । अनुपश्यंतीत्यत्रोक्तस्यान्वित्युपसर्गस्यानुसृत्येत्यर्थसद्भावाद्योग्यतामनुसृत्येत्युक्तं । अनंतरमित्यस्यापिसद्भावाद्विष्णोरनु

पंचभेदास्तयासिद्धामुक्तेर्नित्यसुखात्मता ॥ भेदज्ञानैकसाध्यत्वमुक्तसर्वविशेषणैः ॥
सहैवतच्चविज्ञानंयोग्यतामनुसृत्यच ॥ ४३८ ॥ तारतम्येनतद्दृष्टिर्जीवानांत्रिप्रकारता ॥
आत्मस्थद्रष्टृभिन्नत्वंद्वेधाभवतियद्विदां ॥ ४३९ ॥ चेतनानांबहुत्वोक्त्याजीवभेदःपरस्परं ॥ दातुःप्रभोरनेकेभ्योभेदश्चैकस्यसिद्ध्यति ॥ ४४० ॥ ॥ ॥

ब्रह्म तमनुरुद्रइत्यस्यार्थस्यलाभात्तारतम्येनेत्युक्तं । तस्यभगवतोदृष्टिस्तद्दृष्टिः । साचसादृष्टिश्चेतिवा । यद्यस्मात् । विदांविदुषांमते । द्वेधा वैपरीत्येनद्रष्टृतया सर्वथातदद्रष्टृतयाच । तत्तस्मात् । द्रष्टॄणां विपरीतद्रष्टॄणां अद्रष्टॄणांजीवानांचलाभात् । यद्वा द्वेधा वैपरीत्येनद्रष्टृतयोभयथापिद्रष्टृतयेत्यर्थः । एवंच सम्यग्द्रष्टृविपरीतद्रष्टृमिश्रद्रष्टॄणांचलाभादित्यर्थः ॥ ४३८ ॥ ४३९ ॥ पंचभेदसिद्धिप्रकारंदर्शयति ॥ चेतनानामिति ॥ इदंचबहूनामित्यस्योपलक्षणं । चेतनानांबहुत्वोक्त्यादातुःप्रभोरेकस्येतिवि

शेषणबलादनेकेभ्यःप्रतिग्रहीतृभ्योभृत्येभ्यश्चेतिलभ्यते । तेनबहुविधभेदकधर्मसद्भावेन ॥ ४४० ॥ ४४१ ॥ कामानितिकाम्या नांबहुत्वोक्त्या । तेषांकाम्यानां । विदधातीतीशकृतत्वोक्त्या ॥ ४४२ ॥ तस्यकाम्यरूपस्य । मिथ्याभूतशुक्तिरजतादेश्शशशृं गस्यचसृष्ट्यदर्शनादितिभावः । निर्माणक्रियायास्सदातनत्वेनिर्मेयजगतोप्यर्थात्सदातनत्वलाभात्सूचितमित्युक्तं ॥ ४४३ ॥ बहूनांकामानितिजीवसंबंधितोक्त्यासंबंधस्यषष्ठ्यर्थत्वात्तस्यचद्विनिष्ठतायाःप्रसिद्धत्वात्स्फुटेत्युक्तं । उपलक्षणंचैतत् । कार्यत्वा

तेनजीवेशयोर्भेदस्साधितस्सोपपत्तिकः ॥ मोक्षोपयोगिज्ञानत्वाद्भेदस्यात्यंतसत्यता ॥ ४४१ ॥
काम्यानांचबहुत्वोक्त्याजडभेदःपरस्परं ॥ तेषामीशकृतत्वोक्त्याजडेश्वरभिदातथा ॥ ४४२ ॥
सृष्ट्युक्त्यातस्यजगतस्सत्यत्वमपिसिद्ध्यति ॥ सदैववर्तमानत्वंलटाविश्वस्यसूचितं ॥ ४४३ ॥
जीवसंबंधितोक्त्याचजडजीवभिदास्फुटा ॥४४४॥ एकजीवकथाजीवाभेदोजीवेश्वराभिदा ॥
चिद्रूपतैवजीवानांचित्यकर्तृत्वमित्यपि ॥ ४४५ ॥ ॥ ॥ ॥

कार्यत्वाभ्यांजडत्वचेतनत्वाभ्यांचेतिद्रष्टव्यं ॥ ४४४ ॥ एवंस्वमतसिद्धिप्रकारमुक्त्वापरमतनिराकरणप्रकारमप्याह ॥ एकजी वेति ॥ बहूनामितिजीवबाहुल्यकथनादेकजीवकथा एकएवजीवइतिकथा । बहुजीववादेपिजीवाभेदः । जीवानांपरस्परभे दश्चोक्तविधया जीवेश्वरभेदसाधनाज्जीवेश्वराभिदा । मुक्तौसंसारेचसुखभोक्तृत्वकथनात्जीवानांचिद्रूपतैव भोक्तृत्वादिरहितचि

न्मात्ररूपतेत्यर्थः । चेतनोविदधातीत्युक्तत्वात्चितोऽकर्तृत्वं । आत्मस्थंतमनुपश्यंतीतिसप्रकारकभेदज्ञानस्योक्तत्वान्निष्प्रकारकै क्यविज्ञानान्मुक्तिः । निष्प्रकारंचतदैक्यविज्ञानंचेतिसमासः । स्रष्टृत्वोक्तेर्जगदसत्यता । तेषांसुखमितरेषांनेत्युक्तेस्सकृत्सर्वमोक्ष श्चेत्येतत्सर्वमनयाश्रुत्यादूषितमितिसंबंधः ॥४४५॥४४६॥ उक्तरीत्यासकलस्वसिद्धांतसाधिकांसकलपरमतबाधिकांचेमांश्रुतिंस्तुव न्नेतादृशसकलश्रुतिमीमांसानिपुणौसूत्रभाष्यकारौचस्तौति ॥ एतावंतमित्यादिना ॥४४७॥ अयमुक्तवाक्यरूपोवेदव्यासभटा

निष्प्रकारैक्यविज्ञानान्मुक्तिर्जगदसत्यता ॥ सकृत्सर्वविमोक्षश्चेत्येतत्सर्वंहिदूषितं ॥४४६॥
एतावंतमपिह्यर्थमेकैवश्रुतिराददे ॥ सर्वश्रुत्यर्थकुशलौसूत्रभाष्यकृतौस्तुमः ॥ ४४७ ॥ त
स्मादेकांगवीरोयंवेदव्यासभटाग्रणीः ॥ तत्तद्वाक्यैश्चतत्सिद्धौद्विर्बद्धस्यसुबद्धता ॥४४८॥ त
द्व्यासकृतविस्ताराश्रुतिःसूत्रानुसारिणी ॥ तानिसर्वाणिभेदादेस्साधकानीतिसुस्थितं ॥४४९॥

ग्रणीरेकांगवीर स्सहायांतरमनपेक्ष्यस्वयमेकएवसर्वदुर्मतसेनासंहारकइत्यर्थः । तत्तद्वाक्यै र्जगत्सत्यत्वादिसाधकैस्तैस्तै र्विश्वंसत्यं द्वासुपर्णा गुणाश्श्रुतास्सुविरुद्धाश्चदेवेसंतीत्यादिवाक्यै स्तत्सिद्धौजगत्सत्यत्वादिसिद्धौ । एकप्रमाणोक्तस्यार्थस्यप्रमाणांतरेणसा धनेऽनुवादकतयाऽप्रामाण्यंयःपरोवक्ति । सःद्विर्बद्धं सुबद्धंभवतीतिलौकिकाभाणकमपिनजानातीतिसूचनायद्विर्बद्धस्यसुबद्धते त्युक्तं ॥ ४४८ ॥ तत्तस्मात् । तानिसूत्राणि । सुस्थितं । सकलमस्मन्मतप्रमेयंसुस्थितमासीदित्यर्थः ॥ ४४९ ॥ युक्तिविरुद्धत्वा



च्चजीवब्रह्मैक्यंनघटतइतिसाधयितुंसाहित्यमुद्रयाप्रस्तावंकरोति ॥ किंचेति ॥ यथादार्वादौद्वैधीभावसाधकस्यपरशोस्तदेकीभा वघातकत्वं तथाजीवब्रह्मणोर्द्वैधीभावसाधकाद्युक्तिपरशोस्तेतवाभिमतःएकीभावोपिबिभेति । सः युक्तिपरशुःजीवब्रह्मणोर्भेदम तेसहायत्वमेतीत्यर्थः ॥ ४५० ॥ यथाघटाद्युपाधिनाव्याप्तगगनभागानामेवतत्रतत्रघटाद्याकाशत्वं तथादेहाद्युपाधिनाव्याप्तब्रह्म भागानामेव यत्रयत्रदेहोगच्छति तत्रतत्रजीवत्वमित्यंगीक्रियतेवा उत तटाकोद्धृतघटस्थजलस्येवव्याप्तब्रह्मचिदुद्धृतपरिच्छिन्न चिद्भागानांदेहाद्युपाधिनाजीवत्वमुच्यते । अथवातटाकजलादत्यंतविलक्षणनालिकेरस्थजलानामिव महानलादत्यंतविलक्षण

किंचसद्युक्तिपरशोरेकीभावोबिभेतिते ॥ द्वैधीभावमतेसोपिसहायत्वमुपेयिवान् ॥ ४५० ॥
घटेनगगनस्येवयदिदेहाद्युपाधिना ॥ गच्छतातत्रतत्रत्यब्रह्मभागस्यजीवता ॥ ४५१ ॥ संप
द्यतेततोन्येतुनजीवाइतिमन्यसे ॥ मतंनमायिनोप्येतच्चर्चार्थंपरमुच्यते ॥ ४५२ ॥ ॥

ज्योतिरिंगणज्योतिषामिववाब्रह्मणोत्यंतविलक्षणानांस्वभावतएवाणूनांचिद्भागानांजीवत्वमुच्यतइतिविकल्पत्रयंमनसिनिधायाऽ द्यंदूषयितुमनुवदति ॥ घटेनेति ॥ तत्रतत्रत्यब्रह्मभागस्य तत्रतत्रविद्यमानव्याप्तब्रह्मचिदंशस्य । यत्रयदादेहस्तिष्ठति तत्रत दातद्देहस्थस्तत्रत्यब्रह्मांशएवजीवइत्युच्यते । देहस्यान्यत्रगमनेचान्यत्रान्यत्रविद्यमानानांब्रह्मचिदंशानामेवजीवपदवाच्यतासंप द्यतइतियावत् । ततः व्याप्तब्रह्मचिदंशेभ्यः । अन्येव्यतिरिक्ता अणवश्चेतनाइत्यर्थः । एतत् इदंप्रमेयं मायिनोमतंन । चर्चा र्थंयुक्तिचर्चार्थं परंकेवलं मायावादिनामनभिमतोप्ययंपक्षःयुक्त्यापिदूषयितुंप्रस्तावितइतिभावः ॥ ४५१ ॥ ४५२ ॥ दूषयति

॥ तर्हीति ॥ गमनं इतस्ततश्चलनं । तदन्यस्य देहाद्युपाधेः ॥ ४५३ ॥ परिस्पंदक्रिया परिस्पंदरूपक्रिया । ब्रह्मणोव्याप्तत्वादि तस्ततःपरिस्पंदनंमायिमतेसर्वथानास्तीतिभावः । तत्क्रियया ब्रह्मपरिस्पंदनेन ॥ ४५४ ॥ घटस्यघटाकाशस्यचक्रियाभावेपिचेत नांतरेणेतःक्षेपणात् ततःआकर्षणाद्वाकदाचित्क्रियासंभवति । देहेतुब्रह्मव्यतिरिक्तचेतनांतरस्यानंगीकारान्नकदापिक्रियेत्याह ॥ इतइति ॥ कश्चिच्चेतनः । परःअन्यः । अतःपूर्वोक्तहेतोःस्थिरांशजीवत्वे । स्थिरब्रह्मांशजीवत्वे ॥ ४५५ ॥ तत्रदृष्टांतमाह

तर्हिदेहाद्युपाधीनांगमनंकेनहेतुना ॥ ब्रह्मणोनिष्क्रियत्वोक्तेस्तदन्यस्यजडत्वतः ॥ ४५३ ॥
परिस्पंदक्रियानैवपरेब्रह्मणितेमते ॥ ततस्तत्क्रिययादेहक्रियानेत्यक्रियाभवेत् ॥ ४५४ ॥ इतः
क्षिपतिकिंकश्चित्ततःकर्षतिकिंपरः॥ अतस्स्थिरांशजीवत्वेस्थैर्यंस्यान्नगतागतं ॥ ४५५ ॥ शून्य
गेहस्थघटवद्देहोदेहीघटाभ्रवत् ॥ अतिदूरस्थितस्वर्गगमनंत्वतिदूरतः ॥ ४५६ ॥ वातोपितिर्य
क्पवनःकोवातंजडमुन्नयेत् ॥ शवभूषणवत्सर्वंजीवजातमभूदहो ॥ ४५७ ॥ ॥ ॥

॥ शून्येति ॥ चालकपुरुषाभावसूचनायशून्येत्युक्तं । देहीजीवः घटाभ्रवत् घटांतस्स्थिताकाशवत् । ईषच्चलनस्याप्ययोगेदूर चलनंदूरापास्तमितिभावः ॥ ४५६ ॥ वायुवशात्तृणादीनामिवोर्ध्वगमनंभविष्यतीतिमंदाशंकांपरिहरति ॥ वातोपीति ॥ पांच भौतिकयातनादेहस्यैवस्वर्गगमनप्रसिद्धेर्जडमित्युक्तं । परिहसति ॥ शवभूषणवदिति ॥ यथाशवभूषणानांचालकपुरुषाभावा

च्चलनाभावः । ब्रह्मचैतन्यस्यव्याप्तत्वेनचालकत्वायोगात्तथाजीवच्छरीराणामपिमृतशरीरस्वभावोभूदितिभावः ॥ ४५७ ॥
दूषणांतरंचाह ॥ किंचेति ॥ ४५८ ॥ अपहसति ॥ पदेपदइति ॥ ४५९ ॥ पूर्वांशाज्ञानोपादानकलिंगशरीरादेरपिनाशादुत्त
रांशाज्ञानोपादानकस्यलिंगशरीरादेःपुनरुत्पत्तेश्चबाह्यदेहवियोगयोगरूपावांतरमरणजननवत्नेमेमृतिजन्मनी किंतुमोक्षकाली
नमहामृतिवल्लिंगशरीरस्यैवोत्पत्तिरूपमहाजन्मवच्चाभूतामित्याह ॥ तदंशेति ॥ आदिपदेनलिंगदेहोगृह्यते । कल्पांतपदेनमुक्ति

किंचैकपदाविन्यासेप्रागंशेदेहनिर्गतेः ॥ मृतिस्स्यादपरांशेतुजनिस्स्याद्देहसंगतेः ॥ ४५८ ॥ दे
हयोगवियोगौहिजीवजन्ममृतीश्रुते ॥ पदेपदेप्रेतकर्मजातकर्मकरोतिकः ॥ ४५९ ॥ तदंशाज्ञा
नमूलस्यमनआदेरपिक्षयात् ॥ कल्पांतलयएवायंकल्पादिमजनिश्चसा ॥ ४६० ॥ पूर्वांशेकर्म
नष्टंहिनान्यांशेपिक्वदेहिता ॥ कृतहान्यकृतप्राप्त्यामतमेतद्धिगर्हितं ॥ ४६१ ॥ ॥ ॥

कालउच्यते । कल्पादिमपदेनचलिंगदेहोत्पत्तिकालः ॥ ४६० ॥ दूषणांतरंचाह ॥ पूर्वांशइति ॥ पूर्वांशेविद्यमानं कर्मपूर्वांशा
ज्ञानोपादानकर्मेतियावत् । अन्यांशे उत्तरांशेकर्मन नजातं । देहोत्पत्तेःपूर्वंतदेहकार्यकर्मोत्पत्तेरयोगात् । अतोदेहिताक्व । कर्म
निमित्तदेहदेहिभावःक्व । स्वकर्मनिमित्तदेहसंबंधेनहिदेहित्वं । अन्यथामातुरुदरस्थशिशोरपिमातृदेहेनदेहित्वप्रसंगः । स्वकर्मच
प्राक्तनंनष्टं पश्चात्तनमनुत्पन्नं । अतस्तन्निमित्तदेहितापिकथंस्यादितिभावः । कृतहान्यकृतप्राप्त्या कृतहानिसहिताकृतप्राप्त्या ।

स्वर्गादिफलजनकत्वेनश्रुतपुण्यपापादिकर्मणांफलोत्पत्तेःपूर्वमेवनाशाख्यकृतहानिरूपदोषेण कर्मानार्जितदेहादिप्राप्त्याख्याकृता भ्यागमाख्यदोषेणचेत्यर्थः ॥ ४६१ ॥ दूषणांतरंचाह ॥ अंतइति ॥ अंशांतरे । ब्रह्मचैतन्यांशांतरे । शंकते ॥ इंद्रियेति ॥ उत्तरमाह ॥ सुप्तिश्चेति ॥ ४६२ ॥ दूषणांतरंचाह ॥ चिद्रूपेति ॥ प्रबुद्धतामृतस्यपुनरुत्थानं । अंगीकृत्येदमुदितं । वस्तुत स्तुचिदंशसंबंधस्यसर्वत्रसत्वादुपरतिरेवनस्यादित्यपिद्रष्टव्यं ॥ ४६३ ॥ प्रकारांतरेणदेहचलनायोगमुपपादयन्परंपरिहसति ॥

अंतेमृतिश्चकावाच्यादेहस्यांशांतरेस्थितेः ॥ इंद्रियोपरतेस्साचेत्सुप्तिश्चमरणंभवेत् ॥ ४६२ ॥
चिद्रूपसाक्षिसामर्थ्यात्तद्वत्स्याद्धिप्रबुद्धता ॥ ४६३ ॥ उपादेयमुपादानगत्यैवान्यत्रगच्छति ॥
पूर्वांशाज्ञानजोदेहःकथंतस्यह्यचालने ॥ चलेदन्यत्रतन्मातागुर्विणीसर्वदातव ॥ ४६४ ॥ उ
त्पत्तिस्थितिनाशाश्चतत्रतत्रैवदेहिनां ॥ भवेयुर्निष्क्रियासंगाद्देहोपिस्याद्धिनिष्क्रियः ॥४६५॥
व्याप्तांशस्यैवजीवत्वेगजादौगजमात्रता ॥ अणावणुप्रमाणंचेत्यागतंह्यतिनिंदितं ॥ ४६६ ॥

उपादेयमिति ॥ नहिमृत्पिंडगमनंविनाघटोगच्छतीतिभावः । तस्यपूर्वांशाज्ञानस्य । तत्तस्मात्गर्भस्थशिशुचलनायोगात् । तत्रतत्र यत्रयत्रोत्पत्तिस्तत्रतत्रैव ॥४६४॥४६५॥ दूषणांतरंचाह॥ व्याप्तेति ॥ गजमात्रता जीवस्यगजप्रमाणता । आकाशस्यघ टप्रदेशइवव्याप्तचिदंशस्ययावद्गजदेहप्रदेशेपिविद्यमानत्वादितिभावः । अणौपिपीलिकादौ । पूर्वोक्तैवयुक्तिः । अतिनिंदितं जैन



मतमित्यर्थः ॥ ४६६ ॥ दूषणांतरंचाह ॥ योंशइति ॥ यः अंशः व्याप्तब्रह्मणएकत्रस्थिरीभूतोंशः । विप्रत्वं तत्रैवागतविप्रदे हसंगेसतिविप्रत्वंप्राप । क्षणांतरे विप्रदेहस्यततोगमनानंतरंचंडालदेहादेस्तत्रागमनक्षणे । इतिहेतोः ॥४६७॥ अत स्स्थिरांशजी वभावस्यायुक्तत्वात् । अणुजीवता अणूनामितस्ततोगमनशीलानांसूक्ष्माणांचिदंशानांजीवता त्वदभिमतद्वितीयपक्षानुसारेणवा अस्माकमप्यनुमततृतीयपक्षानुसारेणवा श्लाघ्येत्यादिनासंबंधः ॥ ४६८ ॥ पूर्वपक्षोक्तदूषणंस्मारयन्निममेवपक्षंस्थिरीकरोति

योंशोविप्रत्वमापेदेसएवांशःक्षणांतरे ॥ हीनोपिस्यादितिप्राप्तानानायोनिःपदेपदे ॥ ४६७ ॥ उत्क्रांतिग
त्यागतीनामित्याहब्रह्मसूत्रकृत् ॥ अतोणुजीवताश्लाघ्यायोग्यावाग्मिजनप्रिया ॥ ४६८ ॥ चलदंशो
हिजीवस्स्यान्नस्थिरांशःकदाचन ॥ चैतन्याचलनेकस्यचलनंस्याज्जगत्त्रये ॥ ४६९ ॥ चलच्चेतनहस्तस्थोघट
श्चलतिनापरः ॥ ४७० ॥ परिस्पंदक्रियानैवपरेब्रह्मणितेमते ॥ सहस्रोपाधिसंबंधेप्यक्रियस्याक्रियानहि
॥ ४७१ ॥ किंक्रियानिष्क्रियेव्योम्निस्यात्कारकशतैरपि ॥ स्थिरांशजीववादोतोनस्थिरःप्राज्ञसंसदि ॥ ४७२ ॥

॥ चलदंशइति ॥ ४६९ ॥ चलदंशस्यैवजीवत्वंसर्वानुभवसिद्धंकरोति ॥ चलदिति ॥ स्वगृहात्तटाकपर्यंतंचलतश्चेतनस्यहस्त स्थितइत्यर्थः ॥ ४७० ॥ ननुस्वभावतोनिष्क्रियस्यापिमायाख्योपाधिवशात्क्रियाभवतीत्याशंकांसयुक्तिकंपरिहृत्यपुनरणुत्वमेवदृ ढीकरोति ॥ परिस्पंदेति ॥ अक्रियस्य स्वभावतःक्रियारहितस्य ॥ ४७१ ॥ निष्क्रिये स्वभावतःक्रियायोग्ये । घटाद्युपाधीना

मितस्ततोगमनेपितदंतस्स्थव्योम्नोगमनादर्शनादितिभावः । अतः प्रयत्नशतेनापिव्याप्तेव्योम्निक्रियाऽदर्शनात्स्थिरांशजीववादो नस्थिरइतिसंबंधः । एतेन मायावाद्यभिमतद्वितीयपक्षोपिनिरस्तः । क्रियायोग्यतटाकजलादुद्धृतघटजलस्यक्रियासंभवेपि व्याप्ततयाक्रियायाअयोग्येब्रह्मणिव्योम्नीवोपाधिशतेनभिन्नभिन्नांशीकरणेपिसक्रियत्वसंपादनस्याशक्यतयासक्रियस्यदेहांतस्स्थजीव चैतन्यस्यदहनशिखातोन्यखद्योतप्रभावत्ब्रह्मचैतन्यादन्यत्वस्यैववक्तव्यत्वात् ॥ ४७२ ॥ अतस्तृतीयपक्षएवत्वयाप्याश्रयणीय इत्याह ॥ अतइति ॥ अत स्स्थिरांशजीवभावस्यायुक्तत्वात् । श्रौताणुता । अणुर्ह्येषआत्मेतिश्रुतिसिद्धस्वाभाविकाणुता ।

अतश्श्रौताणुतासिद्धातवापिचममापिच ॥ देहांतःकरणांतःस्थस्सोधोंचत्यूर्ध्वमं
चति ॥ ४७३ ॥ एवंचोभयतःपाशारज्जुर्बध्नातितेगलं ॥ ४७४ ॥ स्थिरांशस्यैवजी
वत्वेभवदैक्यकथावृथा ॥ चलदंशस्यजीवत्वेभवदैक्यकथावृथा ॥ ४७५ ॥ ॥ ॥

उपलक्षणंचैतत् । ब्रह्मभिन्नताचेत्यपिद्रष्टव्यं । सः स्वाभाविकाणुजीवः ॥ ४७३ ॥ अतःपक्षद्वयेपरस्यानुपपत्तिरेवेत्याह ॥ एवंचेति ॥ ४७४ ॥ उभयतःपाशरज्जुमेवोपपादयति ॥ स्थिरेति ॥ भवदैक्यकथा भवताक्रियमाणैक्यकथा । शिष्यजीवस्यत्वत्समीपागमनेऽसमर्थत्वात्तवचतत्समीपगमनासमर्थत्वेनभवदैक्यकथा अरण्येरोदनमासीदितिभावः । चलदंशस्यजीवत्वे उक्तदूषणभियाचलदंशजीवत्वेंऽगीकृते भवतःब्रह्मणासहैक्यकथावृथा । ब्रह्मणोविभुतयाक्रियाऽयोग्यत्वेनसक्रियस्यभवतउद्धृतांशत

याप्यैक्यायोगादितिभावः ॥ ४७५ ॥ तस्मा द्विधैक्यपक्षस्याप्यनुपपन्नत्वात् । अयं प्रागुक्तपक्षद्वयोक्तः केवलंतवैक्याय एका कित्वाय । युक्तिविरुद्धपक्षांगीकारिणस्तवसमीपंप्रतिकोपिप्रेक्षावान्नायाति । अतस्त्वमेकाकीभूयाइतिभावः । एकाकित्वायेत्यनु क्त्वा ऐक्यायेतिवचनमंततः कस्यचिदैक्यस्यास्माभिरेवदत्तत्वात् वयमपितवोपकारिणइतिपरपरिहासार्थं ॥ ४७६ ॥ अधुनाद्वि तीयपक्षेदूषणांतराणिचव्युत्पाद्यदर्शयन्स्वमतानुकूलत्वात्तृतीयपक्षमेवप्रबलयति ॥ अणुरिति ॥ स्वप्नेकंठे जाग्रदवस्थायामक्षि

तस्मात्त्वदैक्यवादोयंतवैक्यायैवकेवलं ॥ ४७६ ॥ अणुरेवहिजीवोयंकंठेऽक्षिणहृ
दिवास्थितेः ॥ देहाद्देहांतरगतेरुद्गतेश्चाप्यवाग्गतेः ॥ ४७७ ॥ प्रवेशाच्चयवव्रीहि
तिलमाषादिकांकुरे ॥ अन्नद्वाराचपितरिपितृद्वाराचमातरि ॥ ४७८ ॥ अणूनि
जीवचैतन्यान्यन्यानिचतनौतनौ ॥ नानाकर्मानुबंधीनिनानायोनिगतानिच ॥४७९॥
अन्यच्चब्रह्मचैतन्यंसदासर्वत्रतिष्ठति ॥ स्वच्छमच्छेद्यमच्छिद्रंकूटस्थमचलंध्रुवं ॥ ४८० ॥

णि सुप्तौहृदीतिविवेकः । सर्वत्राणुरितिसंबध्यते ॥ ४७७ ॥ ४७८ ॥ अणुत्वमुपसंहरति ॥ अणूनीति ॥ अणूनि स्वभावतए वाणूनि । देहाख्योपाधिसंबंधात्पूर्वमप्यणुत्वात् । अन्यानि परस्परंभिन्नानि । तत्रहेतुद्वयमाह ॥ नानेति ॥ कर्मवैचित्र्याद्योनि वैचित्र्याच्चपरस्परंभिन्नानीतिभावः ॥ ४७९ ॥ जीवविरुद्धस्वभावत्वात्ब्रह्मचैतन्यंचान्यदेवेत्याह ॥ अन्यच्चेति ॥ विरुद्धस्वभा

युक्ति-

॥ ८० ॥

मल्लिका

भेदसौ०

त्वमेवदर्शयति ॥ सदासर्वत्रेत्यादिना ॥ उपलक्षणंचैतत् । कर्मयोन्यादिदूरंचेतिग्राह्यं ॥ ४८० ॥ इतोपिद्वितीयपक्षोनघट तइत्याह ॥ तदच्छेद्यमिति ॥ अच्छेद्यंतद्ब्रह्मेतिसंबंधः । पातालादिसत्यलोकांतलोकेषुतत्रतत्रजीवभावायच्छेत्तव्यत्वाद्भागेभा गइत्युक्तं । अच्छेद्यत्वमसिद्धमित्यतआह ॥ अच्छेद्यइति ॥ उक्तेश्श्रुतेस्स्मृतेश्च ॥ ४८१ ॥ निश्छिद्रस्य सर्वत्रव्याप्ततयाछिद्र रहितस्य । असाध्यं अच्छेद्यत्वश्रुतिबलात्साधयितुमशक्यं । तयाऽविद्यया । भगवतइवअघटितघटकाविद्यासामर्थ्याद्भटतइत्या शंकांपरिहरति ॥ अविद्यायाइति ॥ विद्या असाध्यसाधिकाविद्या । यया विद्यया । अविद्याविद्ययोःपरस्परविरुद्धत्वाद्विद्या

तदच्छेद्यंकथंछेद्यंभागेभागेत्वविद्यया ॥ अच्छेद्योयमदाह्योयमित्युक्तेःकागतिर्वद ॥ ४८१ ॥ नि
श्छिद्रस्यकथंछिद्रमसाध्यंसाध्यतेतया ॥ अविद्यायानविद्यास्तियथासाध्यंचसाध्यते ॥ ४८२ ॥
यास्वांशगततत्खंडानुन्नयेचाप्यधोनयेत् ॥ जनयेन्मारयेन्नानाक्लेशौघंभोजयेत्किल ॥ ४८३ ॥

मात्रमप्यविद्यायांवक्तुंनशक्यते । असाध्यसाधकविद्यातुदूरापास्ता । भगवतस्तुसर्वज्ञतयाविचित्रविद्यावतःअसाध्यसाधकविद्या पिसंभावितेतिभावः ॥ ४८२ ॥ याऽविद्या । तत्खंडान् अच्छेद्यव्याप्तब्रह्मखंडान् । उन्नयेत्स्वर्गंनयेत् । अधोनयेत्नरकंनयेत्। अच्छेद्यस्यच्छिदेवव्याप्ततयानिष्क्रियस्यक्रियाप्यसंभावितेतिस्मारयितुंपूर्वोक्तमहिमपरामर्शितदितिपदमुक्तं । नित्यस्यकर्माबद्ध स्यचजननादिकमप्यसंभावितमितिसूचयितुंजनयेदित्यादिकमुक्तं । एकमप्यघटितंकर्तुमशक्ताबहून्येतान्यघटितानिकथंकुर्यादि

॥ २९९ ॥

तिभावः ॥ ४८३ ॥ अपहसति ॥ नहीति ॥ हियस्मात्उक्तद्विरूपताद्वयोरपिन । तस्मा ज्जीर्णपटेमूषिकइवकथंछिद्रंकुर्यादि त्यर्थः ॥ ४८४ ॥ दोषांतरंचाह ॥ निष्क्रियमिति ॥ अस्मद्ब्रह्मणस्सक्रियत्वाद्विचित्रशक्तिमत्त्वाच्चतेब्रह्मेत्युक्तं । तत् संसारद शायांविद्यमानं । तत्रतत्रैवस्थितैस्तैस्तैरंशैराकाशेघटाद्यैरिवतन्मात्रनिष्ठदेहाद्युपाधिभिस्तत्रैवकृतच्छिद्रस्यकथंचित्पूरणसंभवेपिक्रि यावृद्धिसामर्थ्यविशेषरहितब्रह्मभागस्यापिसक्रियजीवभावंप्राप्यपुनस्तत्रतत्रैवागत्यपूरकत्वायोगादितिभावः । यदिचछिद्रपूरणा यब्रह्मणिशक्तिविशेषोंगीक्रियते तदाऽपसिद्धांतस्स्यात् ॥ ४८५ ॥ दोषांतरंचाह ॥ कारागृहमिति ॥ कारागृहं नानाक्लेशानु

नहिजीर्णपटोब्रह्ममायामुषिकवेषधृक् ॥ ४८४ ॥ निष्क्रियंशक्तिशून्यंचकृष्यमाणमविद्यया ॥
तेब्रह्मतद्व्रणंसर्वंकेनोपायेनपूरयेत् ॥ ४८५ ॥ कारागृहंनयंतींतांशक्तंचेत्किंनवारयेत् ॥ ४८६ ॥
अतस्तत्प्रक्रियांब्रह्मत्वाखांगस्यविक्रियां ॥ तद्वक्रव्रणशांत्यर्थंभेदाख्यारण्यकौषधं ॥ ४८७ ॥

भावकमानुषदेहाख्यकारागृहं । तामविद्यां । शक्तिविशेषवत्त्वेस्वव्रणकारकमायामेवनिवारयेत् । मुक्तजीवेष्वपिसंभावितमायानि वारणायासमर्थंचेत्स्वचिदंशेकृतच्छिद्रंकथंपूरयेदितिभावः ॥ ४८६ ॥ अतः छिद्रपूरणासंभवात् । विक्रियां विरुद्धा व्रणरूपा क्रियायस्यास्सकाशात्सा तां । तस्याअविद्यायावक्रव्रणं वक्रात्स्वांगेकरिष्यमाणस्वांगच्छिद्राख्यव्रणं । तस्यशांतयेअनुत्पादाय । भेदाख्यमारण्यकं । उपनिषत्प्रतिपाद्यतयातन्निष्ठमौषधं । अरण्येविद्यमानमितिध्वनिः । यथामसूरिकादिव्याध्यनुत्पादायपूर्वमेव हस्तादावौषधंबध्नंति । तथाजीवैक्येसतिहिमायामदंगाज्जीवभावायव्रणंकुर्यात् । जीवादत्यंतभेदेतुजीवांशानांपृथगेवविद्यमानत्वा

त्तानेवदेहादिदानेनसंसारयेत् । मांतुकारणाभावेननस्पृशेदितिमन्वानं अत्यंतभेदमेवस्वांगरक्षकमकरोदितिभावः । रक्षांतरमाह ॥ चिच्छक्तिरूपकवचमिति ॥ चितश्शक्तिः । अविद्यानिर्हरणसामर्थ्यं । अस्पर्शाय सर्वथाऽविद्यास्पर्शाभावाय । औषधं सर्पमुखबंधनवत्व्रणानुत्पादकारणं । कवचंतुव्रणकारकस्पर्शस्यैवविघटनहेतुरितिविशेषः । तर्ह्यविद्यायाग्रासाभावाद्वैयर्थ्याख्यमरणंस्यादित्यतआह ॥ जीवानिति ॥ क्षुधितायै । ग्रासाभावेनक्षुधितायै अविद्यायै । अणुतयाऽसमर्थतया अतएवमत्तोत्यंत

चिच्छक्तिरूपकवचमस्पर्शायपदेपदे ॥ स्वयंदृढीकृत्यजीवान्क्षुधितायैसमादिशत् ॥ ४८८ ॥
ब्रह्मखंडानजीवास्तद्ब्रह्मणिक्काप्यखंडनात् ॥ अखंडितंचतद्ब्रह्मनिश्छिद्रत्वाद्विनिश्चितं ॥४८९॥
धर्मखंडोपितेनास्तिकाकथाधर्मिखंडने ॥ अखंडवादीकिंनत्वंसखंडत्वंहिमन्मतं ॥ ४९० ॥
चित्रशक्तिविशेषश्चयद्यस्तिपरमात्मनि ॥ कथंदुःखार्णवेमङ्क्तुमुत्सहेतसबुद्धिमान् ॥ ४९१ ॥

भिन्नतयाचग्रासयोग्यान्जीवानेवग्रसित्वास्वोदरइवस्वनिर्मितदेहाद्युदरेप्रवेश्यवैयर्थ्याख्यमरणंपरिहृत्याऽऽमोक्षंजीवेत्याज्ञामकरोदितिभावः ॥ ४८७ ॥ ४८८ ॥ प्रागुपपादितप्रमेयंसंकलय्योपसंहरन्युक्त्यंतरंचदर्शयति ॥ ब्रह्मखंडाइति ॥ ब्रह्मखंडाः ब्रह्मांशाः । तत्तस्मात् पूर्वोक्तहेतोः । तमेवविशदयति ॥ ब्रह्मणीति ॥ ४८९ ॥ धर्मखंडः । धर्मनानात्वं । धर्मिखंडने धर्मिनानात्वे ॥ ४९० ॥ सः परमात्मा । जीवैक्यमतेब्रह्मणिचित्रशक्तिरंगीकर्तुंनशक्यतइतिभावः ॥ ४९१ ॥ तर्ह्यविद्यासामर्थ्याद्ब्र

विष्यतीत्यतआह ॥ ईशशक्त्येति ॥ नोचेत् ईशशक्तिर्नचेत् । उक्तार्थेप्रमाणंसूचयति ॥ नर्तइति ॥ ४९२ ॥ अस्माकंमतेतु सर्वेश्वरस्यभगवतोविचित्रशक्तिमत्त्वादणिमाद्यष्टैश्वर्यसंपन्नत्वाच्चव्याप्तिर्गमनागमनादिकंचघटतइत्याह ॥ सकिलेति ॥ सः कृष्णरूपीनारायणः । एकदार्भकमादायस्वांकमारोप्यभामिनी । प्रस्नुतंपाययामासस्तनंस्नेहपरिप्लुता । पीतप्रायस्यजननीसुतस्यरुचिरस्मितं । मुखंलालयतीराजन्जृंभतोददृशेइदं । खंरोदसीज्योतिरनीकमास्येसूर्येंदुवह्निश्वसनांबुपांश्च । द्वीपान्नगांस्तद्दुहितॄर्वना

ईशशक्त्यैवसर्वत्रशक्तिर्नोचेन्नकुत्रचित् ॥ नर्तेत्वत्क्रियतेकिंचनेत्याद्यागर्जतिश्रुतिः ॥ ४९२ ॥ सकिलांबांकगोपालःकुक्षौमहृदिदंजगत् ॥ ४९३ ॥ विचित्रशक्तियुक्तोसौ सर्वज्ञस्सकलेश्वरः ॥ स्वतंत्रोखिलकर्ताचसदाऽणीयान्महान्किल ॥४९४॥ तच्छक्त्याकिं नघटतेसोपिनस्वात्मघातकः ॥ स्वरोमापिक्कचिचक्रीचक्रेणनिचकर्तकिं ॥४९५॥ ॥

निभूतानियानिस्थिरजंगमानीतिभागवतींकथांकिलेत्यनेनस्मारयति ॥ ४९३ ॥ अनेनभगवतोविचित्रशक्तिमत्त्वाणुत्वमहत्त्व सर्वेश्वरत्वादिकंसर्वमपिसिद्धमित्याह ॥ विचित्रशक्तियुक्तइत्यादिना ॥ ४९४ ॥ सोपि विचित्रशक्तियुक्तोपि । स्वात्मघातकः नानाजीवाकृत्यानरकयातनाद्यनर्थसार्थेनस्वात्मनोघातकः । नहिकोपिप्रेक्षावान्स्वसत्त्वंस्वशिरश्छेदायप्रयुङ्क्तइतिभावः । तदेवविशदयति ॥ स्वरोमापीति ॥ अतस्स्वचित्रशक्त्याऽणिममहिमाद्यैश्वर्यमेवस्वात्मनिघटयेत् । जननमरणनरकाद्यनेकदुः

खसंपादकजीवभावंकदापिनघटयेत् । किंतुदूरापास्तमेवकुर्यात् ॥ ४९५ ॥ तर्हिस्वात्मनीवगगनादेरपिगतागतंकुतोनददातीत्य तआह ॥ सत्यसंकल्पतइति ॥ स्वतंत्रचेतनत्वात्स्वसंकल्पानुसारेणैवकुर्यात् । गगनगमनादिकंचसमर्थोपिस्वसंकल्पविरुद्धत्वा न्नकरोतीतिभावः ॥ ४९६ ॥ नन्वेतादृशीशक्तिरविद्यायाएवभवतु । साचशक्तिरहितंब्रह्म जीवभावंप्रापयत्विति शंकांप्रमाणाभा वेनयशोदाप्रत्यक्षविरोधेनचनिराकृतामपियुक्त्यंतरैर्निराकरोति ॥ यदीति ॥ ईश्वरमनंगीकृत्यजडप्रधानस्यैवसर्वसमर्थत्ववंवदंत स्सांख्याःखलुतवपूर्वपक्षिणः । त्वयापीश्वरंविहायजडस्यैवसामर्थ्यांगीकारेनुम्नुटोःकोविशेषइतिवदंतस्तएवजिग्युरितिभावः ।

सत्यसंकल्पतोविष्णुःकुरुतेक्वचिदद्भुतं ॥ क्वचिच्चनकरोतीशोनासाध्यंतस्यविद्यते ॥ ४९६ ॥ यदिब्रूषेजडंशक्तं जितंसांख्यकुमारकैः॥जडप्रकृतिकर्तृत्ववादस्याप्यनुपद्रवात्॥४९७॥जडस्यनविवेकोस्तिच्छिद्यात्तर्हिनभोपित त्॥४९८॥चित्खंडनेसमर्थस्यसुकरंजडखंडनं॥वृक्षच्छेदिकुठारस्य(पत्रच्छेदेनकिंबलं॥)पक्वच्छेदेनकिंसुखं ॥४९९॥

पंडिताःकिमु । यद्बालकोपिजीयादितिसूचनायकुमारपदं । तदेवोपपादयति ॥ जडेति ॥ अनुपद्रवात् । बाधकाभावादित्यर्थः ॥ ४९७ ॥ दूषणांतरंचाह ॥ जडस्येति ॥ तत् जडं । ईश्वरस्तुसर्वज्ञचेतनतयाविवेकित्वात्प्रमाणानामनुकूलमेवकुर्यात् । अननुकूलंत्यजेत् । जडंत्वविवेकित्वात् अघटितघटकशक्तिदानेसर्वमप्यघटितंकुर्यादेव । नह्यसिधारावैरिणमेवनिकृंततीतिनिय मोस्तीतिभावः ॥ ४९८ ॥ अविद्यायागगनखंडनेकैमुत्यमाह ॥ चित्खंडनइति ॥ तत्रदृष्टांतमाह ॥ वृक्षच्छेदीति ॥४९९॥



कथंतर्हिमणिमंत्रौषधादीनांजडानामपिसामर्थ्यदर्शनमितितटस्थाशंकांपरिहरति ॥ उक्तेति ॥ उक्ताश्रुतिः, नऋतेत्वत्क्रियतइति श्रुतिः । पयोंबुवदित्यनेन पयोंबुवच्चेत्तत्रापीतिसूत्रंसंगृह्णाति । पयःक्षीरं तत्स्वयमेवदधीभवति । अंबुस्वयमेवचलतीतिचेन्न तत्रापिहरिरेवप्रेरकइतिसूत्रार्थः ॥ ५०० ॥ व्यासमतमित्यनेन तत्कृतसूत्रभाष्यकारिणापरेणापीदमेवश्लाघ्यमितिसूचयति । तथा पितन्मतत्यागिनंपरमन्यापदेशेनपरिहसति ॥ तिक्तइति ॥ पित्तदेहिनस्तइतिसंबंधः । यथापित्तग्रस्तजिह्वायास्स्वादुर्गुडएवति क्ततयाऽवभाति । तथादुराग्रहग्रस्तस्त्वमपिश्रुतियुक्त्युपेतंस्वमूलशास्त्रमेवव्यर्थीकरोषीतिभावः ॥ ५०१ ॥ ननुमयाप्यविद्या

उक्तश्रुतिप्रमाणाच्चपयोंबुवदितिस्मृतेः ॥ मणिमंत्रौषधादीनांप्रभावोपिप्रभोर्वशे ॥ ५०० ॥ इतिव्यासमतंतिक्तोगुडस्तेपित्तदेहिनः ॥ ५०१ ॥ निर्विशेषंहितेब्रह्मन शक्तंकास्यशक्तता ॥ यन्नारकासुखांभोधावुन्मज्जतिनिमज्जति ॥ ५०२ ॥ ॥

याईश्वरशक्त्यधीनशक्त्यंगीकारात्कथंव्यासमतपरित्यागइत्यतआह ॥ निर्विशेषमिति ॥ निर्विशेषं निर्गतसकलविशेषं । तेम ते । अतएवनशक्तं शक्तिविदूरं । अशेषविशेषरहितंब्रह्मेतिवदताशक्तिरूपविशेषस्यापित्यक्तत्वादितिभावः । प्रकारांतरेणापि शक्तित्यागमुपपादयति ॥ कास्येति ॥ अस्यब्रह्मणः । शक्तता शक्तियुक्तता । तत्रहेतुमाह॥ यन्नारकेति ॥ यद्ब्रह्म । असुखं दुःखं । जीवैक्यवादिनात्वयाब्रह्मणस्सकलदुःखानुभवितृत्वकथनात्पुनस्तस्यशक्तत्वकथानशोभांबिभर्तीतिभावः ॥ ५०२ ॥

चिन्मात्रब्रह्मशक्तिः चिन्मात्रतयांगीकृतब्रह्मशक्तिः । चिन्मात्रत्वंशक्तियुक्तत्वंचविरुद्धं । अतस्त्वन्मतस्यव्यासमतस्यचमहदं तरमितिभावः । जडाविद्याशक्तिपक्षः । जडाविद्यायाएवशक्तिपक्षः ॥ ५०३ ॥ पूर्वपक्षं सांख्यमतं । ननुनिर्विशेषचिन्मात्रेश त्त्यनंगीकारेप्यविद्याविशिष्टेतस्मिन्शक्तिरंगीक्रियते । अतोनकोपिदोषइत्यतआह ॥ यदीति ॥ शक्तत्वं अघटितघटकशक्ति युक्तत्वं । तत् अज्ञानं । क्षिपेत् स्वस्वरूपाद्बहिर्निष्कासयेत् । उत्क्षिपेत् ऊर्ध्वंयापयेत् । ततःअज्ञानात् । दुःखामयदादि त्युत्क्षेपणहेतुसूचनार्थमुदितं । आत्मनस्स्वस्य । तत्वंस्वरूपं । स्वतश्शक्तिशून्यंब्रह्मअज्ञानसंबंधादघटितघटकशक्तिसहितंभवति

चिन्मात्रब्रह्मशक्तिस्तेसिद्धांतंहंतकृंतति ॥ जडाविद्याशक्तिपक्षःपूर्वपक्षंविविक्षति ॥ ५०३ ॥
यद्यज्ञानविशिष्टस्यशक्तत्वंतर्हितत्क्षिपेत् ॥ उत्क्षिपेचततोदुःखामयदात्तत्वमात्मनः ॥५०४॥
अतश्शक्त्यापरीहारःप्रहारोभूत्रिधापिते ॥ प्रागुक्तानुपपत्तिस्तद्विपत्तिरभवद्ध्रुवं ॥ ५०५ ॥

चेत्तर्हिअज्ञानसंबंधपर्यंतंसुप्तपुरुषवत्तूष्णींस्थितंब्रह्म अज्ञानसंबंधानंतरंप्रबुद्धसमर्थपुरुषवज्जीवभावसंपादनेनस्वस्यमहादुःखकरंत त् अज्ञानमेवस्वस्वरूपाद्बहिर्निस्सारयेत् । स्वयंवातामधःकृत्वोर्ध्वंगच्छेत् । समर्थपुरुषस्यस्वदुःखोपेक्षकत्वादर्शनात् । तदनं तरंचपुनस्सुप्तवत्तूष्णींनतिष्ठेत् । मायावच्छेदाधीनोजीवभावस्तस्यकदापिनभवेदितिभावः ॥ ५०४ ॥ परीहारः ब्रह्मणोजीवभावो क्तौप्राप्तदोषपरिहारः । त्रिधा चिन्मात्रशक्तिपक्षे मायाविशिष्टशक्तिपक्षे, केवलमायाशक्तिपक्षेचेत्यर्थः । तेतव प्रहारोभूत् । शस्त्र

प्रहारइवानिष्टहेतुरभूदितिभावः । तत्तस्मात् । प्रागुक्तानुपपत्तिः प्रागुक्तपक्षद्वयदूषणं । विपत्तिः विरुद्धतयापद्यतेऽनयापुरुष इतिविपत्करीत्यर्थः । अनिष्टरूपावा ॥ ५०५ ॥ तस्माच्तृतीयपक्षएवयुक्तियुक्तइत्याह ॥ अखंडितेचेति ॥ अखंडिते अच्छिद्रिते । यस्मिन्ब्रह्मणि । येजीवाः तेजीवाः खंडाएकदेशाः । पृथग्द्रव्यं परमाणुवत्प्रत्येकमेवद्रव्यं । क्वचित्पुराणादौब्रह्मांशत्वकथनंतदधीनत्वादेव । नतुमत्स्यादिवत्तदेकदेशत्वात् । तथासतिसार्वज्ञादिगुणपूर्णत्वप्रसंगादितिभावः । तद्भागाः ब्रह्मभागाः । खंडत्वस्यैवाभावेब्रह्मखंडत्वंदूरापास्तमितिभावेनोक्तंसुतरामिति ॥ ५०६ ॥ अतःकारणात् । अयुक्ततरेतिपदच्छेदः । प्राक्परा

अखंडितेचयस्मिन्येसंचरंतिततस्ततः ॥ नतेखंडाःपृथग्द्रव्यंतद्भागास्सुतरांनहि ॥ ५०६ ॥
ब्रह्मणोजीवभावोक्तिरतोऽयुक्ततराविदां ॥ यतःप्रागक्रियाव्याप्ताचिदेकासक्रियास्त्वमी ॥५०७॥
अनादितोपिजीवास्तेसंचरंतिपृथक्चतत् ॥ अतोमोक्षेपिनैवैक्यंनहिकंथापरःपुमान् ॥ ५०८ ॥

भिलषितजीवभावात्प्राक् । चित् ब्रह्मचित् । तेप्रसिद्धाः । अमीजीवाः । अनादितोपिसक्रियाः अतएवसंचरंति । तत्तस्मात्कारणात् । पृथक् ब्रह्मणःपृथक् । ब्रह्मणोनादितोपिनिष्क्रियत्वात्व्याप्तत्वादेकत्वाच्च, जीवानांचानादितोपिसक्रियत्वादणुत्वादनंतत्वाच्चात्यंतभेदएवेतिभावः । अतः उक्तविधयापरांगीकारेणचानादितोपिब्रह्मभिन्नत्वात् । भिन्नयोर्घटपटयोस्तमःप्रकाशयोश्चकदाप्यैक्यादर्शनादितिभावः । युक्त्यंतरंचाह ॥ नहीति ॥ कंथा बहुगुणितपटखंडमयी । यथापटेपटखंडांतरयो

गेसतिकंथात्वं । तथाव्याप्तब्रह्मचैतन्येचैतन्यांतरयोगेसतिघनीभावप्रसंगइतिभावः ॥ ५०७ ॥ ५०८ ॥ सक्रियाणांजीवानां देहाद्युपाध्युपगमरूपमुक्तावपिनैक्यंवक्तुंयुक्तं । घटोपाध्यपगमेपिनिष्क्रियघटाकाशस्यैवक्रियाऽयोग्यगगनैक्यदर्शनात् । सक्रिय स्यघटस्थजलस्यतददर्शनाच्चेतिभावेनपरमतेजीवानांसक्रियत्वंब्रह्मणोनिष्क्रियत्वनियमंचदृढीकरोति ॥ जीवाणुत्वमिति ॥ तेमते ॥ ५०९ ॥ निष्क्रियब्रह्मभागत्वेजीवानांचनिष्क्रियत्वमेवोचितमित्यत्रदृष्टांतमुपपादयति ॥ किंन्विति ॥ तत्खंडं व्योमखंडं । त्वन्माया अनिर्वचनीयाविद्या मायाशक्त्याघटतइत्येतदप्यनेनैवदूषितं ॥ ५१० ॥ अस्माकंमतेविशेषोस्तीत्याह ॥ हरेरिति ॥

जीवाणुत्वंश्रुतिप्रोक्तमावयोर्मतमेवहि ॥ परंब्रह्मपरिस्पंदक्रियादूरतरंचते ॥५०९॥
किंनुव्योमकुठारेणच्छित्वातत्खंडमन्यतः ॥ नयेन्मयोग्रामायावात्वन्मायावाकदाचन
॥५१०॥ हरेरनेकताणुत्वंमहत्त्वंचेतिमन्मतं ॥ अतोगतागताद्यंचयुक्तंशक्त्याममप्रभोः
॥ ५११ ॥ तवत्वनेकताणुत्वे नैव स्तो महदेवतत् ॥ शक्तिश्चनास्तितेनोक्तंसमस्तंकस्तदुत्तरेत् ॥५१२॥

चशब्देनैकत्वंचसमुच्चिनोति । अतो द्विस्वभावत्वात् । गतागताद्यं, अवतारेषुगमनागमनादिक्रियासहितत्वं । आद्यपदेनानेक त्वंचगृह्यते । शक्त्या अघटितघटकशक्त्या । कृष्णाद्यवतारेष्वप्यणुत्वमहत्त्वदर्शनेनमूलरूपावताररूपयोरप्यघटितघटकशक्त्या द्विस्वभावत्वादैक्यंचघटते । जीवानांचाणुत्वैकस्वभावत्वेनकेवलंसक्रियत्वेनचभगवतोत्यंतविलक्षणत्वादत्यंतभेदश्चेतिसर्वमवदा तं ॥ ५११ ॥ परस्यतुनेयंप्रक्रियेत्याह ॥ तवत्विति ॥ त्व द्ब्रह्म । शक्तिः अघटितघटकशक्तिः । तत् दूषणं ॥ ५१२ ॥ तेषुजी



वेषु । अन्यत्संचरज्जीवचैतन्याद्व्यतिरिक्तं । अपरिच्छिन्नं यच्चैतन्यं मायाक्लेशादिदोषरहितं । तत् । नःमतेब्रह्म ॥ ५१३ ॥ श्रुत्या, ब्रह्मैवाधस्ताद्ब्रह्मैवोपरिष्टादित्यादिश्रुत्या । सः व्याप्तब्रह्मतयोच्यमानःभगवान्विष्णुरेव । नतुविष्णोरन्यद्ब्रह्मचैतन्यमंगी कर्तुमुचितमित्येवशब्दार्थः ॥ ५१४ ॥ नारायणस्यव्याप्तत्वेप्रमाणमाह ॥ अंतर्बहिश्चेति ॥ नचेद्विष्णुरेवव्याप्तब्रह्मचैतन्यंन चेत् विष्णोरन्यद्ब्रह्मचैतन्यमंगीक्रियतेचेदित्यर्थः । विष्णुब्रह्मणोरुभयोरपिव्याप्तत्वस्योक्तश्रुतिद्वयसिद्धत्वात् तयोश्चद्वित्वेव्या

मायावच्छिन्नरूपेषुतेष्वेवंसंचरत्स्वपि ॥ चैतन्यमपरिच्छिन्नंयदन्यद्ब्रह्मतद्धिनः ॥ ५१३ ॥
यत्तद्ब्रह्मपरंव्याप्तंश्रुत्यास्मृत्याचकीर्त्यते ॥ सएवभगवान्विष्णुर्वैष्णवायमुपासते ॥ ५१४ ॥
अंतर्बहिश्चतत्सर्वंव्याप्यनारायणस्थितः ॥ इतिश्रुतेर्नचेद्व्याप्तचैतन्यद्वयमापतेत् ॥ ५१५ ॥
जीवाभेदेपियस्याशाब्रह्मकस्माद्भिनत्त्यसौ ॥ कल्पनागौरवंयत्स्याद्विधायालाघवंचयत् ॥५१६॥
जीवान्जग्रास यामायाव्याप्तेब्रह्मणिकिंतया ॥ कविर्मनीषीपरिभूर्यथार्थान्सोसृजत्किल ॥५१७॥

प्तचैतन्यद्वयमापतेत् । तच्चाप्रामाणिकं । अतोव्याप्तचैतन्यतयोच्यमानंब्रह्मविष्णुरेवेतिभावः ॥ ५१५ ॥ व्याप्तचैतन्यद्वयक ल्पनंपरस्यस्वप्रक्रियाविरुद्धंचेत्याह ॥ जीवाभेदइति ॥ ब्रह्म व्याप्तचैतन्यं भिनत्ति द्वयंकरोति । यद्यस्मात् । लाघवं । अल्प ता । तस्मात्कस्माद्भिनत्तीतिपूर्वेणान्वयः ॥ ५१६ ॥ विष्णोर्मायावच्छिन्नत्वात्कथंब्रह्मेत्यतआह ॥ जीवानिति ॥ तयामायया

किं नकिमपिप्रयोजनमित्यर्थः । जीवेषुदुःखात्मकसंसारसंपादनायमायायाअवश्यमंगीकार्यत्वेनतावतैवचरितार्थत्वात् निर्दुःखे व्याप्तेचविष्णौमायावृतत्वांगीकारोव्यर्थोऽसाध्यश्चेतिभावः । सृष्ट्युपयोगितयाविष्णौमायांगीकारइतिशंकांनिराकरोति ॥ कविरिति ॥ ५१७ ॥ मिथ्याऽज्ञानं मिथ्याभूतमज्ञानं । सर्वज्ञस्यभगवतस्सत्यजगत्सृष्टौमिथ्याभूताज्ञानस्योपयोगाभावात् । प्रत्युतविरुद्धत्वादितिभावः । स्वजायां स्वस्यजीवस्य जायां जायावदनादिकालमारभ्यविद्यमानां । परेपरमात्मनि ॥ ५१८ ॥ प्रागु

अतस्सत्यजगत्सृष्टौमिथ्याऽज्ञानंतवप्रियं ॥ कुत्रोपयुज्यतेतस्मात्स्वजायांनपरेर्पय ॥ ५१८ ॥
अतोघटमठाकाशाद्युपमाविषमोपमा ॥ ५१९ ॥ घटेघटप्रमाणोसौमठमात्रोमठेपिच ॥ घटे
गच्छतिनोगच्छेदागच्छतिनचाव्रजेत् ॥५२०॥ महाकाशस्यखंडोसौमहाकाशस्वभाववान् ॥
तस्यतद्रूपताप्यस्तुमत्स्यादीनांहरित्ववत् ॥ ५२१ ॥ जीवास्त्वाकाशमध्यस्थत्रसरेणुगणोपमाः॥
तस्माद्ब्रह्मैक्यमेतेषांनाभूदस्तिभविष्यति ॥ अणूनांगगनेनेवमणीनामिवसूत्रतः ॥ ५२२ ॥

पपादितंप्रमेयंबुद्धावारोहायस्मारयन्नुपसंहरति ॥ अतइति ॥ अतः उक्तयुक्तिसमूहात् ॥ ५१९ ॥ वैषम्यमेवोपपादयति ॥ घटइति ॥ ५२० ॥ महाकाशस्वभाववान् । महाकाशवन्निष्क्रियत्वनिराकारत्वादिस्वभाववान् । तस्यखंडाकाशस्य । तद्रूपता महाकाशरूपता । उभयोरप्येकस्वभावत्वादितिभावः । तत्रदृष्टांतमाह ॥ मत्स्यादीनामिति ॥ खंडाकाशमहाकाशदृष्टांतोभगवदवताराणांभगवतश्चदातुमुचितो नजीवानामितिभावः ॥ ५२१ ॥ जीवयोग्यदृष्टांतमाह ॥ जीवास्त्विति ॥ गमनागमना

दिक्रियाानिर्वाहायानादिभेदनिर्वाहायचायमेवदृष्टांतोन्याय्यइतिभावः । तस्माद्विजातीयस्वभावत्वात् । अणूनांपरमाणू
नां यथागगनविजातीयानांरेणूनांनगगनैक्यं । तथाजीवानामपिब्रह्मैक्यंकदापिनभवेदितिभावः ॥ ५२२ ॥ इदानींपररीत्यैवभे
दस्यसदातनत्वमुपपादयति ॥ अनादीति ॥ तद्भेदस्य जीवब्रह्मभेदस्य ॥ ५२३ ॥ भेदानादित्वंनमयांगीक्रियतइत्यतआह ॥
अनादित्वंचेति ॥ षडस्माकमनादयइत्यनेन जीवोब्रह्मविशुद्धाचित्तेषांभेदःपरस्परं । अविद्यातच्चितोर्योगःषडस्माकमनादय
इतिपरकीयमूलग्रंथस्थवाक्यंसंगृह्णाति । जीवो देहांतःकरणाद्युपाध्यवच्छिन्नचैतन्यं । लिंगशरीरस्यानादित्वात्सोप्यनादिरिति

अनादिब्रह्मकिलतेजीवास्सर्वेप्यनादयः ॥ तद्भेदस्याप्यनादित्वेऽभेदोभूद्ब्रह्मणःकदा ॥ ५२३ ॥ अनादित्वंच
भेदादेःषडस्माकमनादयः ॥ इतित्वद्ग्रंथएवोक्तमतोयुक्तिविचारणे ॥ नाखंडब्रह्मचित्खंडोजीवराशिरभू
दयं ॥५२४॥ इदानींतुभिदास्त्येवनभविष्यतिसाकदा ॥ अज्ञाननाशेप्यज्ञानाकार्यानादेरनाशनात् ॥५२५॥

भावः । अविद्यावच्छिन्नंजगदुपादानभूतंचैतन्यंब्रह्म । परिच्छिन्नजगदुपादानचैतन्यादन्यत्रापिविद्यमानंअपरिच्छिन्नंचैतन्यं
विशुद्धाचित् । अन्यत्स्पष्टं । अतो नादिकालमारभ्यजीवानांपृथगेवविद्यमानत्वात् ॥ ५२४ ॥ इदानीमित्युपलक्षणं । अनादि
कालमारभ्येतिग्राह्यं । भिदा जीवब्रह्मभिदा । साभिदा कदानभविष्यति । मुक्तावपिभविष्यत्येवेतिभावः । तदुपपादयति ॥
अज्ञाननाशइति ॥ अज्ञानाकार्यस्य अज्ञानानुपादानकस्येत्यर्थः । तत्रहेतुरनादेरिति । भेदस्यानाशनात् । नाशेकारणाभा

वादित्यर्थः । ज्ञानमज्ञानस्यैवनाशकमितिनियमांगीकारेणसाक्षाज्ज्ञानस्यैवभेदनाशकत्वासंमतेः । उपादानभूताज्ञाननाशप्रनाड्या
नाशस्यचत्वद्रीत्यैवानादितयाब्रह्मवदज्ञानानुपादानेभेदेऽसंभवात् । अकस्माद्विनाशस्यचज्ञाननिवर्त्यत्वान्यथानुपपत्त्यामिथ्या
त्वंवदतापरेणानंगीकारात् । अनादौभेदेऽसंभावितत्वाच्चेतिभावः । अतएवैक्यप्राप्त्याभेदनिवृत्तिरित्यपिनिरस्तं । साक्षात्परंपरया
वाज्ञानेनैवसर्वनिवृत्त्यंगीकारात् । अन्यथामिथ्यात्वासिद्धेः । अनादौनाशरहितेचभेदेजागरूकेतद्विरुद्धैक्यप्राप्तेरेवायोगाच्च
॥ ५२५ ॥ युक्त्यंतरंचाह ॥ तदनुद्धृतखंडानामिति ॥ तत्रव्यतिरेकदृष्टांतमन्वयदृष्टांतंचाह ॥ घटाकाशइति ॥ महाका

तदनुद्धृतखंडानांतत्रैक्यंचनयुक्तिमत् ॥ घटाकाशेमहाकाशस्यैक्यंस्यान्नघनावलेः ॥
॥ ५२६ ॥ मुक्तास्तुधौतमणिवत्पंकार्द्रमणिवत्सृतौ ॥ ५२७ ॥ सर्वतोप्यपरिच्छिन्नचैत
न्येब्रह्मणिस्थिरे ॥ इतस्ततश्चरच्छिन्नचैतन्यंह्यन्यदेवहि ॥ ५२८ ॥ ॥

शस्यैक्यं । महाकाशेनैक्यमित्यर्थः । यथामहाकाशखंडतयोद्धृतस्यघटाकाशस्यघटनाशेमहाकाशस्यैक्यं।तथाब्रह्मचैतन्योद्धृतचैत
न्यखंडानामेवब्रह्मणैक्यंस्यात् । ननुतदनुद्धृतखंडानामनादिकालमारभ्यभिन्नतयापरिवर्तमानानांजीवखंडानां । गगनखंडतयानु
द्धृतघनखंडानांगगनभिन्नतयापरिवर्तमानानांगगनैक्यादर्शनादितिभावः ॥ ५२६ ॥ ऐक्यप्राप्त्यभावेमुक्तिःकेत्यतआह ॥ मुक्ता
स्त्विति ॥ मणेःपंकादुद्धारवत्संसारादुद्धारएवजीवचैतन्यस्यमोक्षोभवेत् । ब्रह्मचैतन्याभेदस्यतुनकोप्युपयोगइतिभावः॥५२७॥
ब्रह्मैवसन्ब्रह्माप्येतीतिश्रुतेस्संसारेपिजीवैक्यसद्भावान्मुक्तौकथंतदभावइतिशंकांपूर्वोक्तयुक्त्यैवदूषयन्नुपसंहरति ॥ सर्वतइति ॥



छिन्नचैतन्यं परिच्छिन्नचैतन्यं । हीत्यनेन सक्रियघनखंडानांनिष्क्रियगगनैक्याभावप्रसिद्धिं निष्क्रियगगनाभिन्नानांघटाकाशादी
नांतत्तदुपाधिनिमित्तमिथ्याभूतक्रियायाअप्यदर्शनप्रसिद्धिंचसूचयति । संसारेपिसक्रियजीवानांनिष्क्रियब्रह्मैक्यंयुक्तिबाधितत्वा
न्नश्रुतिशतेनापिबोधयितुंशक्यमितिभावः । तर्हिश्रुतेःकागतिरित्यतस्सप्तसुप्रथमेत्यनुशासनात् ब्रह्मैवेतिप्रथमायास्सप्तम्यर्थत्व
मेवगतिः । नोचेद्ब्रह्माप्येतीत्युत्तरखंडविरोधइतिभावेनजीवानांब्रह्माश्रितत्वेदृष्टांतानाह ॥ मुग्धस्त्रीमूर्धमालावदित्यादिना ॥

मुग्धस्त्रीमूर्धमालावदब्धिस्थजलजंतुवत् ॥ व्योमस्थपक्षिश्रेणीवद्भूमिस्थजनजालवत् ॥५२९॥
अथसर्वाव्यवस्थेयंदृश्यतेकेवलंजनैः ॥ वस्तुतोनास्तितत्सर्वंमृषेतियदिमन्यसे ॥ ५३० ॥
देहादिकंमृषातेस्तुनानादेहस्थचेतनाः ॥ मृषाचेद्गमनंनस्याद्रज्जुसर्पोनसर्पति ॥ ५३१ ॥
अस्तितत्रापिचैतन्यभ्रमस्थाणुषुपुंभ्रमे ॥ चरेयुर्भ्रमकालेवाव्यावहारिकतापिते ॥ ५३२ ॥

॥ ५२८ ॥ ५२९ ॥ एकजीवमतमवलंब्यशंकते ॥ अथेति ॥ इयंजीवादिरूपा । केवलं अर्थाभावेपीत्यर्थः । दृश्यते भ्रांत्या
प्रतीयते । उत्तरमाह ॥ देहादिकमिति ॥ गमनं यज्ञदत्तदेवदत्तादीनामितस्ततोगमनं । ननुचैतन्यारोपात्संचरणमितिशंकांप
रिहरति ॥ रज्जुसर्पइति ॥ ५३० ॥ ५३१ ॥ तत्रापिरज्जुसर्पेपि । उदाहरणांतरंचाह ॥ स्थाणुषुपुंभ्रमइति ॥ दूरस्थस्थाणुषु
पुंभ्रमे पुरुषोयमितिभ्रमे । चरेयुरित्युपलक्षणं । हानोपादानव्यवहारंचकुर्युरितिद्रष्टव्यं । भ्रमकाले अनुत्पन्नबाधभ्रमकाले ।

एषां रज्जुसर्पस्थाणुपुरुषादीनां । बाधतःपूर्वमपि अनुत्पन्नबाधभ्रमदशायामपि गत्यदर्शनात् । इतस्ततोगमनादर्शनात्तेव्यावहारिकतापिवृथाऽभूत् । अनुत्पन्नबाधदीर्घभ्रांतिरूपव्यावहारिकत्वात्देवदत्तादीनांगमनागमनादिकमितिकार्यनिर्वाहायनाभूदित्यर्थः । तथासत्यनुत्पन्नबाधभ्रमरूपव्यावहारिकदशावलंबियज्ञदत्तादिवत्रज्जुसर्पस्थाणुपुरुषादावपिबाधात्पूर्वंतत्तद्भ्रमदशायांगमनागमनादिक्रियाप्रसंगात् । अतश्चैतन्यस्यारोपितत्वेननकापिक्रियेतिभावः । दूषणांतरंचाह ॥ सत्येनेति ॥ तेषां जीवचैतन्यानां मृषात्मना मारोपितानां । प्रतीयमानसर्वजीवानांचैतन्यारोपादेवगमनागमनादिक्रियासंभवेऽविशेषादेकस्मिन्नपिजी

वृथाभूद्बाधतःपूर्वमप्येषांगत्यदर्शनात् ॥ सत्येनब्रह्मणातेषामैक्यंनस्यान्मृषात्मनां ॥ ५३३ ॥
अथसंत्येवचैतन्यभागास्तेसर्वदेहगाः ॥ तेषांब्रह्मविभेदस्तुमृषेतियदिमन्यसे ॥ ५३४ ॥ ॥

वेब्रह्मभ्रमनिमित्तचैतन्यारोपादेवसर्वव्यवहारसंभवादेकोपिजीवस्सत्योनस्यात् । तथाचकथंजीवैक्यमितिभावः । अथवा । एकजीवव्यतिरिक्तसर्वजीवानामारोपितत्वेतत्त्वमसिब्रह्माहमस्मिसर्वंखल्विदंब्रह्मेत्यादिनाश्वेतकेत्वादिऋषिविशेषाणांकथ्यमानमैक्यंनस्यात् । अतएकजीवव्यतिरिक्तजीवारोपपक्षोनमायावादिनावक्तुंशक्यइतिभावः ॥ ५३२ ॥ ५३३ ॥ तर्हिबहुजीववादएवास्तु । तथाप्यनादिरपिजीवब्रह्मभेदोमृषैवेत्यंगीक्रियतइतिशंकामनूद्यजीवस्वभावंब्रह्मस्वभावंचवर्णयन्नेवधिक्करोति ॥ अथेति ॥ आदितः अनादिकालमारभ्य । तत्कृते भेदमिथ्यात्वकृते । तत्र शास्त्रे । उक्तरीत्याबहुधाविरुद्धधर्माक्रांतजीवब्रह्मभेदमृषात्वं

नकोपिप्रेक्षावांच्छृणुयादितिभावः ॥५३४॥५३५॥५३६॥५३७॥५३८॥ ५३९ ॥ उक्तविरुद्धधर्माणांभेदमृषात्वेऽसंभवंतात्विकभेदे
सत्येवसंभवंचदृष्टांतमुखेनदर्शयति॥ मृषाभेदमिति॥ जलेन घटस्थजलेन। जलपंकेन घटस्थजलपंकेन। एवमेवव्याप्तशुद्धब्रह्मचि

सर्वत्रनिष्क्रियंब्रह्मनिश्छिद्रंवर्ततेकिल ॥ ५३५ ॥ नानादेहगतान्येतान्यनंतान्यत्यणूनिच ॥
चैतन्यान्यादितस्संतिसंचरंतिपृथक्पृथक् ॥ ५३६ ॥ अन्यतोनुकृतांशानामनादिपरिवर्तिनां॥
अणूनांसक्रियाणांचबहूनांक्लेशभोगिनां ॥ ५३७ ॥ सदासर्वत्रपूर्णेननिश्छिद्रस्थिरमूर्तिना ॥
एकेननिर्विकारेणक्लेशानांदूरवर्तिना ॥ ५३८ ॥ भेदोमृषेतियद्वाक्यंयच्छास्त्रंतत्कृतंकृतं ॥
बधिरास्तत्रशिष्यास्स्युरुन्मत्तावानबुद्धिमान् ॥ ५३९ ॥ मृषाभेदंघटव्योमप्रचलेत्तत्रतत्रकिं ॥
जलेनजलपंकेनलिप्यतेकिंदिनेदिने ॥ ५४० ॥ किंतुस्वभावभिन्नानांरेणूनांगगनादिना ॥
तत्रतत्रक्रियाचास्तिविक्रियाचततस्ततः ॥ ५४१ ॥ निष्क्रियब्रह्मभागाश्चेत्सक्रियत्वंनकर्हि
चित् ॥ निष्क्रियाकाशभागास्तेसक्रियाःकेनवाकृताः ॥ ५४२ ॥ ॥ ॥

दात्मकत्वेजीवस्यनकोपिविकारस्स्यात् । निर्विकारगगनैकदेशेघटाकाशेघटादाविवतदुपाधितोव्यावहारिकविकारस्याप्यदर्शना
दितिभावः ॥ ५४० ॥ गगनादिनास्वभावभिन्नानामितिसंबंधः ॥ ५४१ ॥ भेदमृषात्वेइदंतुसर्वथानुपपन्नमित्याह ॥ निष्क्रिये

ति ॥ ५४२ ॥ तत्तस्मात् निष्क्रियसक्रिययोरभेदायोगात् । निष्क्रियेणैक्येमूकतामुपपादयति ॥ स्फोटइति ॥ यद्यस्मात् । स्फोटोविभागः । निष्क्रियब्रह्मणैकीभूतजीवस्यापिनिष्क्रियत्वावश्यंभावात् ताल्वोष्ठपुटविभागोपयुक्तचैतन्यांशानां ( चैतन्यात्मकतत्प्रकाशानांच) क्रियाऽयोगेनजडोष्ठयोरपिकदापिविभागोनस्यादितिभावः॥५४३॥ ननुसर्वथाभेदाभावोनोच्यते किंतुव्यावहारिकभेदोप्यस्तीतिशंकामपहसति ॥ व्यावहारिकतोक्तिरिति ॥ पदमंजरींस्पर्धते । उभयथापिव्यर्थापदमंजरीतिवचनात्पद

तज्जीवेश्वरभेदोवामूकतावागतिस्तव ॥ स्फोटोयन्नाक्रियेणैक्येताल्वोष्ठपुटसंपुटे
॥ ५४३ ॥ व्यावहारिकतोक्तिस्तेस्पर्धतेपदमंजरीं ॥ बाधश्चेदस्तितर्ह्यर्थनास्तितैवेति
किंतया ॥ बाधश्चेन्नास्तितेशास्त्रनास्तितैवेतिकिंतया ॥ ५४४ ॥ सर्वानुभवसिद्धस्य
मर्यादारक्षकस्यच ॥ जीवेश्वरादिभेदस्यमृषात्वंकेनहेतुना ॥ ५४५ ॥ ॥

मंजरीवदुभयथाव्यर्थेत्यर्थः । तदेवदर्शयति । बाधश्चेति ॥ तया व्यावहारिकतया । शास्त्रनास्तिता ऐक्यशास्त्रनास्तिता । अबाधितभेदांगीकारेणसदद्वैतभंगप्रसंगादितिभावः ॥ ५४४ ॥ तस्मादनादिकालमारभ्यपरिवर्तमानजीवेश्वरादिभेदस्य सर्वव्यवहारनिर्वाहकस्याऽऽविपालगोपालमप्यनुभवेनाद्याप्यबाधितस्य यथापूर्वमकल्पयदितिश्रुत्या पूर्वपूर्वयथातथैवसर्वदाजगत्सृष्टिरित्यर्थकथिकयाऽनुगृहीतस्यच निर्निमित्तंमृषात्वकल्पनेनकुतोव्यत्यासइतिवदन्युक्तिचर्चामुपसंहरति ॥ सर्वानुभवेत्यादिना



॥ ५४५ ॥ ५४६ ॥ ५४७ ॥ अस्यार्थस्य जीवेश्वरादिभेदरूपार्थस्य । भाविकाले भविष्यत्काले ॥ ५४८ ॥ ऐक्याभावेकामुक्तिरित्यस्यमुक्तस्तुधौतमणिवदितिसंसारादुद्धारएवमुक्तिरित्येकमुत्तरंदत्तं । प्रकारातरेणाप्युत्तरमाह ॥ निर्दुःखेति ॥ ननुसर्वंखल्विदंब्रह्मेतिश्रुत्यासर्वाद्वैतकथनात् उक्तविधयासर्वानुभवसिद्धस्यापिभेदस्यमृषात्वंकल्प्यतइतिचेन्न । गंगायांघोषस्सिंहोदेवदत्तइत्यादिलौकिकवाक्यैर्वा । यजमानःप्रस्तरः आदित्योवैयूपइत्यादिवैदिकवाक्यैर्वा प्रत्यक्षसिद्धार्थबाधस्यक्काप्यदर्शनात् । प्रत्यु

यथानुभवमेवार्थस्सदासर्वत्रतिष्ठतु ॥ जीवोजीवोस्तुसर्वत्रजडमस्तुजडंसदा ॥ ५४६ ॥
ईशस्सर्वत्रचेशोस्तुयथापूर्वमितिश्रुतिं ॥ उपेक्ष्यलोकसंहारःक्रियतेकेनहेतुना ॥ ५४७ ॥
नह्यनादिभवेप्यस्यव्यत्ययोर्थस्यकस्यचित् ॥ इदानींन कुतोभाविकालेव्यत्यासइष्यते
॥ ५४८ ॥ निर्दुःखस्वसुखप्राप्त्यामुक्तिश्चैक्यंविनाभवेत् ॥ ५४९ ॥ वेदस्तुसर्वंब्रह्मेतिसर्वस्याप्येकतांस्फुटं ॥ वक्तितत्रतुजीवैक्यमात्रेकेनभरस्तव ॥ ५५० ॥ ॥

तप्रत्यक्षबाधितस्वार्थपरित्यागेनार्थांतरवृत्तेरेवदर्शनात् । सर्वंखल्विदंब्रह्मेतिवाक्यस्यापिसर्वानुभवबाधितसर्वाद्वैताख्यार्थपरित्यागेनराजैवराष्ट्रमितिवत्सर्वस्यब्रह्माधीनत्वार्थएववृत्तेरुचितत्वात् ॥ ५४९ ॥ प्रकारांतरेणापिसर्वंखल्विदंब्रह्मेतिवाक्यस्यपरकीयार्थेऽनुपपत्तिमाह ॥ वेदस्त्विति ॥ सर्वस्य जडाजडात्मकप्रपंचस्य । तत्र जीवजडात्मकसकलप्रपंचस्यब्रह्मैक्यकथकवाक्ये ।

सर्वशब्दसंकोचायोगादितिभावः ॥ ५५० ॥ ननुजडभेदस्यप्रत्यक्षेणदर्शनात्कथंतदभेदश्श्रुत्यापिवक्तव्यइतिचेत्तर्हि नाहंसर्वज्ञो नाहंसर्वकर्तेतिईश्वरप्रतियोगिकजीवभेदस्यापिप्रत्यक्षेणदर्शनाज्जीवाभेदोपिकथंकथनीयः । यदिचभेदस्यव्यावहारिकत्वमवलंब्य परमार्थतोजीवाभेदश्श्रुत्याकथ्यते । तर्हिजडेपिसैवगतिरस्त्वित्याह ॥ दृष्टस्त्विति ॥ दृष्टोजडभेदस्त्वितिसंबंधः ॥ ५५१ ॥ पुनरपितच्छंकामनूद्यप्रतिबंद्यादूषयति ॥ यदीति ॥ तद्व्यतिरेकेण ब्रह्मव्यतिरेकेण । ब्रह्मैवास्ति । ब्रह्मव्यतिरेकेणजडंतुसर्वथा नास्तीतिजडमिथ्यात्वमित्यर्थः । तर्हिचेतनेप्यस्तु सएवार्थोभवत्वित्यर्थः । सर्वथासकृच्छ्रुतैकशब्दस्यार्थद्वयकल्पनानयुक्तेतिभा

दृष्टस्तुजडभेदोस्तुमृषाचव्यावहारिकः ॥ ५५१ ॥ यदितद्व्यतिरेकेणास
त्त्वमर्थोजडेतव ॥ चेतनेप्यस्तुनित्यत्वान्नचेन्नित्यजडेपिन ॥ ५५२ ॥ ॥

वः । नित्यत्वात् चेतनस्यध्वंसाप्रतियोगित्वात् । नचेत् मिथ्यात्वंनचेत् । तर्हिनित्यजडे प्रकृतिवेदादावपिमिथ्यात्वंनवक्तुंश क्यमित्यर्थः । उपलक्षणंचैतत् । अनित्यजडेपिप्रध्वंसस्यप्रतियोगिसत्तापूर्वकत्वनियमेनत्रैकालिकसत्तानिषेधरूपमिथ्यात्वंनवक्तुंश क्यं । अतस्सर्वस्यतदधीनत्वमेवार्थोवक्तव्यइत्यपिद्रष्टव्यं । किंचतद्व्यतिरेकेणासत्त्वमितिवदतापरेणापिजडस्यब्रह्मात्मनावस्थानं नैवोच्यते । अतस्तद्व्यतिरेकेणेतिपदवैयर्थ्यं । नहिसर्वथाऽविद्यमानस्यशशविषाणस्यशशविषाणंब्रह्मेतिवाक्येनब्रह्मव्यतिरेकेणास त्त्वंकोपिब्रूते । अतस्तद्व्यतिरेकेणासत्त्वंपरेणापिजीवएववक्तुंशक्यते । नजडे । तथाचकथमुभयसाधारण्येनार्थकथनं । संकोचेप

दार्थसंकोचाद्विभक्त्यर्थसंकोचस्यन्याय्यत्वादस्मदुक्तएववाक्यार्थइतिनेदंवाक्यंतवानुकूलं ॥ ५५२ ॥ दोषांतरंचाह ॥ ईशत्वेति ॥ ईशत्वंसर्वेश्वरत्वं । एषांसर्वेश्वरत्वादीनां । अल्पेशेनाल्पकर्त्राल्पज्ञेनचजीवेनैक्येसाक्षात्तद्विरुद्धास्सर्वेश्वरत्वादयोमहागुणास्त्याज्याइतिभावः ॥ ५५३ ॥ ननुजडेऽल्पेश्वरत्वादेरभावेनसर्वेश्वरत्वादिमोचकाभावेपिजडस्याचेतनत्वेनतद्विरुद्धचित्त्वंब्रह्मणिनष्टंस्यादित्यतआह ॥ दुर्घटमिति ॥ एकजातीयत्वलोभेनजडेचित्त्वंदिशेदितिभावः । तेनकारणेन । तज्जीवैक्यं । इदंजडैक्यं

ईशत्वसर्वकर्तृत्वसर्वज्ञत्वादयोगुणाः ॥ अलभ्यास्तपसाप्यन्यैस्सर्वप्राणिमनोहराः ॥ जीवैक्येखलुसर्वेषामेषांनाशोभविष्यति ॥ ५५३ ॥ दुर्घटंघटयंतीतेमायाचित्त्वंजडेदिशेत् ॥
तेनचित्त्वादिनाशस्स्यान्नजडैक्येपितेमते ॥ तच्चेदैक्यंसुखग्राह्यमिदंकस्मान्नगृह्यते ॥ ५५४ ॥
अनर्घरत्नचोरस्तुरक्ष्योमृद्भांडतस्करः ॥ शिक्ष्यःकिलकृपालुस्तुदीनेषुकुरुतेदयां ॥ ५५५ ॥
जडस्यानंदमयताजडंजन्मादिकारणं ॥ जडादज्ञाननाशस्तेदुर्घटंघटयेज्जडं ॥ ५५६ ॥ ॥

॥ ५५४ ॥ ननुयद्यपिजडस्यचित्त्वंभवदुक्तयुक्त्यामन्मतेघटतेतथापिमयातन्नांगीक्रियते । अतोजडैक्येचित्त्वनाशस्स्यात् । इति चेत्सत्यं । तथापिजीवसाधारणचित्त्वमात्रनाशान्नमहाहानिः । जीवैक्येतुसर्वेश्वरत्वादिदिव्यगुणनाशात्तदेवनांगीकार्यमित्यत्रदृष्टांतमाह ॥ अनर्घ्येति ॥ जडत्वेनातिमूढतयाकृपापात्रत्वात्पापसंसारादिदोषदूरत्वाच्चजडैक्यमेवांगीकुर्यादितिभावः ॥५५५॥ किंचतवमतेजडैक्येब्रह्मण्यपेक्षितमहागुणसिद्धिरेवस्यादित्याह ॥ जडस्येति ॥ जडस्यकोशस्य । जडमज्ञानं । जन्मादिकारण

त्वस्यतटस्थलक्षणत्वांगीकारात् । तेमते । जडात् अंतःकरणवृत्तिरूपज्ञानात् । स्वरूपज्ञानस्याज्ञानाविरोधित्वांगीकारात् । जडै क्ये अंतःकरणवृत्तिरूपज्ञानैक्यस्यापिलाभात् अज्ञानाख्यबंधनाशकत्वमहामहिमाब्रह्मणिसेत्स्यतीतिभावः । जडमज्ञानं दुर्घटंघ टयेत् । तथाचजडैक्येदुर्घटघटकत्वाख्यमहामहिमापिसिद्ध्यतीतिभावः ॥ ५५६ ॥ पूर्वंजडैक्यस्यचित्त्वमात्रनाशकत्वान्मृद्भांड तस्करत्वमुक्तं । अधुनांतःकरणरूपजडाभेदेज्ञानत्वरूपचित्त्वस्यापितन्मतरीत्यैवलाभात्तस्करतैवनेत्याह ॥ ज्ञानत्वरूपचित्त्वं चेति ॥ अनुपदं श्लोकपंचकादुपरि । तत्तस्मात् ज्ञानत्वरूपचित्त्वस्याहानेस्तस्करत्वंदुष्करमितिसंबंधः । अस्मिन्जडैक्ये । ब्रह्म

ज्ञानत्वरूपंचित्त्वंचवक्ष्यामोनुपदंजडे ॥ दुष्करंतस्करत्वंतदस्मिन्ब्रह्मयशस्करे ॥५५७॥मायाशक्त्याजडस्या
पिसार्वज्ञादिप्रदानतः ॥ ऐक्येतुनजडात्मैक्यंतस्करस्याद्धिकस्याचित् ॥५५८॥ अथवाजडतामीशेदत्वामा
यास्वशक्तितः ॥ जडैक्यमेवघटयेदिदंतेतिप्रियंमतं ॥ यत्रत्वस्येतिवाक्योक्तमुक्तेरत्युपयोगतः ॥ ५५९ ॥

यशस्करे अघटितघटकत्वादिप्रागुक्तमहागुणहेतुभूतइत्यर्थः ॥ ५५७॥ ननुजडस्यसार्वज्ञाभावात्कथंब्रह्मैक्यमित्यतआह ॥ माया शक्त्येति ॥ अघटितघटकमायाशक्त्येत्यर्थः । उपलक्षणंचैतत् । ब्रह्मणोपिसार्वज्ञादेःपरेणमायाधीनत्वांगीकारात्मायाख्यजड स्यसार्वज्ञादिसकलगुणाअपिपरमतेसंभाविताइत्यपिद्रष्टव्यं । जडस्येत्यस्यैक्येत्वित्यत्रापिसंबंधः । एवंचजडस्यैक्येतुमायाशक्त्या जडस्यापिसार्वज्ञादिप्रदानतः तत् जडात्मैक्यं कस्यचिद्धर्मस्यापितस्करोनस्यादितियोजना ॥ ५५८ ॥ युक्त्यंतरंचाह ॥ अथवे



ति ॥ स्वशक्तितः दुर्घटघटकत्वाख्यस्वशक्तितः । इदं ब्रह्मणोजडत्वमापाद्यजडैक्यं । अतिप्रियत्वमेवदर्शयति ॥यत्रत्वस्येति॥ ब्रह्मणोजडैक्येघटप्रायत्वावश्यंभावात्केनकरणेनकंपश्येदितिकेनकरणेनकंजिघ्रेदित्युक्तपराभिलषितमुक्तिरपिसम्यक्संपादितास्या दितिभावः ॥ ५५९ ॥ किंचजीवैक्येप्राग्बंधसद्भावान्ननित्यमुक्तता । जडैक्येतुप्रागपिबंधाभावान्नित्यमुक्तत्वाख्यमहामहिमसि द्धिरित्याह ॥ नात्मानमिति ॥ तवमुक्तः । तदा मुक्तिकाले । पूर्वंतुस्वपरदर्शनसद्भावाद्बद्धएवेतिभावः । सर्वत्र संसारदशा

नात्मानंनपरांश्चापितवमुक्तस्तदेक्षते ॥ जडमुक्तस्तुसर्वत्रजडैक्येनित्यमुक्तता ॥ ५६० ॥
फलेत्वतिशयाद्वाक्यंजडैक्यपरमेवतत्॥सुखात्मताजडेपिस्यान्मानसंहिसुखंनृणां॥५६१॥
मोक्षश्चतार्किकाचार्यमोक्षवद्वाभविष्यति ॥५६२॥ ज्ञानरूपमनस्तत्वेनैक्येज्ञानत्वमप्यलं॥
स्यादेवयत्समस्तस्यज्ञानंमानसमावयोः ॥ नतेकिंचिदनिष्टंस्यादस्माकंमहतीक्षतिः ॥५६३॥

यांमुक्तिदशायांच । आत्मानंपरांश्चनेक्षतइत्यावृत्त्यासंबंधः । जडैक्येब्रह्मजडैक्ये नित्यमुक्तताब्रह्मणस्यादित्यर्थः ॥ ५६० ॥ तद्वाक्यं यत्रत्वस्येतिवाक्यं । ननुनित्यमुक्तत्वलाभेपिसुखरूपत्वाभावात्कथंफलतेतिशंकांनिवारयति ॥ सुखात्मतेति ॥५६१॥ प्रकारांतरेणापिगतिमाह ॥ मोक्षश्चेति ॥ यथातार्किकमतेजगदीश्वरस्यसर्वदासुखाभावान्मुक्तत्वं । नतुदुःखध्वंसात् । नापिसु खात् । तथेतिभावः ॥ ५६२ ॥ अधुनाजडैक्येपिज्ञानत्वरूपचित्त्वमुपपादयति ॥ ज्ञानरूपमनस्तत्वेनेति ॥ यद्यस्मात् । सम

स्तस्य घटपटादेः । मानसंमनोरूपं । अस्माकंमतेमहतीक्षतिः। जडैक्येमहाक्षतिस्स्यात् । त्वद्वत् । जडेऽघटितघटकत्वशक्तेरस्मा
भिरनंगीकारात् मुक्तौचसकलमौक्तविषयद्रष्टृत्वांगीकाराच्चजडैक्यस्यवार्ताप्यस्मन्मतेनशोभतइतिभावः ॥ ५६३ ॥ तथापि एव
मपि। श्रुतां सर्वंब्रह्मेतिश्रुत्युक्तां । तवैकतां त्वदुपलक्षितजीवैकतां । महागुणापहर्त्रीं सर्वेश्वरत्वादिमहागुणहंत्रीं । नचेत् जीवा
भेदंत्यक्त्वाभगवद्भजनंनकरोषिचेत् । महाचोरं सर्वेश्वरत्वादिमहामहिमतस्करं ॥ ५६४ ॥ ५६५ ॥ किंचेदंपदवतीयंश्रुतिःइदं

तथापिचित्त्वमात्रस्यत्यागाद्धीतोजडैकतां ॥ श्रुतामपिजहासित्वंयर्हितर्हि
तवैकतां ॥ ५६४ ॥ महागुणापहर्त्रींत्वंत्यजभक्त्याभजाच्युतं ॥ नचेत्प्रभुर्महा
चोरंत्वामंधेतमसिक्षिपेत् ॥ ५६५ ॥ दृश्यमानमिदंसर्वंब्रह्मेत्यैक्यानुशासनात्
॥ जडस्यब्रह्मणैक्येपिकातेहानिर्निगद्यतां ॥ ५६६ ॥ स्वावेद्यत्वंस्वभातत्वं
जडैक्येशोभतेतरां ॥ सार्वज्ञ्यादिगुणानांचमिथ्यात्वंशोभतेतमां ॥ ५६७ ॥

पदार्थरूपजडैक्यएवयोज्या । नत्वनिदंपदार्थरूपचिदैक्ये इतिवदन्परमतेजडैक्यस्यैवयुक्तत्वेप्रागुक्तयुक्तीरभिनवयुक्तीश्चसंकलय
न्ननुपपत्तिंपरिहरति ॥ दृश्यमानमिति ॥ इदंपदस्यार्थकथनमिदं ॥ ५६६ ॥ हान्यभावमेवोपपादयति ॥ स्वावेद्यत्वमिति ॥
स्वभातत्वं स्वप्रकाशत्वं । जडैक्येपराभिलषितस्वावेद्यत्वस्यसार्वज्ञसर्वेश्वरत्वादिगुणमिथ्यात्वस्यचजडेसर्वैरप्यंगीकारेणविवादा

भावादितिभावः ॥ ५६७ ॥ अस्यब्रह्मणः । यतोवाइमानिभूतानीतिपंचम्या ॥ ५६८ ॥ ईश्वरस्यजडत्वेकर्तुरभावात्कथंजगत्सृ
ष्टिरित्यतआह ॥ सृष्टिस्त्विति ॥ व्यवहारेभट्टनयइतित्वयाप्यंगीकारात् । युक्त्यंतरंचाह ॥ मिथ्याभूतमिति ॥ चेतनत्वेपि
मिथ्याभूतमेवकर्तृत्वंब्रह्मणिपरोवक्ति । तच्चजडत्वेसुतरांशोभतइतिभावः ॥ ५६९ ॥ नन्वेवंब्रह्मणोजडैक्येचैतन्यैक्यंकथंघटनी
यमित्यतआह ॥ चित्त्वादिधर्मशून्यैरिति ॥ चित्त्वधर्मसहितस्यचेतनस्यैक्यंजहदजहल्लक्षणयासकलधर्मशून्यचिन्मात्रैक्यवा

रागादिदोषशून्यत्वमपियुक्ततरंभवेत् ॥ सुखत्वमनुभूतित्वंमनोवत्स्यान्निराकुलं ॥ जडोपादानता
प्यस्यपंचम्योक्तातिशोभते ॥ ५६८ ॥ सृष्टिस्त्वदृष्टतोस्त्वेषाभाट्टानामिवतेमते ॥ मिथ्याभूतंचकर्तृ
त्वंकस्यनस्यादुदीर्यतां ॥ ५६९॥ चित्त्वादिधर्मशून्यैस्तुचेतनैर्घटसन्निभैः ॥ अप्यैक्यंयुक्तमेवास्येत्यस्तु
सर्वंसमंजसं ॥५७०॥ यद्येवमपितत्रार्थस्तद्विनाऽसत्त्वमेवते ॥ चेतनेप्यस्त्वसावर्थोद्विधाक्लृप्तिस्तुतेमु
धा ॥५७१॥ गजोमिथ्यायथातद्वन्मिथ्याकिलपलायनं ॥ बंधोमिथ्याविमोक्षश्चमिथ्याकिलभवन्मते॥५७२॥

दीपरोपिनवक्ति । चित्त्वरहितस्तुघटप्रायएवेतिब्रह्मणोजडत्वेपीदृशचैतन्यैक्यमपिघटतएव । अतोनकाप्यनुपपत्तिरितिभावेनोक्तं
सर्वंसमंजसमस्त्विति ॥ ५७० ॥ उपसंहरति ॥ यद्येवमपीति ॥ एवमपि चेतनैक्यादपिजडैक्यस्ययुक्तियुक्तत्वेपि । तत्रजडे ।
अर्थः वाक्यार्थः । तद्ब्रह्म । मिथ्यात्वमित्यर्थः । असौ ब्रह्मविनाऽसत्त्वाख्यमिथ्यात्वरूपः । द्विधा एकत्रमिथ्यात्वमन्यत्रै
क्यमितिप्रकारद्वयेन ॥ ५७१ ॥ ननुचेतनानांमिथ्यात्वेमोक्षभोक्ताकस्यादित्याशंक्यतवमतेमास्त्वसावित्याह ॥गजोमिथ्येति॥

गजाद्भीत्यापलायनंकुर्वंतंपराचार्यंप्रतिगजोमिथ्यापलायनंकिमर्थंक्रियतइत्युक्तेपलायनमपिमिथ्येत्युत्तरंदत्तंकिल । एवंचबंधोमि
थ्याकिमर्थंतत्परिहारोद्योगइत्युक्तेसोपिमिथ्येत्येवपरस्यसिद्धांतोनुमीयते । अतःकस्यबंधःकस्यमोक्षो नकस्यापीतिभावः ॥५७२॥
अतः बंधमोक्षादिव्यवस्थाभावात् । युक्त्यंतरंचाह ॥ कर्तृताभोक्तृतोज्झितैरिति ॥ मोक्षसाधनकर्तृत्वंमिथ्याचेत् । मौक्त
सुखभोक्तृत्वंचमिथ्याचेत्मुक्तत्वंवार्तामात्रमितिभावः । उपलक्षणंचैतत् । चेतनांतरस्यमिथ्यात्वेपिब्रह्माख्यचेतनस्यविद्यमानत्वा
त्तस्यैवबद्धत्वंमुक्तत्वंचभवेत् । अतोलाघवात्ब्रह्मव्यतिरिक्तस्यसर्वस्यमिथ्यात्वेपरस्यनकाप्यनुपपत्तिरित्यपिद्रष्टव्यं । एवंचे द्ब्रह्म

अतःकिंचेतनैरेतैःकर्तृताभोक्तृतोज्झितैः ॥ सर्वत्रैक्यश्रुतीनांस्यादेवंचेदेकवाक्यता ॥ ५७३ ॥
साम्येपिश्रुतियुक्तीनांहान्यभावेपिकेवलं ॥ यदिस्वमतरक्षायैविवक्षेयमपेक्ष्यते ॥ ५७४ ॥
तर्ह्यन्यमतरक्षायैयुक्तिप्रत्यक्षसत्कृतं ॥ सर्वस्यतदधीनत्वमर्थंसावक्तिनाद्विधा ॥ ५७५ ॥
अतोवाक्यबलादैक्यमाशास्यंनक्वचित्त्वया ॥ ५७६ ॥ ॥

व्यतिरिक्तस्यचेतनाचेतनात्मकस्यसर्वस्यमिथ्यात्वंचेत् ॥ ५७३ ॥ केवलंस्वमतरक्षायाइतिसंबंधः । इयं जडमिथ्यात्वचेतनमा
त्रैक्यरूपा । अन्यमतरक्षायै तत्ववादमतरक्षायै । युक्तिप्रत्यक्षसत्कृतं मुख्यार्थबाधेसर्वत्रलक्षणादर्शनात्युक्तिसत्कृतं । वाक्या
र्थस्यप्रत्यक्षबाधाभावात् प्रत्युतभगवदधीनत्वस्यसर्वैरप्यनुभूयमानत्वाच्चप्रत्यक्षसत्कृतं । सा सर्वंखल्विदंब्रह्मेतिश्रुतिः । संभव
त्येकवाक्यत्वेवाक्यभेदोहिदूषणमितिवचनादितिभावः ॥ ५७४ ॥ ५७५ ॥ अतस्सर्वैक्यवाक्येष्वपिभगवदधीनत्वाख्यलघुभू



तार्थलाभात् ॥ ५७६ ॥ किंचत्वद्भाष्यमूलभूतसूत्रप्रक्रियाविरुद्धाचतवेयंप्रक्रियेत्याह ॥ विरुधेति ॥ प्रत्यक्षविरुद्धे वाक्यादापा
तप्रतीतेसर्वस्यब्रह्माद्वैतरूपार्थे । व्यासस्तु मृदब्रवीदापोब्रुवन्नित्यादिवाक्यानामापातप्रतीतप्रत्यक्षादिप्रमाणविरुद्धजडमृद्वचना
द्यर्थंत्यक्त्वा मृदाद्यभिमानिदेवताव्यपदेशेनार्थांतरं मृदभिमानिदेवतावचनरूपार्थंजगाविति संबंधः । सतुप्रत्यक्षविरुद्धार्थंत्यक्त्वा
तदविरुद्धाद्यर्थमेवाप्रसिद्धमपिवृत्त्यंतरमादायोक्तवान् । त्वंतुसर्वजनप्रसिद्धमपिवृत्त्यंतरमुपेक्ष्यप्रत्यक्षबाधितएववाक्यार्थेदुराग्रहं
कुरुषे । तस्मादुत्सूत्रभाष्यकारोभवानितिभावः ॥ ५७७ ॥ श्रुत्यभिप्रायविरुद्धंचजीवैक्यमित्याह ॥ श्रुतिरिति ॥ परात्मनः

विरुद्धापातलब्धेऽर्थेतवैवायंदुराग्रहः ॥ अभिमान्युपदेशेनव्यासस्त्वर्थांतरंजगौ ॥ ५७७ ॥
श्रुतिश्चतुर्मुखैक्यंचमन्यतेनपरात्मनः ॥ जीवैक्यंकिमुतेनैवमोचिताऽनेकसंकटा ॥ ५७८॥ हरि
श्चस्वगुणान्दिव्यान्नमुंचतिनतान्दिशेत् ॥ तपसाराधितोपीषत्कर्तृज्ञातृत्वदोह्यसौ ॥ ५७९ ॥

परमात्मनोनारायणस्य । जीवैक्यंनमन्यतइतिकिमु किमुवक्तव्यमित्यर्थः । सर्वजीवोत्तमचतुर्मुखैक्यमसहमानाश्रुतिर्नीचजीवै
क्यंनसहतइतिकिंवक्तव्यमितिभावः । कुतश्चतुर्मुखैक्यंनमन्यतइत्यतआह ॥ तेनेति ॥ तेननारायणेनमोचितानि अनेकसंकटा
नि मधुकैटभहयग्रीवतमआदिदैत्यकृतसंकटानियस्यास्सातथोक्ता । ब्रह्मणोमुखादेववेदापहारेमोचनसामर्थ्याभावाद्ब्रह्मातूष्णीमे
वस्थितः । हरिस्तुमहासामर्थ्ययुक्तत्वाद्धयग्रीवमत्स्याद्यवतारंकृत्वादैत्यान्हत्वास्वात्मानंमोचितवानितीममर्थंस्पष्टमनुभूतवतीश्रुति
रसमर्थंचतुर्मुखस्यातिसमर्थेननारायणेनैक्यंकथंमन्यतइतिभावः ॥ ५७८ ॥ हर्यभिप्रायविरुद्धंचजीवब्रह्मैक्यमित्याह ॥ हरि

श्चेति ॥ तान्गुणान् । कुतोनदिशेदित्यतआह ॥ तपसेति ॥ ईषत्कर्तृज्ञातृत्वदः ईषत्कर्तृत्वज्ञातृत्वदः । हिशब्देन पाद्मकल्पा ख्यदिवसेजगत्कर्तृत्वशक्तिविधुरस्यतत्करणकौशलज्ञानविधुरस्यस्वाधारकमलनालमूलभूतभगवज्ज्ञानविधुरस्यब्रह्मणस्तपसातुष्टो पिभगवांस्तस्मिन्नेकस्मिन्दिनएवकरणशक्तिंज्ञानशक्तिंचदत्तवान् । किमुतान्येषामितिपौराणिकप्रसिद्धिंसूचयति ॥ ५७९॥ तस्मा त्तपसापिस्वमहिम्नोन्यत्रादानात् । सः भगवान् । युक्त्यंतरंचाह ॥ यइति ॥ यःकृष्णरूपीनारायणः । पौंड्रकं सोहंभावाभिर

तस्मान्नात्मैक्यमन्येषांकेषामपिसदित्सति ॥ यःपौंड्रकवधंचक्रेयश्चेदिपमखंडयत् ॥५८०॥ सोहंभावा
त्किमन्योस्तिद्रोहःपौंड्रकराक्षसे ॥ सचेच्छास्त्रस्यतत्वार्थःकुतस्तंशिक्षयेत्प्रभुः ॥५८१॥ सत्यंप्रियंवचो
वाच्यंवाच्यंनासत्यमप्रियं ॥ यदच्युतोहमित्युच्चैरुच्चरन्पौंड्रकश्च्युतः ॥५८२॥ यथाभियैकवाक्यस्थंज
डैक्यंत्यज्यतेत्वया ॥ तथैवत्यजजीवैक्यंविरम्यव्यापृतिर्नचेत् ॥ ५८३ ॥ ॥ • ॥

तपौंड्रकवासुदेवाख्यंदैत्यं । चेदिपं लक्ष्मीरूपरुग्मिणीपाणिग्रहणकामुकशिशुपालं । सआत्मैक्यमन्येषांनदित्सतीतिपूर्वेणान्वयः ॥ ५८० ॥ पौंड्रकवधेपिकुतोनात्मैक्यंदिशतीत्यतोहेतुहेतुमद्भावंस्फोरयति ॥ सोहंभावादिति ॥ लक्ष्मीपतित्वाख्यभावस्योप लक्षणमेतत् ॥ ५८१ ॥ नीतिविरुद्धंचब्रह्मैक्यानुसंधानमित्याह ॥ सत्यमिति ॥ प्रियं प्रभुमनस्तोषकरंदासोहमित्यादिरूपं । यद्यस्मात् । च्युतःनष्टः । तस्मादितिपूर्वेणान्वयः ॥ ५८२ ॥ सकृच्छ्रुतैकवाक्यस्यार्थद्वयांगीकारेविरम्यव्यापाराख्यदोषोभवि

ष्यतीतिवदन्श्रुत्यर्थकथनमुपसंहरति ॥ ययेति ॥ यया प्रत्यक्षविरोधाख्यया ॥ ५८३ ॥ प्राग्भिन्नानांपदार्थानांपुनःपरस्परमभे दोयत्नशतेनापिलोकेनदृष्टोनापिकर्तुंशक्यइत्याह ॥ धौतवाससीति ॥ रजकमंदिरेधौतवाससिदत्तोन्नरसइतिसंबंधः । एकीकर्तुं वस्त्रेणसहाभिन्नंकर्तुं । प्रयत्नेन स्निग्धदारुमयखंडविशेषादिप्रयत्नेनपुनःपुनस्ताडितोप्यैकीभावपर्यंतंताडितोपि सम्यक्संश्लेषेजा तेसतिरजकेनैकीभूतइतिप्रोक्तोप्यन्नरसःपटेएकतामेतिकिं । नैवेति पुनरेकवारंप्रक्षालनेसत्यन्नरसस्यापगमाद्वस्त्रस्यानपगमाच्च ।

धौतवाससिदत्तोन्नरसोरजकमंदिरे ॥ एकीकर्तुंप्रयत्नेनताडितोपिपुनःपुनः ॥ ५८४ ॥
एकीभूतइतिप्रोक्तोप्येकतामेतिकिंपटे ॥ वाक्यंतद्बाधितार्थत्वात्सोपचारंप्रकल्प्यते
॥ ५८५ ॥ ग्रामेस्मिन्नेकएवत्वमित्युक्तेश्वापिकिंभवान् ॥ अतोन्यस्यान्यवस्तुत्वंवाक्यै
र्यत्नशतैरपि ॥ कर्तुंनशक्यंकिंवाचाकाचोनीलमणिर्भवेत् ॥५८६॥ ॥

एवंचप्रागनेकीभूतपदार्थस्यबहुप्रत्यत्नेप्यभेदाख्यैकीभावादर्शनात्अतिसांद्रतरस्संबंधविशेषएवप्राग्भिन्नानामैक्यमित्युच्यते । न त्वभेदएवेतिभावः । तत्तस्मात् । प्राग्भिन्नस्याभेदासंभवात् ॥ ५८४ ॥ ५८५ ॥ तदेवदर्शयति ॥ ग्रामइति ॥ हेमायावादिन्। अस्मिन्ग्रामेत्वमेकएवेत्युक्तेभवान्श्वापिकिंभवति । नभवत्येव । अतोदृष्टांतद्वयेपिभिन्नस्याभेदादर्शनात् । दृष्टांतांतरमप्याह ॥ किंवाचेति ॥ काचः नीलमृण्मयमणिविशेषः । वाचा नीलमणिरित्यज्ञानांवाचा । अज्ञैर्वाचानीलमणिसमुदायेनीलमणिरि

युक्ति-

॥ ९४ ॥

मल्लिका

भेदसौ०

त्युक्तोपीत्यर्थः । नीलमणिः नीलरत्नं । इतोप्यन्यस्यान्याभेदःकदापिनभवतीतिभावः ॥ ५८६ ॥ भ्रमरकीटकनिदर्शनेदीपा द्वीपांतरनिदर्शनेपिनैक्यमित्याह ॥ भ्रमरादिति ॥ भ्रमरात् मातृभूतभ्रमरात् । भ्रमरः पुत्रभूतभ्रमरः । द्वितायाः द्विरूपत्वस्य । कीटस्यभ्रमरतेवलोहस्यसुवर्णतापि लोहांतरजनितसुवर्णांतराभेदाभावेनेश्वरशक्त्यानित्यसिद्धसुवर्णांतराभेदाभावेनच बद्धस्यापियोग्यजीवस्यमुक्तौसत्यांप्राचीनकादाचित्कमुक्तजीवराशिभ्योनित्यमुक्तपरमात्मनाचाभेदाभावएवोपमा । नतुतदभेदे । नित्यसिद्धसुवर्णांतरसादृश्यमात्रस्यात्रापिदर्शनेननित्यमुक्तभगवत्सारूप्यमात्रस्यस्यात्कथंचिदुपमा । तथापिसहजसुवर्णाल्लोहजसुवर्णस्यवैजात्यवन्नित्यमुक्तभगवद्रूपान्मुक्तानांश्रीवत्सकौस्तुभाभावलक्षणवैजात्यमनवच्छिन्नानंदाद्यभावरूपवैजात्यंचस्यादेव ।

भ्रमराद्भ्रमरोन्यस्स्याद्दीपाद्दीपांतरंभवेत् ॥ तयोरैक्यंनतत्रापिद्वितायास्स्पष्टमीक्षणात् ॥ ५८७ ॥

अतोन्यस्यान्यात्मतानात्रदृष्टा । योलोहस्स्पर्शयोगेसतियत्सुवर्णीभवति । तस्यतुसुवर्णस्यसलोहउपादानं । स्पर्शयोगस्तुनिमित्तमात्रं । उपादानोपादेययोश्चप्रागप्यभेदएवेतिअन्यस्यान्यात्मतायांनेदमपिनिदर्शनं । किंचावस्थांतराख्यविकारवतिजडेकीटदेहादौभ्रमरदेहत्वाद्यवस्थांतरप्राप्तावपिनिर्विकारकीटचैतन्यस्यभ्रमरत्वदशायामप्यवस्थांतराख्यविकारादर्शनेनचैतन्यांतराभेदादर्शनेनचपरिच्छिन्नजीवचैतन्यानामपरिच्छिन्नब्रह्मचित्त्वदशा तदभेददशावा नत्रिदशायुषापिसाधयितुंशक्या । अतःपराभिलषितप्रमेयेनकिंचिन्निदर्शनं । ग्रंथकारणेतुयुक्तिदारिद्र्याभावात्जडदृष्टांतानामपिवैषम्यप्रदर्शनायप्रयत्नःकृतइतिज्ञातव्यं ॥ ५८७ ॥

॥ ३१३ ॥

तर्हिस्पर्शयोगेनलोहमात्रस्यसुवर्णत्ववज्ज्ञानेसतिजीवमात्रस्यमुक्तत्वंस्यादित्यपिशंकानकार्येत्याह ॥ अयोपीति ॥ एवंमुक्तियोग्यस्यजीवस्यैवसाधनानुष्ठानेपिमुक्तिस्स्यान्नतुयस्यकस्यापिजीवस्य । स्पर्शयोगेपिमृत्तिकायास्सुवर्णत्वाप्राप्तेरितिभावः ॥ तत्स्पर्शयोगेसतिलोहाज्जनितसुवर्णं स्वर्णांतराभिन्नं स्वर्णांतरेण प्राग्लोहांतरजनितसुवर्णांतरेण सहजजांबूनदादिसुवर्णेनचाभिन्नंकिं । नैव । तथाज्ञानेनमुक्तोपिज्ञानान्मुक्तजीवांतरेणस्वभावमुक्तपरमात्मनाचाभिन्नोनभवति । किंतुस्वयमपिमुक्तांतरवन्मुक्तोभवतीतिभावः । एतदेवाभिप्रेत्यप्राक्टीकायांशंकासमाधानंचेतिद्रष्टव्यं । ननुप्राक्सिद्धसुवर्णस्यपश्चात्सिद्धसुवर्णस्यचाग्निनैकरसीकरणे

अयोपिस्वर्णतायोग्यंस्वर्णंस्यान्नतुमृत्तिका ॥ तत्किंस्वर्णांतराभिन्नंविक्रियायांक्रयोधिकः ॥ ५८८ ॥
क्षीरांतस्स्थितनीरस्याप्यंतर्भेदोग्निनेक्ष्यते ॥ अदनानदनाभ्यांहियथाजीवेशयोर्हृदि ॥५८९॥

ऐक्यंस्यादित्यतआह ॥ विक्रियायामिति ॥ विक्रियायां द्रवीभावाख्यविकारे । क्रयः मौल्यं । प्राक्पंचवरहार्हखंडयोरेकरसतायांदशवरहार्हताजायते । उपलक्षणंचैतत् । भारोप्यधिकोजायते । अतस्तत्रातिसादृश्यादविवेकिभिरज्ञातोपिभेदोविवेकिनांमतेवर्ततएवेतिभावः ॥ ५८८ ॥ क्षीरांतस्स्थितनीरस्याप्यैक्यंनास्तीत्याह ॥ क्षीरेति ॥ अग्निना अग्निकृतपाकेनेत्यर्थः । क्षीरमिलितनीरस्याप्यग्निनासम्यक्पाकेसतिनाशोजायते । क्षीरंतुघनीभूतंतिष्ठत्येव । अतस्तयोर्नैक्यं । एवमेवपरमात्मनिनिलीनतयांतःप्रविष्टानांसायुज्यमुक्तानांमंददृष्टिभिःपृथगदर्शनेपिनैक्यमितिभावः । श्रुत्यास्मृत्याचातिनिश्चितत्वाद्दार्ष्टांतिकमेवतत्रदृष्टां

तीकरोति ॥ अदनानदनाभ्यामिति ॥ हृदि हृदयप्रदेशे । जीवांतरादृश्यतयानियंतुर्हरेरज्ञैस्स्पष्टमदृष्टोपिभेदःकर्मफलस्या
दनानदनाभ्यांजीवेश्वरगतविरुद्धधर्माभ्यांसवैरपिसम्यङ्निश्चीयते । तथेतिभावः ॥ ५८९ ॥ यथोक्तसमस्तलौकिकदृष्टांतेष्वैक्यश्रु
मविषयाणामेकतयावाक्यशतैर्निर्दिष्टानामपिविचार्यमाणेविरुद्धधर्मदर्शनात्परस्परंभेदएवास्ति । तथा जीवानांपरमात्मनश्चेत्याह
॥ एवमिति ॥ भिन्नस्वभावत्वमेवदर्शयितुमुक्तमपरिच्छिन्नचिद्रूपइत्यादि ॥ ५९० ॥ ५९१ ॥ ननुलोकेयथाकथंचिदस्तु वेदो

एवंभिन्नस्वभावानांजीवानांब्रह्मणीश्वरे ॥ अपरिच्छिन्नचिद्रूपेपरिच्छिन्नाणुरूपिणां
॥ ५९० ॥ अनादितोप्यनंतानामनंतक्लेशभोगिनां ॥ ऐक्यंवाक्यशतेनापिवक्तुंशक्यं
नकुत्रचित् ॥ ५९१ ॥ मुख्यार्थबाधेवाक्यानामन्योर्थःकथ्यतेबुधैः ॥ यजमानःप्रस्तरः
किमग्निर्माणवकोपिवा ॥ ५९२ ॥ किंयोषिदग्निरादित्योयूपोंधोमणिमीक्षते ॥ मृद
ब्रवीत्किमु(ग्रा)ग्लावाप्लवतेकिमपांचवाक् ॥ ५९३ ॥ ॥ ॥

क्तस्तुबाधितोप्यर्थःतथैवसंग्राह्यइतिमंदाशंकामुभयवादिसंप्रतिपन्नवैदिकानेकलाक्षणिकप्रयोगंप्रदर्श्यदूषयति ॥ मुख्यार्थबाधइ
ति ॥ वाक्यानां वैदिकवाक्यानां । बुधैः वेदार्थनिपुणैः । यजमानःप्रस्तरः । अग्निर्माणवकः । योषितमग्निंध्यायीत । आदि
त्योवैयूपः । अंधोमणिमविंदत् । मृदब्रवीत् । ग्रावाणःप्लवंते । आपोब्रुवन्निितिवाक्यानिमनसिनिधाययजमानःप्रस्तरःकिमित्या

दिकमुक्तमितिद्रष्टव्यं ॥ ५९२ ॥ ५९३ ॥ फलितमाह ॥ एतासामिति ॥ ५९४ ॥ विपक्षेबाधकमाह ॥ दृष्टार्थेति ॥ नचेत् बाधितवाक्यस्यान्योर्थोनचेत् । वाक्यस्यतदेकार्थकत्वेसिद्धेतेनप्रत्यक्षबाधनं । बाधकप्रत्यक्षाबाधेचमुख्यार्थपरित्यागेकारणाभावात्तूष्णींवृत्त्यंतराश्रयणस्यानुचितत्वाच्चवाक्यस्यतदेकार्थत्वमित्यन्योन्याश्रयइतिभावः ॥ ५९५ ॥ वाक्येनैवबाधकप्रत्यक्षबाधनंक्वाप्यदृष्टंचेत्याह ॥ गंगेति ॥ बाधेनबाधिताऽन्यार्थावास्यादितियोजना ॥ ५९६ ॥ दूषणांतरंचाह ॥ यदीति ॥

एतासाबाधितार्थानांयथान्योर्थोमतस्तव ॥ तथापिबाधितार्थैक्यवाक्येप्यन्योर्थईर्यतां ॥ ५९४ ॥
दृष्टार्थबाधोवाचास्यात्तस्यास्वार्थेदृढेसति ॥ बाधाभावेदृढोर्थस्स्यादित्यन्योन्याश्रयोनचेत्॥५९५॥
गंगायांघोषइत्युक्तिःकिंबाधंबाधतेस्वयं ॥ बाधेनबाधिता(वा)र्थास्यादन्यार्थेतिविचार्यतां ॥५९६॥
यद्यापातप्रतीतोर्थोबाधितोपिभवेद्गिरां ॥ तर्ह्याकाशादिशब्देनब्रह्ममीमांस्यतेकुतः ॥ ५९७ ॥
श्रुतबाधितसंत्यागेभाष्यंदुर्भाष्यमेवते ॥ श्रुतबाधितसंवादेभाष्यंदुर्भाष्यमेवते ॥५९८॥ ॥

आदिपदेनप्राणादिशब्दागृह्यंते । बाधितोप्यापातप्रतीतार्थोंगीकार्यश्चेत् आकाशस्तल्लिंगादित्याद्यधिकरणेष्वाकाशादिशब्दानांसर्वजनैरापाततःप्रतीतभूताकाशाद्यर्थकत्वंअनंतत्वादिबाधकवशात्त्यक्त्वाप्रसिद्धब्रह्मपरत्वकल्पनारूपामीमांसाभवद्भाष्यस्यापिमूलभूताव्यर्थास्यादितिभावः ॥ ५९७ ॥ एवंचोभयतःपाशारज्जुःपरस्यगलंबध्नातीत्याह ॥ श्रुतबाधितेति ॥ श्रुतबाधितसंत्यागे

श्रुतस्याऽपाततःश्रुत्यर्थतयाप्रतीतस्य बाधितस्यप्रत्यक्षादिप्रमाणबाधितस्यचार्थस्यसंत्यागे । ईदृशैक्यमिथ्यात्वादेरेवत्याज्यत्वप्रसं-
गेनतत्प्रतिपादकभाष्यंदुर्भाष्यंस्यादित्यर्थः । श्रुतबाधितसंवादे आपाततश्श्रुतस्यबाधितस्यचार्थस्यसंवादेंऽगीकारे । भाष्यं आ
काशाद्यधिकरणार्थप्रतिपादकभाष्यं । तत्रश्रुतबाधितसंत्यागस्यैवत्वयापिवाच्यत्वात् । एवंचोभयतःपाशारज्जुरितिभावः॥५९८॥
बहुपाशबद्धगलत्वेपरस्यमूकतैवस्यादित्याशयेनबह्वीरुभयतःपाशारज्जूराह ॥ यदीश्वरइत्यादिना ॥ सर्वमहदादिकं । भवेत्
उत्पद्येत । महासामर्थ्याभावेईश्वरस्यमहीमहीधरादिजगत्कर्तृत्वायोगात् । कर्तुरभावेचकार्यायोगादितिभावः । द्वितीययोजनि

यदीश्वरोसमर्थस्स्यात्कथंसर्वंजगद्भवेत् ॥ यदीश्वरस्समर्थस्स्यात्कथंसर्वंजगद्भवेत् ॥ ५९९ ॥
यदीश्वरोमहेशस्स्यादनीशत्वंकथंभजेत् ॥ यदीश्वरोप्यनीशस्स्यादनीशत्वंकथंभजेः ॥ ६०० ॥
यदिसत्याहरेर्धर्माःकथमैक्यंनबाधितं ॥ यद्यसत्याहरेर्धर्माःकथमैक्यंनबाधितं ॥ ६०१ ॥ ॥

कायां तर्हिसईश्वरः सर्वंब्रह्मादिसकलचेतनाचेतनात्मकंजगत् कथंभवेत् । तदभिन्नःकथंस्यादित्यर्थः । समर्थासमर्थयोश्चराजरा
ष्ट्रयोरिवैक्यायोगादितिभावः ॥ ५९९ ॥ महेशस्सर्वेश्वरः । अनीशत्वं नीचजीवत्वं । भजेत् अंगीकुर्यात् । उच्चपदवीपरित्यागे
ननीचपदवीस्वीकारस्यक्काप्यदर्शनादितिभावः । द्वितीययोजनिकायां । अनीश हेनीचजीव । त्वं त्वद्वदनीशंतंकथंभजेः ।
श्रवणमननाद्युपासनयापूजयेरित्यर्थः । समानयोगक्षेमयोस्सेव्यसेवकभावायोगादितिभावः ॥ ६०० ॥ ननुभगवन्निष्ठविरुद्धमहे
शत्वादिधर्माणांमिथ्यात्वादैक्यंघटतइत्याशंकानिरासायाह ॥ यदिसत्याइति ॥ धर्माः महासामर्थ्यमहेशत्वसार्वज्ञादयः । भग



वन्निष्ठविरुद्धधर्माणामबाधितत्वेऐक्यबाधावश्यंभावादितिभावः । द्वितीययोजनिकायां हरिधर्माणांबाधितत्वे सर्वज्ञस्यभाव
स्सार्वज्ञ्यमितिवत् एकस्यभावऐक्यमितिव्युत्पत्तेस्साम्येन तन्निष्ठजीवैक्यस्यापिहरिधर्मत्वाविशेषात्त्वद्रीत्याभावरूपधर्मनिषेधक
त्वाभिमतनिर्गुणश्रुतेरैक्येपिबाधकत्वाविशेषात्कथमैक्यंनबाधितमित्यर्थः ॥ ६०१ ॥ ननुनिर्गुणश्रुत्याभिन्नभावरूपधर्ममात्रनि
षेधेनैक्यस्यचाभेदांगीकारात्कथंबाधनमित्याशंक्यतर्हिसार्वज्ञादिधर्माणामपि । नेहनानास्तिकिंचन । एवंधर्मान्पृथक्पश्यन्नित्या
दिश्रुत्याऽभेदांगीकारात्समंसमाधानमित्याह ॥ अभेदादिति ॥ धर्मस्यसार्वज्ञादिधर्मस्य । जात्येकवचनं । अभिन्नधर्मबाधश्चे

अभेदान्नैक्यबाधश्चेत्कथंधर्मस्यबाधनं ॥ अभिन्नधर्मबाधश्चेत्कथंधर्मस्यबाधनं ॥ ६०२ ॥
अभेदान्नगुणाश्चेत्स्युःकथमैक्यंभवेत्तव ॥ अभेदेपिगुणाश्चेत्स्युःकथमैक्यंभवेत्तव॥६०३॥

त् । अभिन्नानामपिसार्वज्ञादिधर्माणांबाधोंगीक्रियतेचेत् । अत्रापितदेवोत्तरमित्याह ॥ कथंधर्मस्येति ॥ धर्मस्यसार्वज्ञादिधर्मस्यै
व । सर्ववाक्यंसावधारणमितिन्यायात्कथंबाधनं । किंतुत्वदैक्यस्यापिबाधनंस्यादित्यर्थः । अभिन्नधर्मबाधांगीकारेऽभिन्नधर्मत्वावि
शेषात्सार्वज्ञ्यवद्भवदैक्यंचबाधितंस्यादितिभावः । अथवाकथंधर्मस्यैवबाधनं । अभिन्नयोरेकबाधेऽपरबाधस्याप्यावश्यकत्वेनबाधि
तधर्माभिन्नधर्मिभूतब्रह्मणोपिबाधनंस्यादित्यर्थः॥६०२॥ अभेदा त्सार्वज्ञ्यादिगुणानांब्रह्माभेदांगीकारात् । गुणाःसार्वज्ञादिगुणाः
नस्युः नस्युरेव । अभेदांगीकारेएकतरमात्रपरिशेषावश्यंभावेनगुणानामभावएवस्यादितिचेदित्यर्थः । उत्तरमाह ॥ कथमै

क्यमिति ॥ अभेदेएकतरमात्रपरिशेषप्रसंगेनब्रह्मैवास्तिनापरमितिन्यायस्यब्रह्माभिन्नतयांगीकृतेत्वदैक्येपिसाम्येनतवैक्यंकथं भवेदित्यर्थः । अथवागुणाःगुणभूताःधर्मभूताइत्यर्थः । नस्युः । अभिन्नयोर्धर्मधर्मिभावःकथंस्यादित्यर्थः । तर्हितवैक्यम पिकथंस्यात् । हरेस्सार्वज्ञमितिवद्धरेरैक्यमित्यबाधितधर्मधर्मिभावव्यवहारस्योभयत्रसाम्याद्धर्मभूतमैक्यमपिकथंस्यादित्यर्थः । धर्मतयासार्वजनीनव्यवहारविषयस्यापिधर्मत्वाभावेरूपरसादीनामपिधर्मत्वाभावप्रसंगइतिभावः । उपलक्षणंचैतत् । अत्यंतंभे दाभावेऽभेदेपिधर्मधर्मिभावाख्यविशेषाभावेचघटकलशादिशब्दवद्ब्रह्मैक्यादिशब्दानामपिपर्यायत्वप्रसंगइत्यपिद्रष्टव्यं ॥६०३॥ पूर्वमैक्यस्यापिब्रह्मधर्मत्वेनतत्समानयोगक्षेमत्वान्नसार्वज्ञादिधर्माणांमिथ्यात्वं । एवंचविरुद्धधर्माक्रांतयोर्नकदाप्यैक्यमितिप्रति

श्रुत्युक्तंयदितत्वंस्यादद्वैतस्यनतत्वता ॥ श्रुत्युक्तंयद्यतत्वंस्यादद्वैतस्यनतत्वता ॥६०४॥

बंद्यासमर्थितं । इदानींश्रुतिसिद्धत्वाच्चनसार्वज्ञादिधर्ममिथ्यात्वं । अतश्चनैक्यमित्यपितत्प्रतिबंद्यैवसमर्थयते ॥ श्रुत्युक्त मिति ॥ श्रुत्युक्तंसर्वंयदितत्वंस्यात्तदाश्रुत्युक्तसार्वज्ञादीनामपितत्वतायाअवर्जनीयत्वात्विरुद्धधर्माक्रांतयोर्ब्रह्मजीवयोरद्वैतस्य नतत्वता । श्रुत्युक्तंसर्वंयद्यतत्वंस्यात्तदाऽद्वैतस्यापिश्रुत्युक्तत्वाविशेषाद्धर्मबाधकत्वेनाभिमतनिर्गुणश्रुतेरुक्तरीत्योभयत्रसाम्या च्छ्रुत्युक्तत्वाविशेषेणनिर्गुणत्वस्याप्यतत्वतासाम्याच्चाद्वैतस्यनतत्वतेतियोजना । श्रुत्युक्तंयत्किंचिद्यदितत्वंस्यात्तदाश्रुत्युक्तत्वा विशेषादुक्तरीत्याबाधकविशेषाभावाच्चसार्वज्ञादीनामपितत्वताऽपरिहारादद्वैतस्यनतत्वता । श्रुत्युक्तंयत्किंचिद्यद्यतत्वंस्यात्तदा

श्रुत्युक्तत्वाविशेषाद्बाधकत्वेनाभिमतस्योभयत्रसाम्याच्चाद्वैतस्यनतत्वतेतिवायोजना ॥ ६०४ ॥ इदानींपराभिमताज्ञानखंड
नायोभयतःपाशारज्जुमाह ॥ यदिज्ञानमिति ॥ हरेर्ज्ञानंयदिसत्यंस्यात्तदातज्ज्ञानस्यसर्वविषयत्वेनज्ञातेषुसर्वपदार्थेषुपुनरज्ञान
वान्न । यज्ज्ञातंनतदज्ञातमितिवदतात्वयापिज्ञातेऽज्ञानानंगीकारात् । हरौकिंचिज्ज्ञानसद्भावेतस्यसर्वविषयत्वापरिहारेणप्रथमप
क्षाबहिर्भावात् । ज्ञानमेवनास्तीतिद्वितीययोजनिकायांज्ञातं । प्रातीतिकं प्रतीतिसमसमयवर्तीतियावत् । यदज्ञानंतद्वानित्यर्थः ।
सर्वथाहरेर्ज्ञानाभावेऽज्ञानप्रतीतेरेवतस्मिन्नयोगादितिभावः ॥ ६०५ ॥ पूर्वं यज्ज्ञातंनतदज्ञातमितितत्प्रक्रियामनुरुध्योभयतःपा

यदिज्ञानंहरेस्सत्स्यान्नज्ञाताज्ञानवानसौ ॥ यदिज्ञानंहरेर्नस्यान्नज्ञाताज्ञानवानसौ ॥ ६०५ ॥
यदिज्ञानेपिचाज्ञानंनसंसारोहरेरयं ॥ यदिज्ञानेनचाज्ञानंनसंसारोहरेरयं ॥ ६०६ ॥ यदीश्व
रोजगद्व्यापीकथमैक्यंनबाधितं ॥ यदीश्वरोनतद्व्यापीकथमैक्यंनबाधितं ॥ ६०७ ॥ ॥

शारज्जुरुक्ता । इदानींतत्प्रक्रियाननुसरणेनाप्युभयतःपाशारज्जुमाह ॥ यदिज्ञानइति ॥ ज्ञानेसत्येवाज्ञानंयदिहरावंगीक्रियते ।
तर्ह्यनवच्छिन्नस्वस्वरूपानंदानुभवस्याप्यविरोधेनायमानंदानुभवादीनामविरोध्यज्ञानसंबंधः । हरेस्संसारोन । समव्याप्तप्रकृति
संबंधवत्जडसंबंधमात्रत्वाददोषइतिभावः । द्वितीययोजनिकायांतु सर्वज्ञेहरावज्ञानस्यैवायोगादज्ञानसंबंधएवनाभूदित्यर्थः
॥ ६०६ ॥ सिंहावलोकनन्यायेनपुनरप्यैक्यखंडनायोभयतःपाशारज्जुमाह ॥ यदीश्वरइति ॥ व्यापकस्यहरेरणुनाजीवेनैक्या

योगादितिभावः । द्वितीययोजनिकायांतु । अव्यापकस्यहरेर्वैकुंठैकदेशमात्रवर्तित्वेनवैकुंठातिदूरस्थितभूलोकगतस्यत्वदादेर्जीवस्यैक्यंकथंनबाधितं । अणूनामपिजीवानांपुंजीभूयजगद्व्यापित्वात्तैस्सर्वैःकथमैक्यंनबाधितं । वैकुंठापरभागस्थितमुक्तजीवैश्चकथमैक्यंनबाधितमितिभावः ॥ ६०७ ॥ ननुपक्षद्वयेप्येकेनैवदूषणेनकथंपरस्यपातइत्याशंकायांतस्यदौर्बल्यादस्माकंप्राबल्याच्चेति वक्तुंतदुपयुक्तांनीतिंसार्धपद्यद्वयेनाह ॥ ऋजुमार्गइति ॥ घट्टकुट्यांघट्टस्यविषमप्रदेशस्थितगेहे । शौल्किकगृहइत्यर्थः । अंध

ऋजुमार्गेगतोप्यंधोघट्टकुट्यांनिषीदति ॥ वक्रमार्गेगतोप्यंधोघट्टकुट्यांनिषीदति ॥ ६०८ ॥ गतेपिपृष्ठतोगत्वाकपोलेताडयेद्बली ॥ आगतस्यापिमंदस्यकपोलेताडयेद्बली ॥ पक्षद्वयेप्येकदोषप्रसंजनमपीदृशं ॥६०९॥ अल्पोल्पवित्तेप्यात्मानंवित्तेशंकिंनमन्यते ॥ सर्वज्ञब्रह्मतात्पज्ञेष्वप्येवंहिकुवादिनां ॥ ६१० ॥ अहंकारोहिलोकानांविकारोदुस्त्यजोमहान् ॥ अधमादधमोजीवोह्यधिकादधिकःकिल ॥६११॥

त्वदोषेणयथामार्गद्वयगमनेप्येकस्थलेबलात्प्रवेशस्तथापरस्ययुक्त्यंधतयापक्षद्वयेप्येकदूषणभागित्वमितिभावः । द्वितीयपद्येतुभावस्स्पष्टएव ॥ ६०८ ॥ ६०९ ॥ इदानींदुर्नीतिपरत्वादपिमायिमतमबद्धमित्याह ॥ अल्पइति ॥ अल्पः नीचः । खलइति यावत् । कुवादिनां मायावादिनां । अल्पज्ञेषु जीवेषु । सर्वज्ञब्रह्मतापि सर्वज्ञब्रह्मत्वभावनापि । एवंहि पूर्वोक्तलौकिकखलस्य भावनावद्धीतियोजना ॥ ६१० ॥ अधिकादधिकःउत्तमोत्तमः । यथाऽहंकारीस्वस्मिन्नविद्यमानमपिमहिमानंसभामध्येख्याप



यति । तथाऽधमाधमजीवस्योत्तमोत्तमनारायणत्वस्यख्यापनमपीतिभावः ॥ ६११ ॥ परदारान्परेषांअन्येषांदारान् । परेषामुत्तमानांगुर्वादीनांदारान्वा । स्वाधिकगुर्वादिपत्नीकामितायांतुगुरुतल्पगत्वाख्यमहापातकंकिल । एवंसतिस्वावरदारापेक्षापिपापंकिल । उत्तमोत्तमनारायणस्यपत्न्याःलक्ष्म्याः लक्ष्मीपतिरहंभविष्यामीतिकामनायांपंचमहापातकादप्यधिकपातकंभवत्येवेति किमुवक्तव्यं । अतएवतमोजुषामित्युक्तं । लोकमातृपदप्रयोगेणमातृगमनाख्यदोषश्चस्यादितिसूचितं ॥ ६१२ ॥ अहंभावः अहमेवदेवः अहमेवगुरुरितिगुरुदेवैक्यभावनेत्यर्थः । सः एवंभावयन् । देवद्विट् दैत्यः । रमोमाकांततोत्कंठा रमायास्सीतायाउ

सत्सुस्वदारेषुखलःपरदारानपेक्षते ॥ लोकमातृपतित्वेकिंनाशातेषांतमोजुषां ॥ ६१२ ॥
देवेगुरौचयस्याहंभावोदेवद्विडेवसः ॥ रमोमाकांततोत्कंठादशकंठस्यकेवलं ॥ ६१३ ॥
अनित्यदेहगेहादौनित्यताविभ्रमोनृणां ॥ दुःखिनस्स्वस्यनिर्दुःखब्रह्मभावभ्रमोपमः ॥६१४॥

मायाश्चकांतोभवामीत्युत्कंठा । रावणःरमारूपसीतायां उमायांचकामंकृतवानितिपौराणिकीप्रथा । तथारमाकांतोहंभवामीत्याशयादेवेऽहंभावोपिरावणस्यवारावणसदृशस्यासुरांतरस्यवा । उमाकांतोहंभवामीत्याशयाजगद्गुरुरूपरुद्रेप्यहंभावस्तस्यवा तत्सदृशस्यवाअन्यस्यस्यात् । अतःदेवेगुरौचाहंभाववान्देवद्विडेवेतिपूर्वेणसंबंधः ॥ ६१३ ॥ अनित्यइति ॥ यद्यस्यवह्न्यादिनाध्वंसाख्यविशेषदर्शनेपियथाऽभिमानवशाद्देहगेहादौनित्यताविभ्रमः । तथादुःखरूपविशेषदर्शनेपियानिर्दुःखब्रह्मत्वभाव

नामायावादिनां सापिदुराग्रहवशादेवेतिभावः ॥ ६१४ ॥ सद्यश्शास्तुः । तदानीमेवशिक्षाकर्तुस्सर्पाद्यादेस्सकाशात् । बिभेति । समयांतरेशिक्षाकर्तुःपापादेर्नबिभेति । तत्कुत्रदृष्टमित्यतउक्तं ॥ राजेति ॥ यस्मात्तदानीमेवशिरश्छेदनंकरोतीतिभीत्या राष्ट्रेकोपिराजाहमितिनब्रूते । देवस्तुक्षमाशीलस्तदानींशिरश्छेदनंनकरोति । तमोयातनातुसमयांतरइत्यभीतो देवोहमितिसर्वदाऽऽघोषयति । तस्मादुक्तंसत्यमितिभावः ॥ ६१५ ॥ दुष्टः धनकनकादिनातुष्टश्चेदहंकुरुते । क्लिष्टः दारिद्र्यादिनाक्लेशवान्क्लेशहरंधनिनंभजेत् । इदमपिमायावादिष्वेवदृष्टमितिभावेनोक्तं॥शिवेऽहंभावधीरिति॥ भोगे स्रक्चंदनवनितादिविषयभोगेसति

बिभेतिकुमतिस्सद्यश्शास्तुर्नसमयांतरे ॥ राजाहमितिनब्रूतेब्रूतेदेवोहमित्यहो ॥ ६१५ ॥
दुष्टोहंकुरुतेतुष्टःक्लिष्टःक्लेशहरंभजेत् ॥ शिवेहंभावधीर्भोगेरोगेमृत्युंजयार्चकः ॥ ६१६ ॥
वाचान्यज्जल्पतिस्वल्पःकर्मणान्यत्करोतिच ॥ योच्युतोहमितिब्रूतेस्नातुंगंगांसगच्छति
॥६१७॥ काणस्यचक्षुरेकत्रसाम्येप्यन्यत्रनापतेत्॥यज्वप्रस्तरतोत्त्यध्वादृष्टोनात्मैक्यवाक्पथः ॥६१८॥

शिवेऽहंभावधीः शिवोहमितिभावयन्नित्यर्थः । रोगे । उदरशूलादिरोगेसति मृत्युंजयार्चकः । यस्मिन्शिवेऽहंभावंकरोतितस्यैवमृत्युंजयस्यहोमादिनार्चकोभवतीत्यर्थः ॥ ६१६ ॥ स्वल्पः नीचः । वाचान्यज्जल्पति । कर्मणान्यत्करोतिच । सभायांबहुधनंदिशामीतिवदति । गृहंप्रत्यागतेत्वर्धचंद्रमेवददातीतिभावः । इदमपिसभायामच्युतोहमित्याघोष्यकर्मणागंगास्नानार्थंगच्छति । मायावादिन्येवदृष्टमितिभावेनोक्तं ॥ यइति ॥ ६१७ ॥ काणसाम्यमपिमायावादिष्वेवदृष्टमितिभावेनाह ॥ काणस्येति ॥

काणस्य एकचक्षुषः । एकत्र चक्षुर्भागे । साम्येपि समीपस्थत्वसाम्येपि । अन्यत्र नेत्राभावप्रदेशे । यस्मिन्भागेचक्षुरस्ति तत्रत्यघटादिकंपश्यति । यस्मिंश्चभागेचक्षुर्नास्ति तद्भागस्थंतत्समानयोगक्षेममपिघटादिकंनपश्यतीतिभावः । कथमिदंमायावा दिन्यस्तीत्यतउक्तं ॥ यज्वेति ॥ यज्वप्रस्तरतोक्त्यध्वा यजमानःप्रस्तरइत्युक्तेर्मार्गः । प्रत्यक्षबाधेनलक्षणांगीकाराख्योविद्वन्मा र्गइतियावत् । आत्मैक्यवाक्पथः आत्मनापरमात्मनैक्यंवदंतीयावाक्तत्त्वमस्यादिरूपा तस्याःपंथाः मुख्यार्थबाधेलक्षणांगीका राख्योविद्वन्मार्गोनदृष्टः । समानयोगक्षेमयोर्वाक्यद्वययोरेकत्रलक्षणामंगीकुर्वन्नन्यत्रचतामपश्यन्काणएवेतिभावः ॥ ६१८ ॥ कामी कामांधःपतिः । सतीः कुलजाःपत्नीरतिक्रम्यासत्यां दास्यांवेश्यायांवारतिर्यस्यसतथोक्तः । स्यात् । कामांधस्यपत्युस्सत्य

सतीरतिक्रम्यकामीपतिस्स्यादसतीरतिः ॥ यथैक्यश्रुतिमादत्ते भेदाद्यर्थश्रुतीस्त्यजन् ॥ ६१९ ॥
शब्दसाम्येपिनार्थैक्यंयत्राचित्रचरित्रता ॥ वृत्त्यंशवद्विजीवोंशोमत्स्याद्यंशास्तुमूलवत् ॥६२०॥

तिक्रमोसतीपरिग्रहश्चयुक्तएवेतिभावः । तत्कुत्रदृष्टमित्यतआह ॥ यथेति ॥ भेदाद्यर्थश्रुतीः भेदसर्वोत्तमत्वाद्यर्थप्रतिप्रादिकाः द्वासुपर्णेत्याद्याश्श्रुतीस्त्यजन्मायावादी यथैक्यश्रुतिं सर्वंखल्विदंब्रह्मेत्यादि श्रुतिमादत्ते तथेदमपिस्यादितिपूर्वेणान्वयः । प्रत्य क्षबाधादिदोषरहितायास्स्वार्थेऽर्थांतरेचावकाशाख्यदोषरहितायाश्चसहजस्त्रीसमानायाभेदश्रुतेःपरित्यागात् प्रत्यक्षबाधादिदो षदुष्टायाः स्वैरिणीवदर्थांतरेप्यवकाशंददत्याऐक्यश्रुतेःपरिग्रहाच्च कामांधोपमापिमायिनइतिभावः ॥ ६१९ ॥ अधुनाभिन्नां शानांभिन्नाभिन्नांशानामभिन्नांशानांचलोकवेदसिद्धत्वात् अंशांशिभावेपिनजीवब्रह्मणोरैक्यमित्याह ॥ शब्देति ॥ यत्र विष्णु

भेकादौ चित्रचरित्रता महासामर्थ्याल्पसामर्थ्याख्यविचित्रचरित्रता । तत्र शब्दसाम्येपि हर्यादिशब्दसाम्येपि अर्थैक्यं अर्थ भूतयोर्विष्णुभेकयोरेकप्रकारतान । तत्कुत्रदृष्टमित्यतउक्तं ॥ वृत्त्यंशवदिति ॥ वृत्तेरंशःवृत्त्यंशः । यथाबहूनामेकवृत्तिभोक्तृत्वेऽयमस्यांशोयमस्यांशइत्यंशांशिभावव्यवहारेपिनांशिनांभोक्तॄणांतैरंशैरैक्यं किंतुतत्स्वामित्वमेव । तथाजीवः अंशः परमात्मनोंशः अंशतयापुराणादिषुव्यवह्रियमाणोपिजीवःअंशिनःपरमात्मनःपृथगेव । केवलंभगवदधीनत्वाज्जगत्स्वामिकत्वाद्वातदंश इत्यर्थः । मत्स्याद्यंशास्तु मूलवत् । मूलरूपनारायणवत् । अंशपदसाम्येपिजीवानामल्पशक्तित्वाद्भिन्नांशत्वं मत्स्यादीनामंशिवदतिसमर्थत्वादभिन्नांशत्वमितिभावः । तस्माद्विचित्रचरित्रयोश्शब्दसाम्येपिनार्थैक्यमितिभावः ॥ ६२० ॥ मत्स्यादीनांस्वरूपांशत्वेजीवानांभिन्नांशत्वेचभागवतोक्तिचातुर्यमेवप्रमाणमितिभावेनाह ॥

**स्वरूपांशोस्तिभिन्नांशोप्यस्तिशब्दविशेषणात् ॥ एतेकिलस्वांशकलाजीवास्सर्वेकलाःकिल ॥६२१॥**

स्वरूपांशइति ॥ शब्दविशेषणात् । अंशवाचककलाशब्दस्यस्वांशपदेनविशेषणात् । उपलक्षणंचैतत् । तेनाविशेषणादित्यपिद्रष्टव्यं । एतेकिलस्वांशकलाइत्यनेन । एतेस्वांशकलाः पुंसःकृष्णस्तुभगवान्स्वयमितिवाक्यंसंगृह्णाति । स्वांशकला स्स्वरूपभूतांशकलाः । स्वः स्वरूपभूतश्चासावंशश्चेतिस्वांशपदस्य स्वरूपांशवाचकत्वात् । पुंसःपुरुषस्यनारायणस्य स्वांशकला स्स्वांशकलारूपाः एतेमत्स्याद्याः स्वयंभगवान्कृष्णः श्वेतद्वीपवासीनीलमेघश्यामलःपद्मनाभएव । तुशब्दएवार्थे । अस्मिन्पद्येमत्स्यादीनांस्वांशकलात्वेनव्यवहारात्स्वरूपांशत्वमितिभावः ।



जीवास्सर्वेकलाःकिलेत्यनेन कलास्सर्वेहरेरेवसप्रजापतयस्स्मृताइत्युत्तरवाक्यंसंगृह्णाति । अत्रचब्रह्मादिजीवानांप्रस्तुतंस्वांशकलात्वंविहायकलाइतिकेवलंस्वांशपदाविशेषितकलापदेनैवोक्तेर्नमत्स्यादिवत्स्वरूपांशत्वं किंतुभिन्नांशत्वमेव । अतश्शब्दविशेषणात्स्वरूपांशोस्ति भिन्नांशोप्यस्तीतिपूर्वेणसंबंधः ॥ ६२१ ॥ ननुजीवानांसूक्ष्मांशत्वादेवनमहासामर्थ्यंदृश्यतेनतुभिन्नांशत्वादिति शंकांनिराकरोति ॥ अल्पोपीति ॥ महतःमहापुरुषस्य स्वांशस्स्वरूपांशः सर्वत्रसद्गुणैस्सामर्थ्यादिगुणैःअल्पोन । स्वरूपांशत्वेऽणोरपिजीवस्यमहासामर्थ्यंदृश्येतैवेतिभावः । यद्यस्मात् लेशोपि अल्पोपि हृषीकेशकेशः उद्बबर्हात्मनःकेशावितिस्मृतेःपद्मना

**अल्पोपिमहतस्स्वांशोनाल्पस्सर्वत्रसद्गुणैः ॥ लेशोपियद्धृषीकेशकेशोलोकेशशासनः ॥ ६२२ ॥**
**भिन्नांशेतुतदीयत्वंभिन्नाभिन्नेऽर्धसाम्यता ॥ अभिन्नेसर्वसाम्यंस्याद्यथामत्स्यादिषुप्रभोः ॥६२३॥**

भकेशात्मकःकृष्णइत्यर्थः । स्थूलकायापेक्षयाएककेशस्याल्पत्वाल्लेशइत्युक्तं । लोकेशशासनः लोकेशानांब्रह्मादीनांशासनःआज्ञापकःस्वामीत्यर्थः । तस्मादणुरपिभगवतस्स्वरूपांशश्शक्त्यादिसद्गुणैरल्पोनेतिपूर्वेणान्वयः ॥ ६२२ ॥ अंशत्रैविध्यंसयुक्तिकमनुभावयति ॥ भिन्नांशइति ॥ तदीयत्वं तदधीनत्वं तत्स्वामिकत्वंचेत्यर्थः । पादोस्यविश्वाभूतानीतिश्रुतौजडाजडात्मकसकलप्रपंचस्यापिभगवदंशत्वकथना त्तस्यचतस्मिन्नेवसूक्ते मुखादिंद्रश्चाग्निश्च पद्भ्यांभूमिर्दिशश्श्रोत्रादित्यादिनाप्रलयकालेऽविद्यमानस्यसृष्टिकालेभगवतस्सकाशात्सृष्ट्यादिश्रवणेनजडत्वासर्वज्ञत्वाद्यनुभवेनभगवतो त्यंतभिन्नत्वावश्यंभावान्नखांगुल्यादिपादाकाराद

र्शनेनसाक्षात्पादत्वासंभवाच्चतदधीनत्वादिनैवांशत्वंवक्तव्यमितिभावः । भिन्नाभिन्ने तंतुपटादौ । अर्धसाम्यंयस्यसोर्धसाम्यस्त स्यभावोर्धसाम्यता । सर्वसाम्यं ज्ञानशक्त्यादिसकलगुणसाम्यं । मत्स्यादिषु मत्स्यकूर्माद्यवतारेषु ॥ ६२३ ॥ एतदेवविशिनष्टि ॥ जीवास्त्विति ॥ सार्वज्ञादेःप्रभावतः मूलरूपवदवताररूपेष्वपिसार्वज्ञादिसद्भावादितिभावः॥ ६२४ ॥ कस्तर्हिभिन्नाभिन्नां शः कथंचतस्यार्धसाम्यमित्यतस्तदुभयंविशदयति ॥ भिन्नाभिन्नाइति ॥ ते भिन्नाभिन्नांशाः । एकसत्त्वे तंतुसत्त्वे अन्यना

जीवास्तुब्रह्मभिन्नांशास्सार्वज्ञादेरभावतः ॥ मत्स्यादयस्स्वरूपांशास्सार्वज्ञादेःप्रभावतः ॥ ६२४ ॥
भिन्नाभिन्नाःपटाद्यंशास्तेजडेष्वेवनाजडे ॥ एकसत्त्वेन्यनाशस्यतद्धेतोस्सदसत्त्वतः ॥ ६२५ ॥ तंतुः
पटेनार्धसमोभेदाभेदस्ततस्तयोः ॥ अतस्त्रैविध्यमंशेषुदुर्वारमितिमेमतिः ॥ ६२६ ॥ नचेद्वैचित्र्यमे
तेषुनिर्निमित्तमिदंभवेत् ॥ मत्तोप्यकारणंकार्यंनवदेत्किमुशास्त्रकृत् ॥ ६२७ ॥ ॥

शस्य पटनाशस्य । तद्धेतोः सभेदोहेतुर्यस्यतस्य एकसत्वेऽन्यनाशस्य सदसत्त्वतः जडेषुसत्त्वादजडेष्वसत्त्वात्तेजडेष्वेव नाजड इतिसंबंधः ॥ ६२५ ॥ पृथिवीत्वमृत्त्वतंतुत्वजडत्वादिना । उपादानोपादेययोस्साम्यात् नाशादिनावैषम्याच्चतंतुःपटेनार्धसमइ तिभावः । ततः बहुशस्साम्यसद्भावान्नाशादिनावैषम्यात्तस्यचभेदासाधारणकार्यत्वाच्चेत्यर्थः । उपलक्षणंचैतत् । तंतुरेवपटइत्य भेदप्रत्यक्षाच्चेत्यपिज्ञेयं । तयोः तंतुपटयोः । अतः स्मृतियुक्तिसिद्धत्वात् ॥ ६२६ ॥ इदं बहुवैसादृश्यार्धसादृश्यसर्वसादृश्यरू

पं । निमित्ताभावेपिनैमित्तिकमस्तुकोदोषइत्यतआह ॥ मत्तोपीति ॥ ६२७ ॥ उक्तभिन्नाभिन्नांशस्योभयवादिसंप्रतिपन्नत्वा न्मत्स्यादिस्वरूपांशोजीवादिभिन्नांशेचाभेदंभेदमभेदोपयुक्तसर्वसाम्यंचश्रुत्यादर्शयति ॥ अदःपूर्णमिति ॥ पूर्णमदःपूर्णमिदंपूर्णा त्पूर्णमुदच्यतइतिश्रुतिंगृह्णाति । अदः मूलरूपं । इदमवताररूपं । उदच्यते उद्रिक्त मवतीर्णंभवतीत्यर्थः । एतान्मत्स्याद्यवता रान् । अन्यद्भिन्नंजगत् । एतस्मिन्नेतदाततमित्याहेतिसंबंधः । प्रमाणांतरेणाप्यंशद्वैविध्यंसाधयति ॥ विष्णूद्रिक्तेति ॥ सा विष्णोरुद्रिक्तांशोयोरामस्तस्यपादुकायाअधीनराज्येननिवृत्तइत्यत्रोक्तारामस्योद्रिक्तांशता ॥ ६२८ ॥ उद्रिक्तत्वं अनुद्रिक्तजी

अदःपूर्णमिदंपूर्णंपूर्णात्पूर्णमुदच्यते ॥ (विष्णू)इत्युद्रिक्तांशतारामस्योक्तासाकाविचार्यतां ॥६२८॥
उद्रिक्तत्वंस्वरूपत्वमनुद्रेकस्ततोपरः ॥ अतोंशयोर्द्वितैवोक्तास्पष्टंनामसहस्रके ॥ ६२९ ॥ बलज्ञान
सुखाद्यैश्चमत्स्याद्यंशाहरेस्समाः ॥ जीवांशास्त्वतथाभूताःकथंनांशेद्विरूपता ॥ ६३० ॥ ॥

वांशेभ्योतिशयितत्वं । स्वरूपत्वं स्वरूपांशत्वं । उक्तंरामांशस्योद्रिक्तत्वं मनुष्यावतारतयादृश्यमानसर्वप्रकारैर्मनुष्योपमत्वेन प्रकारांतरासंभवात्विष्णुस्वरूपांशत्वएवपर्यवस्यतीतिभावः । उद्रिक्तेतिविशेषणंददताऽनुद्रिक्तांशस्यापिसूचितत्वादनुद्रेकस्ततो परइत्युक्तं । ततः स्वरूपांशत्वात् । अपरः भिन्नांशत्वरूपः । अतः एकस्यसाक्षादुक्तत्वादपरस्यसूचितत्वाच्च । द्विता द्विप्रका रता । नामसहस्रके वासुदेवनामसहस्रके ॥ ६२९ ॥ युक्त्याप्यंशद्वैविध्यमुपपादयति ॥ बलेति ॥ अतथाभूताः । बलज्ञान

सुखाद्यैर्हरेरसमाः । अतःकथंनांशोद्रिक्तरूपतेतियोजना ॥ ६३० ॥ प्रागुद्रिक्तांशत्वंस्वरूपांशत्वं । अनुद्रिक्तांशत्वंचभिन्नांशत्वमित्युक्तं । तत्कुतइत्यतःउद्रेकानुद्रेकौविवेचयति ॥ बलज्ञानसुखोद्रेकादिति ॥ तेमत्स्याद्याः बलज्ञानादिपूर्णत्वमुद्रिक्तत्वं तदपूर्णत्वंचानुद्रिक्तत्वं । तच्चमत्स्यादीनांभगवद्रूपत्वेजीवानांचतद्भिन्नत्वएवसंभवति । तस्मादुद्रिक्तांशत्वंस्वरूपांशत्वं अनुद्रिक्तांशत्वंचभिन्नांशत्वमितिभावः ॥ ६३१ ॥ अतः अनुद्रिक्तांशत्वस्यभेदाविनाभूतत्वात् । अविनाभावमेवोपपादयति ॥ विरुद्धेति ॥ ६३२ ॥ स्पष्टंभिन्नांशसद्भावेप्रमाणमाह ॥ ममांशस्यैवेति ॥ ममांशस्यैवजीवस्येत्यनेन । एकस्यैवममांशस्यजीवस्यैवंमहा

**बलज्ञानसुखोद्रेकादुद्रिक्तांशास्तुतेहरेः ॥ स्वल्पज्ञानबलोजीवस्त्वनुद्रिक्तांशउच्यते ॥ ६३१ ॥ अतोतिभिन्नएवायंजीवाख्यांशोभवेद्ध्रुवं ॥ विरुद्धधर्माक्रांतत्वेभेदंकोनवदेद्बुधः ॥ ६३२ ॥ ममांशस्यैवजीवस्येत्युक्त्वाभागवतेहरिः ॥ सखायौसयुजौचेतिस्पष्टमाहपुनर्भिदां ॥ तस्माद्भिन्नांशवादोयंकस्यमोदायनेष्यते ॥ ६३३ ॥ ॥**

मते । बंधोस्याविद्ययानादिर्विद्ययाचतथेतरइतिपद्यं सखायौसयुजौचेत्यनेन सुपर्णावेतौसयुजौसखायौचेतिपद्यंचसंगृह्णाति । उभयोरपिभगवद्वाक्यत्वाद्धरिरित्युक्तं । एवकारसंबंधप्रदर्शनायममांशस्यैवेत्युक्तं । तेनचांशांशिभावंमुक्तावप्यनुवर्तमानंसूचयति । तच्चभेदस्यमुक्तिकालीनतयापारमार्थिकत्वसूचनार्थं । एवंचवाक्यद्वयार्थपर्यालोचनयानकथंजीवस्यभिन्नांशत्वसिद्धिरितिभावः ।



तस्मादंशांशिनोरेवस्पष्टंभेदकथनात् ॥ ६३३ ॥ निर्णायकसूत्रेणापिजीवाख्यांशस्यभेदंसाधयति ॥ नचेदिति ॥ नचेज्जीवाख्यांशोभिन्नोनचेत्सूत्रकृदिमंजीवंनानाव्यपदेशात्अंशंकथमसूत्रयत् । भेदव्यपदेशापरपर्यायंनानाव्यपदेशंहेतूकृत्यांशत्वंकथमसाधयदितिभावः । ननुअन्यथाचापिदाशकितवादित्वमधीयतएकइतिसूत्रशेषेअभेदव्यपदेशस्यापिसूत्रितत्वात्कथंनानाव्यपदेशादेवांशत्वमसाधयदितिचेत् । सत्यं । सोप्येकःपंडितइत्यादाविवान्यथाप्यधीयतइतिगर्हावाचकापिपदेनाभेदव्यपदेशस्योपचरितत्वसूचनात्मुख्याभेदस्यनांशत्वहेतुता । तथासतिमुख्याभेदप्रयुक्तपूर्णबलज्ञानादिनाभगवत्सादृश्यस्यमत्स्यादिष्विवजीवेष्वप्युप

**नचेदंशंकथंनानाव्यपदेशात्ससूत्रकृत् ॥ असूत्रयदिमंजीवंतत्संबंधात्तदंशता ॥ (सर्वस्यजीवजातस्य)सर्वेजीवायतस्तस्ययत्पुत्रोप्यंशउच्यते ॥ ६३४ ॥ मत्स्याद्यास्तुस्वरूपांशाबलज्ञानसुखादिभिः ॥ यन्मूलरूपसदृशास्सर्वेसर्वत्रसर्वदा ॥ ६३५ ॥ यद्यन्येपिस्वरूपांशाःकिंनस्युर्मत्स्यकूर्मवत् ॥ बलज्ञानसुखाद्यैश्चसदाविष्णूपमास्तदा ॥ ६३६ ॥ निर्विशेषंहितेब्रह्मकुतोंशेषुविचित्रता ॥ ६३७ ॥ ॥**

लंभप्रसंगात् । नचवाच्यंपूर्वोक्तहेतुसमुच्चायकोपिशब्दइति । समुच्चयस्यचशब्देनकृतत्वात्पुनरस्यापिसमुच्चायकत्वेपौनरुक्त्यात् । अतोस्वरससूचकमेवेदमपिपदं । एवंचराजाराष्ट्रमितिवत्तदधीनत्वादिब्रह्मसंबंधेनैवतदभेदव्यपदेशइतिसूत्रकृतोहृदयं । तदप्यन्योन्यनिरपेक्षतयाभिन्नयोर्घटपटयोरंशांशिभावव्यपदेशादर्शनेनभिन्नयोरेवजीवपरमयोरंशांशिभावघटनार्थं । तथाचब्रह्मभिन्नत्वेसतिब्रह्मसंबंधित्वाज्जीवोब्रह्मांशइतिसूत्रकृतोभिसंधिः । ग्रंथकृत्तुतत्संबंधव्यपदेशस्याप्यंततोभेदव्यपदेशत्वात्तमेवहेतूकृतवान् ।

एतदेवविशदयति ॥ तत्संबंधादित्यादिना नहींद्रस्यस्वरूपांशावालिपार्थादयोसमाइत्यंतेनग्रंथेन । व्याख्यातप्रायमिदं सर्वं ॥ ६३४ ॥ ६३५ ॥ ६३६ ॥६३७॥६३८॥ एवंचयुक्त्यापिजीवानांभिन्नांशत्वंसिद्धमित्याह ॥ अतइति ॥ अतः भगवत्स्व रूपांशानांमत्स्यादीनां इंद्राद्यंशानांवाल्यादीनांच बलज्ञानादिनावैसादृश्यादर्शनात् । व्यतिरेकेणव्यतिरेकव्याप्त्या । द्विविधा व्याप्तिःपूर्वमेवसमार्थिता ॥ ६३९ ॥ इदानीमंशांशिभावमंगीकुर्वतःपरस्यप्रक्रिययैवदूषणमाह ॥ अत्यंताभेदेति ॥ तवमते भेदाभेदप्रापकांशांशिभावांगीकारः जीवब्रह्मणोरत्यंताभेदप्रतिपादकशास्त्रभागविरोधीत्यर्थः । एकत्रांशरक्षणेऽपरत्रांशविनाशइ

अंशवैचित्र्यतस्सिद्धाभिदैकत्राभिदापरे ॥ नहींद्रस्यस्वरूपांशावालिपार्थादयोसमाः
॥ ६३८ ॥ अतोविष्णुसमज्ञानबलादीनामभावतः ॥ नजीवस्तत्स्वरूपांशोयथाजडमि
दंजगत् ॥ ६३९ ॥ अत्यंताभेदवादाख्यश्शास्त्रस्यांशोगतस्तव ॥ ६४० ॥ यदिमोक्षेभि
दानास्तिगतातेंशांशितातयोः ॥ यदिमोक्षेभिदाप्यस्तिभेदोभूत्परमार्थसन् ॥ ६४१ ॥

तिविनोदोक्तिश्च । अत्यंताभेदेह्युभयोरंशितैवस्यात् । एकस्यांशत्वमपरस्यांशित्वमित्येतद्वैलक्षण्यंतवमतेभेदसहिताभेदंविनानैव घटते । ममापिमतेभेदेनवाभेदप्रतिनिधिनाविशेषणवानिर्वाह्यः । केवलाभेदेंऽशांशित्वाख्यवैलक्षण्यस्यनिर्निमित्तत्वापातादिति भावः ॥ ६४० ॥ दोषांतरंचाह ॥ यदिमोक्षइति ॥ तयोर्जीवब्रह्मणोः । यदिचांशांशिभावरक्षणायभिदाप्यस्ति । महामोक्ष कालीनतयासभेदःब्रह्मवत्पारमार्थिकस्स्यात् । तथाचभेदोमिथ्याभेदत्वादित्यादिशास्त्रभागविरोधइतिभावः ॥ ६४१ ॥ ननुमु

क्तावंशांशिताभेदाभेदौविनैवघटतइत्यतआह ॥ भेदाभेदइति ॥ यद्यस्मात् । तत्सहचारिणी भेदसहचारिणी । निर्विशेषब्रह्म
वादइतिवदतासविशेषब्रह्मवादिनामस्माकंमत्स्यकूर्माद्यवतारेषुभेदाभावेपिभेदप्रतिनिधिनाविशेषेणांशांशिभावोघटतइतिसूचितं
॥ ६४२ ॥ ननुमुक्तावंशांशितैवनास्तीत्यतआह ॥ वियुक्ततंतुवदिति ॥ पटोत्पत्तेःप्राक्तत्रतत्रविभक्ततंतुवदित्यर्थः । पुनर्भवे
संसारे । तेमते तद्व्यक्तिः अंशांशिभावव्यक्तिः । संसारेदेहाख्योपाधिभिर्ब्रह्मणाविभक्तजीवानांतत्रतत्रस्थिततंतुवदंशत्वयोग्यतैव ।
मुक्तौतुदेहोपाध्यपगमेनब्रह्मचितिसम्यक्संमिश्रणात्आतानवितानात्मकतयापटाकारेणविकृततंतुवन्मुक्तावेवांशांशित्वव्यक्तिर्वक्त

भेदाभेदाविनाभूतासर्वत्रांशांशितातव ॥ निर्विशेषब्रह्मवादेयत्सातत्सहचारिणी ॥ ६४२ ॥
वियुक्ततंतुवद्देहैर्वियुक्तानांपुनर्भवे ॥ अंशांशित्वेयोग्यतातेतद्व्यक्तिस्त्वपुनर्भवे ॥ ६४३ ॥ अत
स्त्वद्गेहकलहादभूदत्यंतसंकटं ॥ जायावाकुपितागच्छेत्त्वंवाप्रव्रजितोभवेः ॥ ६४४ ॥ ॥

व्येतिभावः ॥ ६४३ ॥ अतःअंशांशिभावेनमुक्तावपिभेदप्राप्तेः । त्वद्गेहकलहात् तवगेहोपमशास्त्रेस्थितांशांशिभावात्यंताभेदाख्य
प्रमेययोःपरस्परविरोधादित्यर्थः । अत्यंतसंकटमेवान्यापदेशेनदर्शयति ॥ जायावेति ॥ यथागृहस्थस्यतवगेहेजायाद्वयकलहे
तवैकत्रचपक्षपातेजायावाकुपितागच्छेत्त्वंवाप्रव्रजितोभवेः । तथास्त्रीलिंगतयाजायोपमा अंशांशिताऽत्यंताभिन्नतावा एकत्रपक्ष
पातेऽपरावागच्छेत् । त्वंवातयोःकलहान्मतमिदंत्यक्त्वागच्छेः । विरुद्धयोरनयोःप्रमेययोस्सहस्थितिर्नघटतइतिभावः ॥६४४॥

उक्तमर्थंसाहित्यमुद्रयोपसंहरति ॥ तस्मादिति ॥ अप्रसाधनं प्रसाधनमलंकारस्तदभावमित्यर्थः ॥ ६४५ ॥ बहुजीववादिमतेय ज्जीवानांपरस्परैक्यंमायावादिनोच्यते तत्संसारेमोक्षेचतद्वीत्यैवनघटतइत्याह ॥ बहुजीवमतइति ॥ गतिभेदात् स्वर्गनरका दिगतिभेदात् । एकस्यपूर्वतोगमनमपरस्यपश्चिमतोगमनमित्यादिगतिभेदाद्वा ॥ ६४६ ॥ तद्विभागस्य तेषामुक्तविधयानानावि धजीवानांविभागस्य । तदैक्यस्य जीवानांपरस्परैक्यस्य । अधुनासंसारे ॥ ६४७ ॥ जीवानांमुक्तौब्रह्मण्यैक्येपिपरस्परैक्यंना

तस्मादंशांशिभावेनजीवाभेदप्रसाधनं ॥ अप्रसाधनमेवेत्थंकुर्याद्धेतुरयंमम ॥ ६४५ ॥
बहुजीवमतेजीवादेहेदेहेपृथक्पृथक् ॥ योनिभेदात्कर्मभेदाद्गतिभेदाच्चसंसृतौ ॥ ६४६ ॥
आमोक्षंतद्विभागस्यनव्यत्यासोस्तितेमते॥अतोमिथस्तदैक्यस्यनाधुनावसरस्तव॥६४७॥
मुक्तौतुब्रह्मणैक्यंस्यान्मिथस्त्वैक्यंकदावद ॥ अंशिनैक्येपितंतूनामंशानामेकतास्ति
किं ॥ ६४८ ॥ ब्रह्मैक्येजीवभावस्यैवाभावात्किंमिथोऽभिदा ॥ ६४९ ॥ ॥ ॥

स्तीत्यत्रदृष्टांतमाह ॥ अंशिनेति ॥ अंशिनापटेन ॥ ६४८ ॥ मुक्तौब्रह्मभावेपिजीवानांपरस्परैक्याभावेयुक्त्यंतरंचाह ॥ ब्रह्मै क्यइति ॥ मिथोऽभिदा जीवानांपरस्पराभेदः । यदाजीवभावोस्तिसंसारेतदानैक्यं । यदाचमोक्षेऐक्याशा तदाजीवभावए वन । तथाचजीवानांपरस्परैक्यंकदापिवक्तुंनशक्यमितिभावः । ननुसंसारेविद्यमानोपिजीवानांभेदःमिथ्येतिचेन्मुक्तौजीवानांपर



स्पराभेदेसतिहिसांसारिकभेदस्यमिथ्यात्वंस्यात् । उक्तविधयातदभावेचनिर्निमित्तंभेदमिथ्यात्वायोगात् । मुक्ताध्यंशानांजीवानामं शिनाब्रह्मणैक्येप्यंशानांपरस्परमैक्यस्यलोकेअदृष्टत्वात् अयुक्तत्वाच्च ॥ ६४९ ॥ अयुक्ततामेवोपपादयति ॥ तत्रतत्रेति ॥ यस्मिन् यस्मिन्नंशेऽज्ञानावरणेसतिस्वयंजीवभावंप्राप्तवान् । तत्रतत्र ॥ ६५० ॥ अत स्वस्वांशभागएवएकीभावात् । यदैक्यं

तत्रतत्रहितेतेंशास्स्वस्वाज्ञानक्षयेसति ॥ ब्रह्मत्वंयांतिसर्वेपिनत्वंशांतरभूमिषु ॥६५०॥
अतोंशानांसमस्तानांमिथस्त्वैक्यंकदावद॥विचार्यमाणेयन्नासीन्नभवेनापुनर्भवे॥६५१॥
अन्योन्यंसुखदुःखादेर्भोक्तृत्वंयोगिनोंशवत् ॥ हस्तपादाद्यंशवच्चवाक्यंनोचेद्वृथैवतत्
॥ ६५२ ॥ यद्यन्योन्यमभिन्नांशाजीवास्सर्वेपिसर्वदा ॥ तर्हिस्याज्जातिभेदस्यैवाभावा
त्सर्वसंकरः ॥ ६५३ ॥ स्नुषाचभार्याभार्याचमातागौश्श्वशुर्नाबुधः ॥ मत्तएवेतितच्छा
स्त्रंस्यादुन्मत्तस्यजल्पितं ॥ ६५४ ॥ गम्यागम्यविभागश्चस्वरूपैक्येकथंवद ॥ ६५५ ॥

तदैक्यंकदावदेतिपूर्वेणान्वयः ॥ ६५१ ॥ प्राग्जीवानांपरस्परैक्यमेवनघटतइत्युक्तं। अंगीकृत्यापिदूषणमाह ॥अन्योन्यमिति॥ योगिनस्सौभर्यादेः । तत् परस्परैक्यं । अन्योन्यंसुखदुःखभोगाभावेपरस्परैक्यंवार्तामात्रमितिभावः ॥ ६५२ ॥ जीवानांपरस्प रैक्येदूषणांतरंचाह ॥ यदीति ॥ ६५३ ॥ सर्वसंकरमेवदर्शयति ॥ स्नुषाचेत्यादिना ॥ तच्छास्त्रं मायावादिशास्त्रं । शास्त्रक

तुरेवमत्ताभिन्नत्वादितिभावः ॥ ६५४ ॥ ६५५ ॥ शास्यं शिक्ष्यं । अशास्यं रक्ष्यं ॥६५६॥ शंकते ॥ देहांतःकरणेति ॥ उत्त रमाह ॥ सुप्ताविति ॥ सर्वलयात्सर्वेषांपूर्वदेहांतःकरणादीनांलयात् । उपलक्षणंचैतत् । पुनःप्रबोधेदेहांतरोत्पत्तेरित्यपिद्रष्ट व्यं । तवमते ॥ ६५७ ॥ तस्यप्रबुद्धस्य । स्याच्चेत् प्रबुद्धस्यानुसंधानंस्याच्चेत् । सर्वस्य चंडालपशुपक्ष्यादेः । सर्वत्र सर्वदेहेषु । अनुसंधानं सुखदुःखाद्यनुसंधानं । उपलक्षणंचैतत् । प्रागुक्तोजातिसंकरश्चस्यादितिद्रष्टव्यं । देहभेदेनजातिभेदेमायावादिमते

शास्याशास्यविभागश्चवध्यघातकतातथा ॥ स्पृश्यास्पृश्यविभागादिसर्वैक्येनैवशोभते ॥ ६५६ ॥
देहांतःकरणादीनांभेदाभेदोयदीष्यते ॥ सुप्तौसर्वलयात्तर्हिप्रबुद्धोन्योभवेत्तव ॥ ६५७ ॥ अतःपूर्वा
नुसंधानंतस्यनस्याद्धिकिंचन ॥ स्याच्चेत्सर्वत्रसर्वस्याप्यनुसंधानमापतेत् ॥ ६५८ ॥ पूर्वजन्मनिचंडा
लोप्यन्यस्मिन्विप्रतामियात् ॥ अतोजातिविभेदोपिस्वरूपैक्येनभेदकृत् ॥ ६५९ ॥ ॥

सुप्तौपूर्वदेहविलयेनप्रबोधेदेहांतरोत्पत्त्याचपूर्वदेहकृतकार्याद्यनुसंधानं तद्देहेसतिकृतोपनयनादिसंस्कारश्चप्रबोधेदेहांतरवतोजीव स्यनस्यात् । अतस्स्वरूपाभेदेदेहभेदोकिंचित्करइतितत्रपरेणवक्तव्यं । एवंसतिस्वरूपैक्येदेहभेदस्याप्रयोजकत्वात्सर्वस्याप्यन्यो न्यमनुभूयमानसुखदुःखाद्यनुसंधानंपूर्वोक्तजातिसंकरश्चकथंनस्यादितिभावः ॥ ६५८ ॥ प्रकारांतेणापिस्वरूपैक्येदेहभेदोकिंचि त्करइत्याह ॥ पूर्वेति ॥ यथादेहभेदसद्भावेपिस्वरूपैक्यसत्त्वात्यएवपूर्वजन्मनिचंडालस्सएवापरजन्मनिविप्रइत्युच्यते । एवमे

कस्मिन्जन्मन्यपिस्वरूपैक्येसतिदेहभेदस्याकिंचित्करत्वाज्जातिभेदोपिनस्यात् । किंतुयएवचंडालस्सएवविप्रइतिव्यपदेशस्स्या दितिभावः ॥ ६५९ ॥ कर्मभेदाद्भेदोभवतीतिपक्षमपिपरिहरति ॥ देहभेदस्येति ॥ सर्वोपिदेहस्सर्वस्यचेत्तत्तद्देहकृतकर्मापिक थंनसर्वस्यस्यादितिभावः । तदेवदर्शयति ॥ देहोहीति ॥ मूलीभूतदेहभेदस्यैवव्यर्थीकरणाच्छिन्नमूलतरुरित्युक्तं । अयंकर्म भेदः ॥ ६६० ॥ युक्त्यंतरेणापिकर्मसांकर्यमुपपादयति ॥ शिष्येति ॥ तत्पुण्यं शिष्यपुण्यं । अपिसंबंधमात्रेण गुरुशिष्यभा

देहमात्रविभेदोयमकिंचित्करएवहि ॥ देहभेदस्यवैफल्येकर्मभेदेनकिंफलं ॥ देहोहिक
र्मणांमूलंछिन्नमूलतरुर्ह्ययं ॥ ६६० ॥ शिष्यपापंगुरोश्चस्यात्तत्पुण्यंचगुरोर्भवेत् ॥ अपि
संबंधमात्रेणस्वरूपैक्येकथंनतत् ॥ ६६१ ॥ स्वरूपैक्यंहिबलवद्बाह्यभेदोहिदुर्बलः ॥
ज्वलज्ज्वलनमध्यस्थतृणतूलविभेदवत् ॥ ६६२ ॥ ॥ ॥

वाद्यसंबंधमात्रेणापीत्यर्थः । तत्पुण्यपापादिकं । गुरुशिष्यभावादिसंबंधमात्रेणाप्येकस्यपापादिकमन्यस्यभवतीति शिष्यपापं गुरोरपीत्यादिशास्त्रेश्रूयते । एवंसतिस्वरूपैक्येएकस्यकर्मापरस्यकथंनस्यादितिभावः ॥ ६६१ ॥ तदेवोपपादयति ॥ स्वरूपैक्य मिति ॥ बलवत् पारमार्थिकत्वात् । बाह्यभेदः मिथ्याभूतभेदः । तत्रदृष्टांतमाह ॥ ज्वलज्ज्वलनेति ॥ यथाबाधितज्वलन मध्यस्थितबाध्यमानतृणतूलादिभेदस्याकिंचित्करत्वं । इदंतूलमिदंतृणमितितत्रयथाभेदेनव्यवहारोनजायते । तथेत्यर्थः । उप

लक्षणंचैतत् । अनारोपितशुक्तेःकार्यकारित्ववत्तत्रारोपितरजतस्यकार्यकारित्वादर्शनाच्चेत्यपिद्रष्टव्यं ॥ ६६२ ॥ उपाधिभेदसद्भा वेपिस्वरूपैक्यसामर्थ्येनकार्यसंकरानंगीकारेपरप्रक्रिययैवबाधकमाह ॥ **नचेदिति** ॥ नचे त्स्वरूपैक्यबलेनकार्यंनचेत् । अधि ष्ठानदृशा घटाद्यारोपाधिष्ठानचैतन्यज्ञानेन । जीवः देहाधिष्ठातादेवदत्तादिजीवः । मायावादिनोहितत्रतत्रारोपितघटादेस्तत्तद धिष्ठानचैतन्यमेवज्ञानं । तदभिन्नत्वाद्घटदेहाद्युपाधिभेदसद्भावेपितेनैवज्ञानेनदेवदत्तादेरपिज्ञानित्वमितिवदंति । उपाधिभेदेपि स्वरूपैक्यसामर्थ्येननानाजातिकृतकार्यसंकरोनचेत्अयमपिज्ञानसंकरोनस्यात् । अस्तिचायंज्ञानसंकरोमायिमते । अतस्समान

**नचेदधिष्ठानदृशाजीवोज्ञानीकथंवद ॥६६३ ॥तस्मात्पूर्वोक्तमार्गेणजीवचैतन्यमेवतत् ॥**
**भिन्नभिन्नमनंतंचभोगभेदायचेष्यते ॥ ६६४ ॥ भोक्तजीवविभेदेनभोगभेदोनचान्य**
**था ॥ नचेद्ग्रहग्रस्तदेहभवोभोगःकथंद्वयोः ॥ ६६५ ॥ ॥ ॥**

न्यायत्वात्जातिसंकरोप्यपरिहार्यइतिभावः ॥ ६६३ ॥ उपसंहरति ॥ **तस्मादिति** ॥ पूर्वोक्तमार्गेण योनिभेदादित्यादिपूर्वोक्त मार्गेण तज्जीवचैतन्यमेवेतिसंबंधः । यथायोन्यादिभेदाज्जीवानांभेदस्तथाभोगभेदायचजीवभेदोवक्तव्यइतिभावः ॥ ६६४ ॥ चैतन्यभेदेनैवभोगभेदोवक्तव्योनतुदेहभेदादिनेत्यत्रसर्वानुभवसिद्धंयुक्त्यंतरंचाह ॥ **नचेद्ग्रहग्रस्तेति** ॥ द्वयो र्ग्रहावेशेसतिग्र हस्यैवअन्यदादेहस्थितजीवस्येतिव्यवस्थाभेदेनद्वयोरित्यर्थः । अतःचैतन्यभेदनिमित्तएवभोगभेदोनदेहभेदनिमित्तइतिभावः



॥ ६६५ ॥ ननुपिशाचस्यपैशाचोदेहोस्तिकथंजीवभेदेनभोगइत्यतआह ॥ **यद्यपीति** ॥ स्वेनदेहेनभोक्तुमसामर्थ्यादेवहिपिशा चःपरदेहंप्रविश्यभुङ्क्ते । अतस्स्वदेहस्तत्रव्यर्थइत्यर्थः । कथंतर्हिभोगइत्यतआह ॥ **तस्मिन्देहइति** ॥ तस्मिन्देहेजीवदेहे । तदक्षेणजीवचक्षुरादींद्रियेण । तच्चित्तेनतज्जीवमनसा । तत्सुखंपिशाचेनानुभूयमानसुखंभवतीतियोजना । अन्यथातद्देहेनभो जनरमणादिकंव्यर्थंस्यात् । अतस्तद्देहेतदिंद्रियेणतच्चित्तेजातमेवतत्सुखमितिभावः ॥ ६६६ ॥ अस्त्वेवंप्रकृतेकिमित्यतआह ॥

**यद्यप्यस्तिपिशाचस्यदेहोन्यस्सतुनिष्फलः ॥ तस्मिन्देहेतदक्षेणतच्चित्तेनहितत्सुखं ॥ ६६६ ॥**
**अन्यदेहेऽन्यकरणैरन्यचित्तस्थितंसुखं ॥ पिशाचोह्यनुसंधत्तेसाक्षिणास्वेननापरः ॥ ६६७ ॥**
**पिशाचापगमेतज्जंसुखंजीवोत्तिनेतरः ॥ तद्द्रष्टृसाक्षिणोभेदात्सिद्धभोगविचित्रता ॥ ६६८ ॥**
**अतस्सर्वशरीरेषुभिद्यंतेभोगसाक्षिणः ॥ साक्षीचैतन्यमेवेतिजीवभेदस्तनौतनौ ॥ ६६९ ॥**
**भिन्नभिन्नस्वभावानांवाक्यमात्रेणनाभिदा ॥ किंसिंहोदेवदत्तःस्यादग्निर्माणवकोपिवा॥६७०॥**

**अन्यदेहइति** ॥ स्वेनसाक्षिणापिशाचः अन्यचित्तस्थितंसुखमनुसंधत्ते । अपरोजीवःनानुसंधत्तेहि ॥ ६६७ ॥ तज्जंदेहजं । इतरःपिशाचः । तत्तस्मात् । देहांतःकरणादेर्भेदाभावात् । भोगविचित्रतासिद्धेतिसंबंधः । एकदेहस्थितयोरुभयोर्मध्येतद्देहांतः करणजंसुखमेकोनुभवति । अपरोनानुभवतीत्येत द्भेदकांतराभावाच्चैतन्यभेदादेवेतिवक्तव्यमितिभावः ॥ ६६८ ॥ अत स्साक्षि भेदादेवभोगभेदस्यदृष्टत्वात् । साक्षीभोगसाक्षी । इतिहेतोः ॥ ६६९ ॥ नन्वेवंभिन्नतयाऽनुभूयमानानामपिजीवानामैक्यवा

क्यबलादभेदोंगीक्रियतइत्यतआह ॥ भिन्नभिन्नेति ॥ ६७० ॥ जीवानामपिभिन्नस्वभावत्वंदर्शयति ॥ हंत्येकइति ॥ एकः दरिद्राति । एकःधनी । एकःनिद्राति । अपरःजागर्तीतियोजना । तस्माद्बाधितार्थवाक्यमेवान्यथायोजनीयमितिभावः ॥६७१॥ त्वयाप्यैक्यवाक्यस्यबाधेसत्यर्थांतरमुच्यतइतिप्रागुक्तमेवार्थंस्मारयति ॥ सर्वमिति ॥ सर्वशब्दस्यबाधितजडादिवद्बाधितचेतनादपिसंकोचंकृत्वाऽबाधितभगवदवतारपरतैवकर्तव्येतिभावः ॥ ६७२ ॥ शब्दसाम्येपिबाधितमैक्यंनैवोच्यतइत्यत्रलौकिक

हंत्येकोहन्यतेचान्योहसत्येकःप्ररोदिति ॥ दरिद्रातिचनिद्रातिधनीजागर्तिचापरः
॥ ६७१ ॥ सर्वंब्रह्मेतिवाक्याद्धिकिंस्याद्घटपटाभिदा ॥ ६७२ ॥ गुरुरेवगुरुर्लोकेशि
ष्यश्शिष्यस्सकिंगुरुः ॥ यदितस्यापिगुरुतासापिशिष्यांतरंप्रति ॥६७३॥ महिषीम
हिषीकिंस्यादजःकिंस्यात्सपद्मजः ॥ बलिर्बलिर्द्धिडिंद्रःकिंस्वर्गतोनिर्गतोपिवा ॥६७४॥

दृष्टांतमाह ॥ गुरुरेवेति ॥ केनचिच्छिष्यंप्रत्ययमपिगुरुरित्युक्तेनहितस्यबाधितंस्वगुरुणैवैक्यंज्ञायते । किंत्वबाधिता स्वशिष्यांतरंप्रत्येवगुरुता ॥ ६७३ ॥ महिषीराज्ञी । महिषीशब्दमात्रेणमहिषी पशुविशेषःकिंनस्यादित्यर्थः । अजः छागः । स्व स्स्वर्गे गतः स्व स्स्वर्गान्निर्गतः । बलिद्धिडिंद्रः बलिःकिं । नस्यादितिसंबंधः । कदाचिदिंद्रोपिस्वर्गतोभवति । कदाचिद्बलिरपिस्वर्गतोभवति । कदाचिदुभावपिस्वर्गान्निर्गतौभवतः । एवंचस्वर्गतनिर्गतशब्दसाम्येनबलींद्रयोरैक्यंस्यात्किं । बलींद्रयोर्विरुद्धधर्म

स्फोरणायबलिजातिद्विडित्युक्तं । अनेनबृहजातिजीवकमलासनशब्दराशिष्विति ब्रह्मशब्दस्यजीवेष्वप्यनुशासनात् तदभिप्रायेण सर्वंखल्विदंब्रह्मेतिश्रुत्यासर्वमिदंजीवजातं ब्रह्मशब्दवाच्यमित्युक्तेपरब्रह्मणैक्यकथनमसंगतमित्युक्तंभवति ॥ ६७४ ॥ नीतिविरुद्धंचजीवानांपरस्परैक्यकथनमित्याह ॥ अस्तीति ॥ मातृमरणादौजातेसत्यन्योदुःखीकिल । स्वयंनकिल । तस्मात्संपत्तौसख्यवार्तावज्जीवानांपरस्परैक्यकथनमपिवार्तामात्रमितिभावः ॥ ६७५ ॥ अर्धेशिरसिजरेतिसंबंधः । कुतइत्यतआह ॥ देहीति ॥ सर्वजीवानामैक्यसाम्येपि देही यज्ञदत्तादिः देहांतरे देवदत्तादिदेहांतरे । नास्तिकिल तद्गतभोगादिकंनभुङ्क्तेइत्यर्थः । देहव्यूही

अस्तिसर्वोपिसंपत्तौविपत्तौतुनकश्चन ॥ अन्योन्यैक्यकथासख्येःदुःख्यन्योनस्वयंकिल ॥ ६७५ ॥
शिरस्यर्धेजरेत्यद्धापरदंधनकृद्वदेत् ॥ देहीदेहांतरेनास्तिदेहव्यूहीकिलास्तितत् ॥ ६७६ ॥ खलए
वखलोलोकेनासुरावैरिवैरिणः ॥ एकोजीवस्सनिद्रातितस्यस्वप्नःकिलाखिलं ॥ ६७७ ॥ ॥

कायव्यूहंसंपाद्यस्वप्रारब्धबहुतरकर्म सकृदेवभुंजानस्सौभर्यादि स्त देहांतरगतसुखं । ऐक्यसाम्येपिदेहव्यूहीदेहांतरसुखंभुङ्क्ते । अन्योदेहीदेहांतरसुखंनभुङ्क्तेइत्येत दर्धेशिरसिजरेतिधंधनवाक्यसमानमितिभावः ॥ ६७६ ॥ एवंबहुजीववादंनिराकृत्यैकजीववादंनिराकर्तुंदुर्नीतिविषयतयाप्रस्तावयति ॥ खलएवेति ॥ वैरिष्वेववैरिणःखलान । दुर्जनवत्खलानेत्यर्थः । दुर्जनेनकिमधिकमाचरितमित्यतआह ॥ एकइति ॥ एकएवेत्यर्थः । स एकजीवः । निद्राति सर्वदानिद्रांकरोतिकिल । तस्यएकजीवस्य ।

अखिलं चेतनाचेतनात्मकंजगत् । असुरोपिस्वविरोधिसुरानेवद्वेष्टि । नतुसकलंजगत् । अयंतुनिर्निमित्तं एकजीवव्यतिरिक्त सकलजगतस्स्वाप्नपदार्थसमतयाऽभावंवदन्जगत्क्षयकारित्वात्असुरादप्यधिकःखलइतिभावः ॥ ६७७ ॥ मोहिदेहिनःविषयलंपटाः । इदमप्येकजीववादेदृष्टमित्याह ॥ कालइति ॥ अयं सर्वैर्जनैरहस्त्वेनानुभूयमानः । सर्वेषामहरिदं निद्रितैकजीववादी निशांवक्ति । एवंचविद्वानप्यहर्निशेतिनजानातिचेत्कामीजनःकथंजानीयादितिभावः ॥ ६७८ ॥ मृगधूर्तकसदृशविवेकोप्येक जीववादिनोनास्तीत्याह ॥ करस्थेति ॥ आश्चर्यमरणंदृष्टंहस्तेदंडकपिंडकौ । ग्रामेकलकलोनास्तिशीघ्रबुद्धिःपलायनमितिपचंत

अहर्निशेतिचप्रायोनविदुर्मोहिदेहिनः ॥ कालःकिलायंसर्वोपिस्वप्नस्सुप्तस्यकस्यचित् ॥६७८॥
करस्थदंडपिंडाभ्यांशवबुद्धिंजहौशिवा ॥ चरंतस्संसरंतश्चशवाजीवाःकिलाखिलाः ॥६७९॥
हसतिस्वैरिणीस्वैरमपरांस्वैरिणीमहो ॥ किंननिर्जीवदेहात्मवादीचार्वाकहासकृत् ॥ ६८० ॥

त्रिकावचनात् करस्थदंडपिंडाभ्यां कलकलाभावेनच शववन्निश्चेष्टतयाशयानेपिपुरुषे शिवा शवबुद्धिंजहौ । चरंतः इतस्ततस्संचरंतः संसरंतः भोजनाभ्यंगस्नानपानादिसंसारव्यापारंकुर्वंतः अखिलाः जीवाः देवदत्तयज्ञदत्तादिसकलजीवाः शवाः जीव चैतन्यरहिततयाजीवापायेपतितशरीरवच्छवाःकिल । सर्वव्यापारदर्शनेपिशवबुद्धेरत्यागात्शिवातोप्यप्रबुद्धोयंवादीतिभावः ॥ ६७९ ॥हसतीतिवाक्योक्तदुर्नीतेरप्येकजीववाद्येवपात्रमित्याह ॥ किंनेति ॥ निर्जीवदेहात्मवादी जीवरहितदेहानामेवजीवत्वं



वदन्नेकजीववादी चार्वाकस्य निर्जीवदेहात्मवादिनःचार्वाकस्य हासकृत्नकिं । यथास्वैरिणी स्वैरिण्यंतरहासंकुर्वती । अकुशला एवंचार्वाकंदूषयन्नेकजीववादी जडदेहजीवभाववादस्यस्वमतेपिसद्भावादकुशलइतिभावः ॥ ६८० ॥ एकाशाखंडने । एकस्यपुरुषस्याभीप्सितफलप्रदानेनाशायाव्यर्थताकरणे । एवंसतिशुकोमुक्तोवामदेवोपिमुक्तइत्यादिवाक्यानामर्थवादतांवदत स्सकलमुमुक्षूणांमोक्षाभावप्रतिपादनेनाशांछिंदतएकजीववादिनोदोषस्सुतरामाघोषणीयइतिभावः ॥ ६८१ ॥ एकजीववादिमतेऽयमपि दोषइत्याह ॥ यजनेति ॥ अफलास्वाप्नीदशाकिलेतिसंबंधः । श्रुतिस्मृत्युक्तसकलसत्कर्मणांवैफल्यकथनादप्रामाणिकोयंवादइ

एकाशाखंडनेलोकादोषमाघोषयंत्यहो ॥ शुकाद्याःकिलसर्वेपिनमोक्ष्यंतेमुमुक्षवः ॥ ६८१ ॥
यजनाध्ययनादीनिमननश्रवणानिच ॥ दानस्नानादिकंसर्वंदशास्वाप्नीकिलाफला ॥ ६८२ ॥
ब्रह्मापिनिर्ममेसम्यक्तपसोद्बुद्धशुद्धदृक् ॥ अस्राक्षीन्निद्रितरुद्रयक्षसहस्राक्षादिकान्किल ॥६८३॥
अनादिकालतोयस्यनिद्रासकिलकल्पकः ॥ अनिद्रावेदवेदांतकर्तारःकिलकल्पिताः ॥ ६८४ ॥

तिभावः ॥ ६८२ ॥ पुराणप्रक्रियाविरुद्धंचेदंमतमित्याह ॥ ब्रह्मापीति ॥ निद्रितः एकजीववादिनोजीवः । भागवतपुराणेब्रह्मणापिशतवर्षंतपस्तप्त्वाहरेःप्रसादेनज्ञानदृष्टिंप्राप्यजगत्सृष्टमित्युच्यते । एकजीववादीतुनिद्रितोजीवएवब्रह्मविष्णुशिवेंद्रादिकं चेतनाचेतनात्मकंसकलजगत्सृजतीतिवक्ति । अतःपुराणप्रक्रियाविरुद्धत्वात्अप्रामाणिकोवादइतिभावः ॥ ६८३ ॥ इतश्चातिपरिहास्योयंवादइत्याह ॥ अनादीति ॥ यस्य एकजीवस्य । सः एकजीवः । अनिद्रास्सर्वज्ञा वेदवेदांतकर्तारः नारायणवेदव्या

सप्रभृतयः । इदंचांधश्चारयतिचक्षुष्मांश्चरति । मूकोवक्तिवाग्मीश्रृणोतीत्यादिवत्कथंनपरिहास्यमितिभावः ॥ ६८४ ॥ इदंत्वे
कजीववादमतंविद्वत्सभायांकथायोग्यमपिनेत्याह ॥ हृतार्यैरित्यादिना ॥ नःतेषांकथापिवृथेत्यन्वयः । कथमार्यमर्यादाछेदइ
त्यतउक्तं ॥ अचेतनइति ॥ अचेतनः जीवरहितः कल्पितजीवइत्यर्थः । गुरुः उपदेष्टा । वक्ति तत्वंनिरूपयति । निद्रितः
एकजीवः श्रृणुतेकिल ॥ ६८५ ॥ तदविद्यया शिष्याविद्यया । सः कल्पकःजीवः । अयं कल्प्योजीवः । अनेनकल्पकजीवस्य
भेदज्ञानित्वादुपदेष्टरिकल्प्येजीवेऐक्यज्ञानंनिर्निमित्तं । कल्पकाविद्ययाचेत्तस्यैवकुतोनाभूत् । अतइदंचयुक्तिविरुद्धमितिसूच

हृतार्यैरार्यमर्यादावृथातेषांकथापिनः ॥ अचेतनोगुरुर्वक्तिनिद्रितश्श्रृणुतेकिल ॥ ६८५ ॥
स्वशिष्याज्ञानजगुरोर्विद्यापितदविद्यया ॥ सभेदज्ञोयमैक्यज्ञोनंक्षत्येषसमोक्ष्यते ॥६८६॥
योचीक्लृपज्जगत्सर्वंशास्त्रस्तुतिसमन्वितं ॥ सजीवःकिलशिष्योभूत्कल्प्यःकोपिगुरुःकिल
॥६८७॥ यद्यैक्यमा प्रमा वक्तुस्तर्हिस्वप्नोपिनभ्रमः ॥ गौरवादप्रसिद्ध्यादेर्नस्वप्नस्याद्विरूपता ॥ ६८८ ॥

यति । एषःउपदेष्टानंक्ष्यति । स्वरूपतएवनाशंप्राप्स्यति । सः उपदेश्यःएकजीवः । अनेनगुरोर्नमोक्षः शिष्यस्यमोक्षइत्येतदपि
युक्तिविरुद्धमितिसूचयति । अचेतनस्यवक्तृत्वंनिद्रितस्यश्रोतृत्वं शिष्यस्यकल्पकत्वं । गुरोःकल्प्यत्वंच । विद्यायाअविद्याजात
त्वं सकलवेदशास्त्रादिप्रणेतुश्शिष्यत्वं तत्कल्प्यस्यगुरुत्वं गुरोरमोक्षः शिष्यस्यमोक्षश्चेत्यादिकंयोवक्ति सोयमुन्मत्तःकथमार्या
नुसारीतिभावः ॥ ६८६ ॥ ६८७ ॥ दोषांतरंचाह ॥ यदीति ॥ वक्तु स्स्वप्नेकल्पितस्यगुरोः ऐक्यमा ऐक्यज्ञानं । यदिप्रमा

तर्हिस्वप्नस्सर्वोपिभ्रमःभ्रमरूपोन । स्वप्नःसर्वोपिभ्रांतिरेवेतिमतंगतमितिभावः । ननुकश्चित्स्वप्नःप्रमारूपोप्यस्तीत्यतआह ॥
गौरवादिति ॥ आदिपदेनापसिद्धांतंप्रमाणाभावंचसंगृह्णाति ॥ ६८८ ॥ तर्हिस्वप्नोमास्तुजाग्रद्दशैवास्तुकोदोषइत्यतआह ॥
स्वप्नोनचेदिति ॥ जीवैक्यं जीवस्यैकता । तत्रैवस्वप्नएव । द्रष्टुर्जीवस्य । एकएवद्रष्टा । अन्यत्सर्वंतद्भ्रमकल्पितमितिस्वप्नएव
शंकितुंयोग्यं जाग्रदवस्थायांद्रष्टुरेकता सर्वस्याप्यनभिमतैवेतिभावः । उपलक्षणंचैतत् । स्वप्नादन्यत्रदृश्यमानबहुजीवानां एक
जीवकल्पितत्वासंभवेनबहुजीववादापातात् । स्वप्नादन्यत्रमहीमहीधरादेरेकजीवकृतत्वायोगाच्च ॥ ६८९ ॥ ननुजाग्रद्दशामेव

स्वप्नोनचेन्नजीवैक्यंतत्रैवद्रष्टुरेकता॥ ६८९॥ जाग्रद्दशैवस्वप्नस्यसाम्याद्यदिचतादृशी ॥
सर्वसाम्येसएवस्यात्किंचित्साम्येनकिंचन ॥ ६९० ॥ दशात्वसाम्येतेनैवस्वप्नोप्येतादृशो
भवेत् ॥ साध्येनसाम्यंनासिद्धेर्व्याप्येनसमतापिन ॥ ६९१ ॥ ॥ ॥

पक्षीकृत्यस्वप्नसमत्वेनहेतुनाद्रष्ट्रैक्यंसाध्यतइत्यतआह ॥ जाग्रद्दशैवेति ॥ तादृशी स्वप्नवद्द्रष्टुरेकत्ववती । सर्वसाम्यंवाकिंचि
त्साम्यंवेतिहेतुंविकल्प्यदूषयति ॥ सर्वेति ॥ सएवस्वप्नएव । तथाचहेतोरसिद्धिस्स्यादितिभावः । किंचित्साम्यमपि वस्तुत्वा
दिनासाम्यंवा ऽवस्थात्वेनवा साध्येन तद्व्याप्येनवेति विकल्प्यक्रमेणदूषयति ॥ किंचित्साम्यइति ॥ किंचनकिमपिन । किंचि
त्स्वप्नसाम्येनद्रष्ट्रैक्यंसाधयितुंनशक्यते । तथासतिद्रव्यत्वेनघटवत्पटस्यापिजलाहरणोपयोगित्वसाधनप्रसंगइतिभावः ॥ ६९० ॥
तेनैव दशात्वेनैव । एतादृशः जाग्रदवस्थावद्द्रष्टुरनेकत्ववान् । साध्येन द्रष्टुरेकत्वेन । असिद्धेः प्रतिवादिनःजाग्रदवस्थायांद्रष्टु

रेकत्वासिद्ध्याऽन्यतरासिद्धेः । व्याप्त्येनसमताप्यसिद्धेर्नेतिसंबंधः ॥ ६९१ ॥ विपक्षेबाधकमाह ॥ बाह्येति ॥ अत्र । जाग्रद
वस्थायां । नचेत् द्रष्टुरेकत्वानुमानंनत्यजसिचेत् स्वप्नवज्जाग्रदवस्थायांद्रष्टुरेकत्वंसाध्यतेचेत् । समानन्यायत्वात्बाह्याक्षोप
रमोपिसाध्यस्स्यात् । बाधान्नचेत् तदपिनस्यादितिभावः । सःबाह्याक्षोपरमः । अतएव जाग्रत्त्वादेव ॥६९२॥ सोपि बाह्या
क्षोपरमोपि । अंगीक्रियतइत्यर्थः । अस्यैकजीवस्य । प्रबोद्धा ऐक्यप्रमावान् । ततःप्रबोद्धुरभावात् । बाह्याक्षोपरमांगीकारेत

**बाह्याक्षोपरमश्चात्रनचेत्किंनानुमीयते ॥ जाग्रत्त्वात्सनचेदेकजीवताप्यतएवन ॥ ६९२ ॥**
**यदिसोपितदाश्रोत्राभावान्नश्रोतृतास्यहि ॥ श्रोतानचेन्नप्रबोद्धाततश्शास्त्रमनर्थकं ॥६९३॥**
**किंचस्वप्नस्यसर्वस्यनद्रष्टैकोगृहेगृहे ॥ तद्वत्तद्द्रष्टृबाहुल्यस्यैवासेःक्वचतेमतं ॥ ६९४ ॥ नसं**
**तीमेयदिस्वप्नानिदर्शनमदर्शनं ॥ प्राप्नोतितेऽनुमानस्यनादृष्टोदृष्टखंडने ॥ ६९५ ॥ ॥**

न्मध्यपतितश्रोत्रस्याप्यभावप्रसंगेनैकजीवस्यश्रवणजन्यापरोक्षज्ञानस्याप्यभावान्मोक्षाभावप्रसंगइतिभावः ॥६९३ ॥ दूषणांतरं
चाह ॥ किंचेति ॥ तद्वत् स्वप्नवत् । तेमतं द्रष्ट्रैक्यमतं । स्वप्नसाम्येनहिपरेणद्रष्ट्रैक्यंसिषाधयिषितं । स्वप्नद्रष्टारश्चगृहेगृहेबहवो
दृश्यंते । अतःस्वप्नसाम्येनापिद्रष्टृबाहुल्यस्यैवसिद्धेःएकजीवमतंगतमितिभावः ॥ ६९४ ॥ पराभिप्रायमुद्भाव्यदूषयति ॥ नेति ॥
एकजीवस्यस्वतएवमुख्यस्स्वप्नः । इमेतुस्वप्नाःतदीयस्वाप्नस्वप्नत्वात्स्वप्नाएवनभवंति । अतस्स्वप्नेद्रष्टृबाहुल्यंकुत्रसिद्धमितियदि



मन्यसे तदासन्यसेर्जाग्रद्दशात्वपक्षं । किंचतेऽनुमानस्य । विमतोजगत्स्वप्नःएकजीववान् । स्वप्नत्वात्संप्रतिपन्नस्वप्नवदित्यनुमा
नस्य । निदर्शनंदृष्टांतः अदर्शनंलोपंप्राप्नोतीतियोजना । सर्वजनसंप्रतिपन्नस्वप्नानांसर्वथाऽस्वप्नत्वेऽनुमानस्यदृष्टांतएवनास्ति ।
स्वप्नत्वेचतद्वत् । द्रष्टृबाहुल्यसिद्धिरित्युभयतःपाशारज्जुरितिभावः । दूषणांतरंचाह ॥ नादृष्टइति ॥ दृष्टखंडनेदृष्टानांसर्वज
नसंप्रतिपन्नानामेषांस्वप्नानांखंडने । अदृष्टस्सर्वैरननुभूयमानस्तवैकजीवस्वप्नः न नसिद्ध्येत् । ततश्चतवानुमानस्याऽश्रयासिद्धि
रपिस्यादितिभावः ॥६९५॥ शंकते ॥ यदीति ॥ एकजीववादिमतेदेहांतरेचेतनांतराभावात्गृहेगृहेदृश्यमानस्वप्नानामपिसएव

**यद्येतेषामपिद्रष्टासएवेतिमतंतव ॥ नतन्ममममतंतेनस्वदर्शननिदर्शनं ॥ ६९६ ॥**
**संध्येसृष्टिरितिप्रोक्तेस्वाप्नव्याघ्रगजादयः ॥ सर्वेसत्याश्चेतनाश्चतत्स्वप्नोनल्पजीववान् ॥६९७॥**

एकजीवएवद्रष्टेतिमतं । तत् सर्वस्वप्नानांत्वदभिमतैकजीवद्रष्टृकत्वं । तेन ममासंमतत्वेन । स्वदर्शननिदर्शनं स्वदर्शनेनस्वसिद्धां
तेनैवनिदर्शनंदृष्टांतोनतुमद्दर्शनरीत्या । मयातेषांतेषांस्वप्नानांतत्तज्जीवद्रष्टृकत्वांगीकारात् । ततश्चमद्रीत्यादृष्टांतस्यसाध्यवैकल्य
मितिभावः ॥६९६॥ प्रकारांतरेणाप्येकजीववादेदृष्टांताभावमुपपादयति ॥ संध्यइति ॥ संध्ये सुषुप्तिजाग्रदवस्थयोस्संधौविद्य
मानेस्वप्नइत्यर्थः । संध्येसृष्टिराहहीतिसूत्रे अथरथान्रथयोगान्पथस्सृजतइतिसूत्रखंडोदितश्रुत्यास्वाप्नपदार्थानांसृष्टिप्रोक्तेरित्य
र्थः । चेतनाः प्रत्येकंचेतनभरिताः । यथाजाग्रदवस्थायांसृष्टागजादयश्चेतनास्तथास्वाप्नगजादयोपिभगवत्सृष्टत्वाच्चेतनाएव ।

इयांस्तुविशेषः । एतेस्वस्वकारणजनिताबहुकालावस्थायिनश्च । स्वाप्नास्तुवासनोपादानाः आशुतरविनाशिनश्चेति । त त्तस्मात् स्वाप्नगजादीनामपिप्रत्येकंचेतनात्मकत्वात् । अनल्पजीववान् बहुजीववान् ॥ ६९७ ॥ अतः बहुजीववत्त्वात् । प्रतिवादीत त्ववादी । तत्तस्मात्स्वप्नस्यबहुजीववत्त्वात् । अस्यपरानुमानस्य । साधनं स्वप्नत्वादितिसाधनं । असाधनं पराभिलषितैकजी ववत्त्वाख्यसाध्यासाधनं । किंतुबहुजीववत्त्वस्यैवसाधनमभूदित्यर्थः ॥ ६९८ ॥ दूषणांतरंचाह ॥ तस्येति ॥ तस्यएकजीवस्य । अयं गृहेगृहेपरिदृश्यमानः । तर्हिजागरणं पुरुषांतरेपरिदृश्यमानंजागरणंकस्य । तच्च जागरणंच । तस्य स्वप्नद्रष्टुरेकजीवस्य ।

अतस्तत्रैकजीवत्वंप्रतिवादीनमन्यते ॥ तत्सपक्षोविपक्षोस्यसाधनंचाप्यसाधनं ॥ ६९८ ॥
तस्यैवायंयदिस्वप्नःकस्यजागरणंवद ॥ तच्चतस्यैवचेदेतेविरुद्धेकथमेकदा ॥ ६९९ ॥ स्वाप्नजा
गरितावस्थास्वाप्नस्वप्नविरोधिनी ॥ अस्वाप्नौतौचनैकत्रेत्यविवादंद्विवादिनां ॥ ७०० ॥ ॥

एते स्वप्नजागरणे । एकस्यैवपुंसःयदास्वप्नःतदैवतस्यजागरणंचविरुद्धमितिभावः ॥ ६९९ ॥ स्वप्नजागरणयोर्विरोधमुपपादय ति ॥ स्वाप्नेति ॥ स्वाप्नजागरितावस्था स्वप्नेइतस्ततोगच्छामीतियाजागरितावस्था सेत्यर्थः । स्वाप्नस्वप्नविरोधिनी स्वप्नेविद्यमा नोयस्स्वप्नस्तस्यविरोधिनी । स्वाप्नजागरणदशायांस्वाप्नस्स्वप्नोपिन स्वाप्नस्वप्नदशायांचनस्वाप्नजागरणं । अतस्तत्रापितयोर्विरो धएव । अस्वाप्नौ । जाग्रद्दशायामेवविद्यमानंयज्जागरणं निद्राकालेविद्यमानोयस्स्वप्न स्तावस्वाप्नौ । तौजागरणस्वप्नौ । अतस्स्वा

म्नावस्वाम्नौचजागरणस्वम्नौनैकस्यैकदासंभवतः। एवंचस्वम्नद्रष्टुरेकजीवस्यगृहेगृहेऽनुभूयमानस्वाम्नःस्वम्नः स्वाम्नजागरणंचकथमेक दैवभवतइतिभावः ॥ ७०० ॥ दोषांतरंचाह ॥ यदीति ॥ तस्य एकजीवस्य । अन्यस्यकस्यचिन्न । यत्रक्वचिद्विद्यमानंजाग रणंस्वम्नादिकंचतस्यैवनान्यस्येत्यर्थः । तर्हिस्वयमेवस्वोपदेष्टेतिआयासभूःतवाऽयादितियोजना । जाग्रदवस्थापन्नोहिगुरुस्तमे कजीवंबोधयेत् । जाग्रदवस्थासर्वापितस्यैवचेत्स्वयमेवस्वस्यबोधकइतिप्राप्तं । तथाचात्माश्रयप्रसंगः । अतःसर्वथाजागरणंतत्स मानाधिकरणस्वप्नश्चान्यस्यैवेतिवक्तव्यं । एवंचस्वम्नेप्रागुक्तबहुद्रष्टृकत्वमपरिहार्यमेवेतिभावः ॥ ७०१ ॥ दूषणांतरंसूचयन्नुभय

यदिजाग्रदवस्थादितस्यनान्यस्यकस्यचित् ॥ स्वयमेवस्वोपदेष्टेत्यायादायासभूस्तव ॥ ७०१ ॥
अतस्स्वम्नेनचेज्जीवोनैकजीवमतंतव ॥ स्वम्नेषुसंतिचेज्जीवानैकजीवमतंतव ॥ ७०२ ॥ यदिदे
हेषुजीवास्स्युर्नैकजीवमतंतव ॥ यदिदेहेषुतेनस्युर्नैकजीवमतंतव ॥ ७०३ ॥ ॥

तःपाशरज्ज्वाबध्नाति ॥ अतइति ॥ अतः जागरणस्यस्वम्नसमानकालीनस्यत्वदभिलषितैकजीवद्रष्टृकत्वायोगेद्रष्टृनिरपेक्षतत्समा नयोगक्षेमस्वम्नस्यापितद्द्रष्टृकत्वायोगात् । स्वम्नेजीवोनचेत् तदतिरिक्तजीवोनचेत् । निर्जीवैतत्स्वम्नवदेकजीवस्वम्नस्यापिनिर्जी वत्वसंभवेनतवैकजीवमतं एकोजीवोस्तीतिमतं न नाभूदित्यर्थः । अथवा । अत स्वम्नादुत्थितस्यास्यैवाहमद्राक्षमितिपरामर्श दर्शनात् तस्यचजीवांतरनिमित्तत्वेप्रमाणाभावात् । स्वम्ने एतादृशस्वम्ने जीवोनचेत् सर्वस्यापिस्वम्नस्यनिर्जीवत्वसंभवात्भवदभि मतस्वम्नद्रष्टृदेहेपिजीवासिद्ध्यातवैकजीवमतंनेतियोजना । इतरत्स्पष्टं ॥ ७०२ ॥ प्रकारांतरेणाप्युभयतःपाशांरज्जुमाह ॥ यदीति ॥

देहेषुदृश्यमानदेहेषु । तेजीवाः । जैवसकलव्यापारवतांदेहानांनिर्जीवत्वेईदृशैकजीवदेहस्यापिनिर्जीवत्वसंभवादितिभावः ॥ ७०३ ॥ युक्त्यंतरंचाह ॥ देहेष्विति ॥ एकजीवदेहव्यतिरिक्तदेहेष्वित्यर्थः । घटवैशेष्ये घटाज्जीवसाहित्याख्यवैशेष्ये । द्वितीयेदेहघटयोरुभयोरपिनिर्जीवत्वसाम्येघटोप्यहंकरोमीतिकिंनाहंकुरुतइत्यर्थः । किंचानादिमाययासुप्तोयदाजीवःप्रबुध्यतइतिश्रुत्याजीवस्यसुप्तिरेवश्रूयतेनतुस्वप्नः । सुप्तस्यचमनआदिसकलेंद्रियोपरमेनकल्पकत्वायोगादकल्पितमेवजगत्सिद्धं । अनादिकालमारभ्यतवैकजीवस्यस्वप्नैकद्रष्टृत्वेसुप्तिजाग्रदाख्यावस्थाद्वयस्यविलोपप्रसंगश्च । स्वाप्नभोगस्यदेहपोषकत्वासंभवेना

देहेषुघटवैशेष्येनैकजीवमतंतव ॥ देहेषुतदवैशेष्येकिंनाहंकुरुतेघटः ॥ ७०४ ॥ देहे
नसहसर्वेषुदेहेष्वेकोनगच्छति ॥ देहंविसृज्यगच्छेचेन्मृतस्यस्यात्पुनर्भवः ॥७०५॥ देहं
प्रविश्यभोगश्चेत्प्रागुक्तंदूषणंस्मर ॥ अप्रविश्यैवभुंक्तेचेदेकदेहेप्यसौकुतः ॥ ७०६ ॥

नादिकालमारभ्यजगत्कल्पकस्वप्नंपश्यतःभोगांतराभावेनमृतेरावश्यकत्वात्तन्मरणेपिदृश्यमानंजगदकल्पितमेवाभूत् । अतोयत्किंचिदेतत् ॥ ७०४ ॥ ननुविमतानिशरीराणिमद्भोगायतनानिशरीरत्वान्मच्छरीरवदित्यनुमानात्सकलशरीरगतभोगानांएकजीवेनैवभुक्तिसिद्धेःकथमनेकजीवत्वमितिचेत् । तत्राह ॥ देहेनेति ॥ सकलदेहगतभोगानुभवःजीवकलाप्रवेशंविनानघटते । जीवकलाप्रवेशश्चदेहेनसहसर्वदेहेष्वसंभावितः । देहंविहायगमनेपूर्वदेहेमरणमुत्तरदेहेजननंचस्यादितिभावः ॥ ७०५ ॥ ननुदेहप्रवेशंविनैवभोगोस्तुकोदोषइत्यतआह ॥ देहंप्रविश्येति ॥ प्रागुक्तंपूर्वपद्योक्तं । अप्रविश्य देहमप्रविश्य । एकजीवदेहेऽसौ



प्रवेशः । तस्मिन्नपिदेहेऽप्रविश्यैवभोगसंभवादितिभावः ॥ ७०६ ॥ युक्त्यंतरमाह ॥ यदीति ॥ अखिलाभोगाः सकलजीवशरीरेषुविद्यमानाभोगाः । कलहः सएवभुंक्ते नाहमितिकलहः । द्वितीयपक्षेजीवबाहुल्यसिद्धेस्तत्ववादिनंप्रतिकलहः ॥ ७०७ ॥ दोषांतरमाह ॥ यदीति ॥ अशुद्धंमांसादिकं । शुद्धमन्नादिकं । तस्य एकजीवस्य । एकदिनेप्रायश्चित्तंकृत्वापिपुनःपरदिनेतेनैवतस्याशुद्धस्यैवभुज्यमानत्वात्कुंजरशौचवदित्युक्तं ॥ ७०८ ॥ अतःयुक्तिविरुद्धत्वात् । अत्र एकजीवत्वे । यत्साक्षिरूपप्र

यद्येकस्याखिलाभोगाःकलहःकिंनिबंधनः ॥ यद्यनेकेपिभोक्तारःकलहःकिंनिबंधनः ॥७०७॥
यद्यशुद्धंचशुद्धंचभुंक्तेसर्वत्रसर्वदा ॥ प्रायश्चित्तविधिस्तस्यव्यर्थःकुंजरशौचवत् ॥ ७०८ ॥
अतोनात्रानुमामानमक्षंरूक्षंदिधक्षति ॥ सुखदुःखादिकाध्यक्षान्बहून्साक्षाद्यदीक्षते ॥७०९॥
यद्येकवचनांतोक्त्याजीवैक्यंस्याद्भवेत्तदा ॥ अनादिमाययासुप्तइत्युक्त्यासुप्तएवसः ॥७१०॥
धर्मंचरेतिवचनाद्धर्मैक्यंकिंनवर्ण्यते ॥ अजामजोश्रुतेऽजोन्योजहातीतिवचस्स्मर ॥ ७११ ॥

त्यक्षं ॥ ७०९ ॥ यदाजीवःप्रबुध्यतइतिश्रुतौजीवइत्येकवचनांतोक्त्याजीवैक्यं जीवस्यैकत्वं । सुप्तएव निद्रांकुर्वन्नेवनतुस्वप्नमनुभवन्नित्यर्थः । सःएकजीवः । तथाचजगतस्स्वप्नकल्पितत्वासिद्धिरितिभावः ॥ ७१० ॥ एकवचनांतपदमहिम्नावस्तुनोप्येकत्वांगीकारेऽतिप्रसंगमाह ॥ धर्ममिति ॥ अत्रजात्येकवचनत्वेतत्रापितथास्यादितिभावः । जीवनानात्वेस्पष्टांचश्रुतिंदर्शयति

॥ अजामिति ॥ अनेन अजोह्येकोजुषमाणोनुशेतेजहात्येनांभुक्तभोगामजोन्यःइतिश्रुतिंसंगृह्णाति । तत्रहिप्रकृतिबद्धतयाध्व
स्तबंधतयाचाजपदोक्तौद्वौजीवौस्पष्टंप्रतीयेते । भुक्तभोगांजहातीत्यस्यनित्यमुक्तेपरमात्मनिअयोगात्तदन्यजीवस्यैवग्राह्यत्वादिति
भावः । चेतनश्चेतनाना मेकोबहूनां येनुपश्यंतिधीरास्तेषांशाश्वतमितिचविस्पष्टंबहुजीववादिनीश्रुतिरप्यनुसंधेया ॥ ७११ ॥
योजगत्कल्पकस्तवैकोजीवः । चक्षुषेत्युपलक्षणंस्वप्नेचेन्मनसेत्यपिद्रष्टव्यं । स्वप्नेचेदंतः । जाग्रतिचेद्बहिः । अंडांतर्बहिर्वा । सा
क्षिणं कल्पकतयाद्रष्टारं । तंसुप्तं बाह्यज्ञानमात्रविधुरसुषुप्त्यवस्थापन्नं । त्वत्प्रक्रियायाश्श्रुतेश्चबहुदूरमितिभावः ॥ ७१२ ॥

अंतर्बहिस्त्रिलोकींयःपश्येत्सर्वत्रचक्षुषा ॥ तंसर्वसाक्षिणंसुप्तंकथमाहश्रुतिर्बलात् ॥ ७१२ ॥
जीवैक्येयुगपद्भ्रांतिप्रमितीकस्यकामृतिः ॥ किंजन्मतस्यानिद्रायांनस्याज्जगदिदंमहत् ॥७१३॥
स्वप्नेकथंचिद्घटतेतत्स्वप्नोयंभवेद्ध्रुवं ॥ निद्राचनिद्रैवास्यस्यात्किंनस्याद्दूषणंतदा ॥ ७१४ ॥ ॥

ननुसुप्तपदेनलक्षणयाऽज्ञानशबलजाग्रदवस्थैवोच्यते । अतोनविरोधइत्यतआह ॥ जीवैक्यइति ॥ जाग्रदवस्थापन्नजीवैक्यइ
त्यर्थः । युगपद्भ्रांतिप्रमिती पुरुषद्वयेएकत्रैकदैवजायमानारजतभ्रांतिश्शुक्तिप्रमितिश्चेत्यर्थः । कस्य । तवमतेजीवांतराभावादे
कजीवस्यैवेतिवक्तव्यं । तच्चविरुद्धं । प्रमाभ्रमयोर्युगपदेकत्रायोगादयुक्तमतस्तत्प्रत्येतृजीवद्वयमावश्यकमितिभावः । कामृतिः
किंजन्म । जीवस्यदेहसंयोगवियोगौहिजन्ममरणतयालोकेवेदेचकथ्येते । एकस्यैवजीवत्वेतदपिनस्यादितिभावः । तस्य एक
जीवस्य । जीवत्वादेवनिद्रापिसंभाविता । अतस्तदाजगदभावप्रसंगइतिभावः ॥ ७१३ ॥ ननुदैनंदिनप्रलयकालएवतस्यनिशात

दैवनिद्राच । अतस्तस्यनिद्रायांजगदभावोनानिष्टइतिचेन्न । त्रैलोक्याभावमात्रस्येष्टत्वेपितदतिरिक्तभुवनाभावस्यप्रलयोदकाभा
वस्य चतदाप्यनिष्टत्वान्निद्राकालस्यैवस्वप्नकालत्वान्मध्येप्रलयंजगदुत्पत्तिप्रसंगः । पुनरह्निजगदभावप्रसंगश्च । सैवतस्यनिशाचे
त्कस्यतर्हीयंमानुषीनिशा । इदानींतननिद्राच । नतावज्जडस्य । तस्यावस्थात्रयविधुरत्वात् । चेतनांतरस्यचेत्बहुजीववादप्रसं
गः । तस्यैवचेत्इदानीमपिनिशिजगदभावप्रसंगः । तस्मान्नासौजाग्रदवस्थापन्नः । उक्तदूषणपरिहारासंभवात् । किंतुस्वप्नाव
स्थापन्नएववाच्यइत्याह ॥ स्वप्नइति ॥ घटते । युगपद्भ्रांतिप्रमितिजन्ममृत्यादिकं । नहिस्वाप्नभ्रांतिप्रमितिजन्मादौस्वप्नद्रष्टृजी

जगद्भंगभियानिद्रांसुभद्रांकुर्वतस्सदा ॥ स्वप्नोजगच्चेत्कस्यस्यान्निषेधविधिशासनं ॥ ७१५ ॥
यदानोपरमश्चक्षुरादेर्नस्वप्नवज्जगत् ॥ यदाचोपरमःकस्यकरणंकारणंवद ॥ ७१६ ॥ ॥

वादपरोजीवोस्ति । अतस्स्वप्नस्यजाग्रदवस्थावन्नियंतुमशक्यत्वात्विरुद्धमपितत्रघटतइतिभावः । स्वाप्नसृष्टिपक्षेतत्रापिनरकरि
तुरगादितात्कालिकबहुजीवसद्भावेनजाग्रद्वद्देवमर्यादायावक्तुंशक्यत्वात्कथंचिदित्युक्तं । तत्तस्मात् । अयं एकजीवभ्रमः ।
निद्रा सुप्तपदोक्तानिद्रा । अस्यएकजीवस्य । तदामुख्यतोनिद्रितस्यस्वप्नपक्षेकिंदूषणंनस्यात् । प्रागुक्तंवक्ष्यमाणंचसर्वंदूषणंस्या
दित्यर्थः ॥ ७१४ ॥ तदेवदूषणंदर्शयति ॥ जगदिति ॥ निद्रितंप्रतिनिषेधविध्योरप्रयोजकत्वादन्यस्याचेतनत्वादितिभावः
॥ ७१५ ॥ दूषणांतरमाह ॥ यदेति ॥ चक्षुरादींद्रियाणामुपरमाभावेस्वप्नएवनस्यात् । स्वप्नेहिमनोमात्रस्योद्बुद्धता । इतरेंद्रि

याणामुपरमः । उपरमेचकरणं एकजीवचक्षुरादिकरणंकस्यप्रयोजनस्यकारणं । आसंसारंनिद्रांगीकारेणतत्करणसृष्टेर्वैयर्थ्यादिति भावः ॥ ७१६ ॥ प्रबलंदूषणमाह ॥ किंचेति ॥ स्वप्नेकिंनभवेत् सर्वमपिसंभावितमितिभावः । इदंचस्वाप्नोपदेशेज्ञानमोक्षा दिकंतवापिनफलं । स्वाप्नोपदेशेनजाग्रतिज्ञानादिकंचनसंभावितं । स्वाप्नभोजनेनजाग्रतितृप्तेरदर्शनात् । स्वाप्नयज्ञेनजाग्रतिस्व र्गाद्यदर्शनाच्च ॥ ७१७ ॥ इत स्स्वाप्नब्रह्मज्ञानमोक्षादिभ्यः । तस्य एकजीवस्य । भवस्संसारः । तस्मा जाग्रच्छ्रवणादेरभा

किंचैकजीवस्वप्नोयंसाक्षात्स्वप्नोभवेद्यदि॥तदास्वप्नोपदेशेनस्वाप्नब्रह्मापरोक्षधीः॥ स्वाप्नवैकुंठयात्रा चस्याद्भिस्वप्नेनकिंभवेत् ॥७१७॥ प्रबोधेगुरुशास्त्रादेर्निवृत्त्येतःफलांतरं ॥ कदापिनभवेत्तस्यभवस्त स्माद्ध्रुवोभवेत् ॥७१८॥ जाग्रद्दशैवसास्वप्नकथायद्युपचारतः ॥ देहेदेहेतदाव्यासब्रह्मचैतन्यमस्तिते ॥ ७१९ ॥ देहोपादानमज्ञानंचास्तिदेह्युचिताक्रियाः ॥ संतिनिर्जीवतातेषांदेहानांकेनहेतुना ॥७२०॥

वात्ईदृशैकजीवस्यकदापिमोक्षोनभवेदित्यर्थः । उपलक्षणंचैतत् । वैधर्म्याच्चनस्वप्नादिवदितिब्रह्मसूत्रविरुद्धत्वाच्चनायंपक्षश्शो भतइत्यपिद्रष्टव्यं ॥ ७१८ ॥ स्वाप्नपक्षंदूषयित्वाजाग्रत्पक्षंपुनरपिप्रबलदोषांतरेणदूषयति ॥ जाग्रद्दशेति ॥ सा एकजीवाव स्था । तदा जाग्रद्दशात्वे । तेमतेदेह्युचितक्रियाः देहिनोजीवस्योचितक्रियाःअभिलापादयः । केनहेतुना नकेनापि । एकजीवदे हवत्जाग्रदवस्थादेहत्वस्यब्रह्मचैतन्यप्रवेशस्याभिलापादिजैवधर्मस्यचोभयत्रसाम्यात्उभयोरपिसजीवत्वमेवभवेत् । एवमपिनि



र्जीवत्वे क्वापिजीवोनस्यादितिभावः ॥ ७१९ ॥ ७२० ॥ पक्षांतरमाशंकते ॥ यद्यस्येति ॥ अस्य एकजीवस्य । साजीवांतरसृ ष्टिः । मायिककरितुरगादीनामिवनिर्जीवत्वंसंभवतीत्याशयः । दूषयति ॥ द्रष्टेति ॥ अस्याः मायिकसृष्टेः । स्वयंएकजीवएव । द्रष्टाचेदितिसंबंधः । अस्य एकजीवस्य । मायावीस्वमायाकल्पितसृष्टिंस्वयंनपश्यति । स्वाश्रयाव्यामोहिनीमायेत्यंगीकारा त् । किंतुद्रष्टृपुरुषांतरनयनानिमंत्रौषधादिनाऽऽच्छाद्यतेषांदर्शयति । अतएकजीवस्यैवद्रष्टृत्वेतन्मायात्वंनघटतइतिभावः । अन्य

यद्यस्यमायासृष्टिस्साद्रष्टाकोस्यास्तदावद ॥ स्वयंचेन्नास्यमायाभून्नापरोस्त्येकजी विनः ॥७२१॥ रूपमात्रंतदापिस्यात्कथंशास्त्रनिरूपणं ॥ मायाकृत्रिमविप्रेषुवाग्वृ त्तिर्नहिमायया ॥७२२॥ अथस्वयंब्रह्मणोंशस्स्वांशास्सर्वेन्यदेहिनः ॥ इतिचेदेक जीवत्वंकिंसयोगप्रभाववान् ॥ परिच्छिन्नैकदेहस्थःकथंदेहांतरंविशेत् ॥ ७२३ ॥

श्चद्रष्टानास्तीत्याह ॥ नापरइति ॥ ७२१ ॥ दूषणांतरंचाह ॥ रूपमात्रमिति ॥ तदापिमायासृष्टित्वेपि । उपलक्षणंचैतत् । एकजीववादोहिविवरणकारस्यैवपक्षः । तस्याविद्यातिरिक्तामायैवनास्ति । अतश्शंकैवेयंनघटतइत्यपिद्रष्टव्यं ॥ ७२२ ॥ एकए वजीवस्तस्यचस्वप्नस्सर्वंजगन्निर्जीवंचेत्येवमायिनांसिद्धांतः । ग्रंथकारस्तुसंभावितंपक्षांतरमुत्थापयति ॥ अथेति ॥ स्वयमेकजी वः । स्वांशाःएकजीवांशाइतिएकजीवत्वंचेदितिसंबंधः । दूषयति ॥ किमिति ॥ सःएकजीवः । एकदेहावच्छिन्नस्यजीवस्यपु

नरनंतदेहेषुप्रविश्यजीवभावोपरोक्षज्ञानोत्तरकालंप्रारब्धकर्मभोगायकायव्यूहंसंपादयतोयोगिनएवघटतेनान्यस्य । अयंचानादि कालमारभ्यजननमरणनरकाद्यनेकक्लेशाननुभवन्नयोगी । नाप्यपरोक्षज्ञानी । अतोस्यानंतानंतजीवदेहेषुकथंप्रवेशः । व्याप्तस्य तुब्रह्मणःकथंचिद्घटते। अतईदृशोप्येकजीववादोनशोभतइतिभावः। एतदेवविशदयति॥परिच्छिन्नेति॥७२३॥एतत् एतादृशमतं ॥७२४ ॥ अस्तुअंशविभागोस्तु ॥ ७२५ ॥ तत्रदृष्टांतमाह ॥ गेहेगेहइति ॥ बहुदीपत्वे गेहानांबहुदीपत्वे ॥७२६॥ किंचसर्व

देहेदेहेपृथग्भोगान्भुंजंतोनादितोयदि ॥ संत्यनंताश्चेतनांशाबहुजीवत्वमेवतत् ॥७२४॥ जीवाद्वाब्र ह्मणोवास्तु(नुम्नु)लुम्लिटोःकिंविशेषणं॥७२५॥ गेहेगेहेस्थितादीपादीपान्मूलाग्नितोपिवा ॥ भवंतुब हुदीपत्वेनविशेषोस्तिकश्चन ॥७२६॥ निर्जीवदेहसंचारेस्वदेहोप्यस्तुतादृशः॥ सर्वभ्रांतिर्ब्रह्मणोस्तुसं सरेन्मुच्यतांचतत्॥७२७॥अज्ञानकार्यंब्रह्मेशसर्वकर्तृत्वहंतृते ॥युक्तेनेतितयोःकार्यत्वेनेत्यादावुदीरितं ७२८

विकल्पगतोप्येकजीवस्यदेहःकेनकल्पितः । नतावत्स्वेनैव । देहोत्पत्तेःपूर्वंकल्पकत्वायोगात् । योगेवाजगत्कल्पनस्यापिदेहंविनै वसंभवेनदेहांगीकारवैयर्थ्यप्रसंगात् । स्वप्नद्रष्टुरस्वदेहकल्पकत्वस्यक्काप्यदर्शनाच्च । अतोब्रह्मणैवेतिवक्तव्यं । एवंसतिसर्वेदेहाः निर्जीवाएवसंतुकिंद्विप्रकारकल्पनयेत्याह ॥ निर्जीवेति ॥ स्वदेहः एकजीवदेहः । तादृशः निर्जीवः । तर्हिभ्रमःकस्येत्यतआ ह ॥ सर्वेति ॥ तद्ब्रह्म ॥ ७२७ ॥ इदानीमेकजीवस्यजगत्कर्तृत्ववादेतच्छास्त्रस्यपूर्वोत्तरविरोधंदर्शयति ॥ अज्ञानेति ॥ अज्ञा

नकार्ययोर्ब्रह्मरुद्रयोस्सर्वकर्तृत्वहंतृते ब्रह्मणःकर्तृत्वंरुद्रस्यहंतृत्वमित्यर्थः । तयोःकार्यत्वेनेत्यनेन तयोःकार्यत्वेननिखिलजगत्स र्जनसंहरणसामर्थ्याभावादिति तत्वदीपनवाक्यंसंगृह्णाति । आदौ मंगलपद्यव्याख्यानावसरे । इतिवाक्येउदीरितमितिसंबंधः । उपलक्षणंचैतत् । कारणत्वाक्रांतंब्रह्मनमस्कार्यमित्याहेतिब्रह्मकारणतायाश्चनिरूपणादित्यपिद्रष्टव्यं । तयोर्विधिरुद्रयोः कार्यत्वे न अज्ञानकार्यत्वेनेतितद्वाक्यार्थः ॥ ७२८ ॥ तेनकारणेन । तवजीवः एकजीवः । जागर्तिचेत् जागरूकतयावर्ततेचेत् । हृद्रु

पुनरज्ञानकार्यस्यजीवस्यास्यनिगद्यते ॥ सर्वस्यकर्तृतातेनजीवोजागर्तिचेत्तव ॥
॥ ७२९ ॥ निद्रातिहृद्रुजाशास्त्रंमिथोयद्विव्यरुध्यत ॥ जीवेऽतिव्यापकंचेदंकथं
स्याद्ब्रह्मलक्षणं ॥ ७३० ॥ किंचासौचक्षुराद्यक्षैःकल्पयेन्नतुसाक्षिणा ॥ अंतरे
वस्वतंत्रेणसन्निकृष्टानितानिच ॥ ७३१ ॥ ॥ ॥

जा पूर्वोत्तरविरोधाख्यहृदयव्याधिनानिद्रति निद्रितपुरुषवत्स्वार्थसाधकंनभवतीत्यर्थः । यत् शास्त्रं । अज्ञानकार्यत्वात्विधि रुद्रयोःकर्तृतानेत्येकत्रोक्तं । इदानींपुनरज्ञानकार्यस्यैकजीवस्यसकलजगत्कर्तृत्वमुच्यते । अतःपूर्वोत्तरविरुद्धत्वात्शास्त्रमुन्मत्त प्रलपितंस्यादितिभावः । दोषांतरंचाह ॥ जीवेतिव्यापकमिति ॥ सूत्रविरुद्धश्चजीवस्यजन्मादिकारणत्वांगीकारइतिभावः ॥ ७२९ ॥ ७३० ॥ स्वप्नपक्षेदूषणांतरंसूचयन्दोषांतरंचाह ॥ किंचेति ॥ असौ एकजीवः । अंतरेव देहांतरेव । तानि चक्षुरा

युक्ति- ॥ ११६ ॥

मल्लिका भेदसौ०

द्यक्षाणि । ततः भ्रांतिजनकसन्निकर्षघटकतयाजगतःप्राग्भावनियमात् । अयमाशयः । स्वप्नपक्षंदृढीकृत्यमनसैवसकल्पयतीति पक्षेतस्यचक्षुरादींद्रियसृष्टिर्व्यर्थास्यात् । तैरपिकल्पयतिचेदुक्तंदूषणंतदवस्थमिति । स्वप्नपक्षेश्रुतिविरोधंसूचयन्दोषांतरंचाह ॥ अंडस्येति ॥ सर्वं पुंसूक्तोक्तपादादिजं ॥ ७३१ ॥ ७३२ ॥ भारतेपुरुषाबहवोवाएकोवेतिविकल्प्य एकंपुरुषंनेच्छंतीतिसिद्धां तकरणात्तद्विरोधश्चैकजीववादस्येत्याह ॥ बहवइति ॥ सः भारतकर्ताव्यासः ॥ ७३३ ॥ ७३४ ॥ गीताप्रमेयविरुद्धश्चैकजीव

ज्ञापकानिततोभ्रांतेःपुरासर्वमभूज्जगत् ॥ अंडस्यांतर्बहिस्सर्वंजीवोणुःकल्पयेत्कथं ॥ ७३२ ॥
बहवःपुरुषाब्रह्मन्नुताहोएकएवतु ॥ नैतदिच्छंतिपुरुषमेकंकुरुकुलोद्वह ॥ ७३३ ॥ इतिभारतक
तैवयज्जीवबहुतैकते ॥ प्राक्प्रस्ताव्योत्तरार्धेननेच्छंतीत्येकजीवतां ॥ प्रत्याक्षिपत्ततोप्येषपक्षोनस
हिसूत्रकृत् ॥ ७३४ ॥ निर्जीवसेनासंहारमुज्जिहासुःकिलार्जुनः ॥ अक्षोहिणीनांतद्युद्धंमृतानानां
रणंकिल ॥ एकजीवकथातस्माद्वृथैवेतिमतिर्मम ॥७३५॥ बहुजीवत्वपक्षेपिनिर्मूलातेष्वभिन्नता ॥ ७३६॥

वादइत्याह ॥ निर्जीवेति ॥ उत्कर्षेणहातुमिच्छुःउज्जिहासुः । एकजीववादेकुरुसेनायानिर्जीवत्वात्तद्धननेकुतस्सर्वज्ञस्यार्जुन स्यमनोव्याक्षेपःकुतोवामृतमारणरूपतद्युद्धस्यप्रशंसेतिभावः । तस्मा दर्जुनेनमनोव्याक्षेपकरणाद्युद्धस्तुतेश्च । वृथा निर्मूलेत्यर्थः । नकेवलमेतावत् । मूलविरुद्धाचेत्यपिग्राह्यं ॥ ७३५ ॥ तेषुबहुजीवेषु । भारतेऽर्जुनादीनांहंतृतयासेनायाश्चहन्यमानतयाकथना

॥ ३३५ ॥

त् तस्यचभेदाविनाभूतत्वा न्निर्मूला मूलविरुद्धाचेतिभावः । नन्वनुमानतोभेदमात्रस्यमिथ्यात्वसिद्धेःकथंभेदोंगीक्रियतइत्यतस्त दनूद्यप्रकरणसमतयादूषयति ॥ भेदत्वादिति ॥ मोक्षःअविद्यानिवृत्तिः ॥ ७३६ ॥ ७३७॥ ब्रह्ममोक्षभेदस्यमिथ्यात्वाभाव मुपपादयति ॥ अविद्यायाइति ॥ निवृत्तौप्रध्वंसे तवमतेपंचमःप्रकारः । अतः पंचमप्रकारत्वात् । अतःअविद्याप्रध्वंसात् । अर्वागस्तादितियोजना । यक्षे यक्षसमाने । तस्मिन्नविद्याप्रध्वंसे । बलिः पूजासमानःप्रकारः । यथायक्षेहरिहरादिबलितोबलिः

भेदत्वाद्यदिभेदस्यमिथ्यात्वंचंद्रभेदवत् ॥ तर्हिभेदोनमिथ्येतिभेदत्वेनैवहेतुना ॥ ब्रह्ममोक्षविभेदा
ख्यदृष्टांतेनैवसाध्यते॥७३७॥अविद्यायानिवृत्तौहिप्रकारःपंचमस्तव ॥ अतोऽर्वागेवमिथ्यात्वंतस्मिन्य
क्षेबलिःपृथक् ॥७३८॥ अतोऽविवादोदृष्टांतोमिथ्यात्वाभावसाधने ॥ श्रुतिस्सत्यंभिदेत्याद्याकुर्वती
शपथंहिनः॥७३९॥शून्यब्रह्मविभेदोवादृष्टांतस्तत्रकथ्यते॥तद्भेदस्यापिमिथ्यात्वेब्रह्मशून्यंभवेत्तव॥७४०॥

पृथगेव । तथाऽस्मिन्नपिप्रकारःपृथगेवेतिभावः । अनेन नसन्नासन्नसदसन्नानिर्वाच्यश्चतत्क्षयः । यक्षानुरूपोबलिरित्याचार्याःप्र त्यपीपदन्नितितदीयकारिकांसूचयति । उपलक्षणंचैतत् । प्रध्वंसस्योत्पन्नत्वात्सप्रतियोगिकत्वात्ब्रह्मणश्चतद्विरुद्धत्वात्तद्भेदोन मिथ्येत्यपिद्रष्टव्यं ॥ ७३८ ॥ अतः उभयवादिसंमतत्वात् । अविवादःविवादरहितः । सत्यंभिदेतित्रिंशःकथनात्शपथंकुर्वती त्युक्तं । नः अस्ति । अस्मदनुमानानुग्राहिकेत्यर्थः ॥ ७३९ ॥ तत्र भेदमिथ्यात्वाभावे ॥ ७४० ॥ सत्यभेदस्यदृष्टांतीकरणेसा

ध्यवैकल्यं । मिथ्याभूतभेदस्यदृष्टांतीकरणेसाधनवैकल्यं । अतःपरस्यदृष्टांतएवनास्तीत्याह ॥ सत्यइति ॥ साध्यवान् मिथ्या त्वरूपसाध्यवान् । हेतुमान् भेदत्वरूपहेतुमान् । मेमते । यद्यस्मात् रज्जुसर्पस्सर्पोन सर्पत्वजात्याक्रांतोन । तस्मान्मिथ्याचेत् हेतुमान्नेतिसंबंधः । अतस्मिंस्तदितिप्रत्ययोहिभ्रमः । अतःकथमारोपितभेदोभेदत्ववानितिभावः ॥ ७४१ ॥ उक्तमर्थसाहित्यमु द्रयावर्णयति ॥ यतइति ॥ सपक्षपक्षी चंद्रभेदाख्यसपक्षपक्षी छिन्नपक्षद्वयः छिन्नं साध्यसाधनवैकल्याभ्यांदूषितं पक्षद्वयं

सत्योभेदस्साध्यवान्नमिथ्याचेद्धेतुमान्नमे ॥ रज्जुसर्पोनयत्सर्पस्तद्धेदंभीषयेद्भिकः ॥७४१॥ यतस्सपक्ष
पक्षीतेभेदमिथ्यात्वसाधने ॥ छिन्नपक्षद्वयोप्यासीत्तन्नोत्सर्पेत्सकुत्रचित् ॥७४२॥ चंद्रभेदोपिकोवा
सौयोदृष्टांतस्त्वयेरितः॥आरोपितानारोपितयोर्भेदश्चेत्सहिमन्मते॥ सत्यएवेतिसाध्यस्यवैकल्यंस्या
न्निदर्शने ॥७४३॥ नायमारोपितश्चंद्रइतिसचंद्रधर्मिकः ॥ आरोपितात्तुयोभेदस्ससत्यस्सर्ववादिनां॥७४४॥

सत्यत्वमिथ्यात्वाख्यपक्षद्वयं यस्य । त्वयादृष्टांतीकृतश्चंद्रभेदःसत्यत्वेपिमिथ्यात्वेपिनदृष्टांतोभूदितिभावः । तत्तस्मात् । उत्स र्पेत् ऊर्ध्वंगच्छेत् । साध्यसिद्ध्युपयोगीनेतियावत् । सःसपक्षः ॥ ७४२ ॥ पूर्वयोवाकोवाचंद्रभेदोस्तु । उक्तरीत्यापक्षद्वयेपिसदृ ष्टांतोनेत्युक्तं । अधुनाऽऽरोपितानारोपितचंद्रभेदोवादृष्टांतीक्रियते । आरोपितचंद्राणामेवपरस्परभेदोवेतिविकल्प्यद्विविधोपि सदृष्टांतोनेत्याह ॥ चंद्रभेदइति ॥ आरोपितानारोपितचंद्रभेदः ॥ ७४३ ॥ आरोपितप्रतियोगिकानारोपितधर्मिकचंद्रभेदस्यस

त्यतामुपपादयति ॥ नायमिति ॥ ७४४ ॥ तादात्म्ययोग्यत्वात् सस्वरूपतयास्वतादात्म्यस्यैवविद्यमानत्वादित्यर्थः । भ्रांतैक्य शंकया भ्रांतिकल्पितस्यारोपितचंद्रस्यापिचंद्रतयाप्रतीयमानत्वेनतत्तादात्म्यशंकया तन्निषेधस्य आरोपितचंद्रतादात्म्यनिषेधस्य औचित्यात् सस्वरूपतयातादात्म्ययोग्येसचंद्रेतस्यापितादात्म्यस्यभ्रांत्याप्रसक्तत्वेननिषेधावश्यंभावादित्यर्थः । सा अनारोपि तचंद्रधर्मिकभेदविषयिणी । अबाधिता विषयबाधरहिता ॥ ७४५ ॥ सः अनारोपितचंद्रः । अन्यस्मा त्स्वविलक्षणात् । आ

सतस्तादात्म्ययोग्यत्वाद्भ्रांताभ्रांतैक्यशंकया ॥ तन्निषेधस्यचौचित्याद्भेदधीस्साह्यबाधि
ता ॥७४५॥ सचस्वरूपतोस्त्येवपरंनास्तीतरात्मना ॥ अतस्तत्रसदान्यस्माद्भेदावसरएव
हि ॥ ७४६ ॥ यद्यारोपितचंद्राणामेवभेदःपरस्परं ॥ तदासाधनवैकल्यंदृष्टांतेप्रतिवा
दिनः ॥ ७४७ ॥ अन्योन्याभावभेदोयंनह्यसत्येषुमन्मते ॥ ७४८ ॥ यदाधर्म्येवनैवास्ति
तदातस्यैवनास्तिता ॥ तत्रान्योन्यात्मताऽभावोह्यप्रसक्तनिषेधनं ॥ ७४९ ॥ ॥

रोपितचंद्रादनारोपितघटादेश्च । प्रसक्तस्याविद्यमानस्यचतादात्म्यस्यावश्यंनिषेध्यत्वात् । अतःप्रथमपक्षेदृष्टांतेप्रतिवादिनस्सा ध्यवैकल्यमितिभावः ॥ ७४६ ॥ द्वितीयंदूषयति ॥ यदीति ॥ ७४७ ॥ साधनवैकल्यमेवोपपादयति ॥ अन्योन्येति ॥ अ न्योन्याभावभेदः अन्योन्याभावाख्यभेदः ॥ ७४८ ॥ कुतोनास्तीत्यतोयुक्तिमाह ॥ यदेति ॥ धर्मीशशविषाणादिः । नैवा

स्ति सर्वथानास्तीत्यर्थः । तस्यैव शशविषाणादेरेव । तदाशशविषाणमेवनास्तीत्युच्यते । ननुतदन्यात्मनानास्तीतिव्यवह्रियते । असत्त्वेनस्वतादात्म्यस्यैवायोग्यतयाऽन्यतादात्म्यस्यसुतरामप्रसक्तेः । तत्र शशविषाणादौ । अन्योन्यात्मताऽभावः अन्योन्य तादात्म्यस्याभावोनिषेधनमित्यर्थः । अप्रसक्तनिषेधनंहीतिसंबंधः । अतस्तत्रान्यतादात्म्यनिषेधरूपभेदस्यैवाभावेनभेदत्वस्यसुत रामभावात्साधनवैकल्यं । वस्तुस्थित्यभिप्रायेणमन्मतइत्युक्तं । युक्तिस्तुसर्वेषामपिसाधारणीतिभावः ॥ ७४९ ॥ अप्रसक्तिमे वोपपादयति ॥ तदेवेति ॥ स्वतस्स्वयमेव । इतरात्मनानास्तीतिनतु । नकेनापिव्यवह्रियतइत्यर्थः ॥ ७५० ॥ अतः अन्यो

तदेवनास्तिचेत्कस्यतादात्म्यंतत्रशंक्यते ॥ शशशृंगंस्वतोनास्तिनतुनास्तीतरात्मना ॥ ७५० ॥
अतस्तत्रान्यवस्तुभ्योभेदावसरएवन ॥ यतोधर्मिस्वरूपोयमन्योन्याभावईर्यते ॥ ७५१ ॥ ॥

न्यतादात्म्यप्रसक्त्यभावात् । तत्र असति । ननुतर्हिशशविषाणेवस्तुस्थित्याविद्यमानइतरतादात्म्याभावःकइतिचेत् वस्तुस्थि त्याविद्यमानश्शशविषाणाभावइव सप्तम्यानिर्दिष्टशशविषाणस्येतरतादात्म्यंप्रत्याधारत्वात्यंताभावएवेतिब्रूमः । भेदस्त्विदमिदं नेतिपदद्वयसामानाधिकरण्यमर्यादयोभयतादात्म्यंप्रसंजयित्वायोनिषेधस्सएव । तादात्म्यमेवात्रनास्तीत्याद्याकारेणयोनिषेधस्स तुतदत्यंताभावएव । अस्यचप्रतियोगिप्रसिद्ध्यैवालं । ननुपुरोवर्तिनितत्प्रसक्तिरपिनियमेनापेक्षिता । शशविषाणादिनिषेधेतददर्श नात् । भेदस्तूक्तरीत्यानियमेनपुरोवर्तिन्येवतत्प्रसक्तिमपेक्षते । साच तादात्म्ययोग्येसत्पदार्थएवभवति नतुसर्वथातादात्म्या



योग्येऽत्यंतासति । किंचेदमित्यनूद्येदंनेत्याकारेणनिषेधःस्वाकारेणसत्येववस्तुनिभवति । सर्वथाऽविद्यमानेधर्मिणीदमेवनेत्येता वतापूर्तेःपुनरिदंनेत्यन्याकारेणनिषेधस्यकथमवसरः । नहिकश्चिच्छशविषाणंघटोनेतिब्रूते । किंतुशशविषाणमेवनेतिनिषेधति । प्रतीतिश्चध्वस्तेऽनुत्पन्नेचघटेघटएवनेत्याकाराभवति । ननुतदापिघटोयंनपटइतिकस्यापिप्रतीतिरस्ति । सतितुघटेघटएवायंनतु पटइतिवस्त्वंतरतादात्म्यप्रतिषेधरूपैवजायते । प्रतीतिरेवचवस्तुव्यवस्थितौप्रमाणं । सतितुधर्मिणितत्स्वरूपस्यैवनिषेद्धुमशक्य त्वात्अन्यात्मनैवनिषेधस्संभावितः । अतस्सन्मात्रधर्मिकएवभेदो नासति । एतत्सर्वमभिप्रेत्योक्तंभेदावसरएवनेति । अत्यंतास

घटोयमेवनपटःपटोसौनघटस्त्विति ॥ सामानाधिकरण्यस्यवस्त्वैक्येह्यनु
शासनात् ॥ ७५२ ॥ अतोनासतिसोभावोभावाभावबहिष्कृतः ॥७५३॥

तिशशशृंगादावन्योन्याभावरूपभेदाभावेऽतिप्रबलयुक्तिंचाह ॥ यतइति ॥ ७५१ ॥ अयंघटएवेतिसंबंधः । नघटस्त्विति । ईर्यतइतिपूर्वेणान्वयः। नन्वेवंप्रतीतावपिकुतोन्योन्याभावस्यघटादिस्वरूपत्वमित्यतआह ॥ सामानाधिकरण्यस्येति॥ इहापिघ टादेर्धर्मिणःपटोनेत्याद्याकारेणपटप्रतियोगिकनञर्थभूतान्योन्याभावसामानाधिकरण्यदर्शनेनान्योन्याभावात्मकत्वसिद्धिरितिभा वः ॥ ७५२ ॥ अतः अन्योन्याभावस्यधर्मिस्वरूपत्वनियमात् । सोभावः अन्योन्याभावः । भावाभावबहिष्कृतइतितत्रहेतुगर्भ विशेषणं । असत्यन्योन्याभावांगीकारेऽसतोपितद्रूपत्वंस्यात् । अन्योन्याभावस्यधर्मिस्वरूपत्वनियमात् । तच्चविरुद्धं । असतो

भावाभावबहिष्कृतत्वादिति अतोनासतिसोभावइतिहेतोस्सूचनात् ॥ ७५३ ॥ युक्त्यंतरंचाह ॥ अभावेष्विति ॥ तस्यधर्मिणः विद्यमानतानियतेतिसंबंधः ॥ ७५४ ॥ अभावस्यधर्मिसत्तानियममुदाहरणेनद्रढयति ॥ नाभ्रूदिति ॥ अत्रेतिपदंनाभूदित्यनेन नष्टइत्यनेनचसंबध्यते । अत्र कपालादावुपादाने अयंघटःपटोनेतिसंबंधः । सर्वदेशकाले सर्वस्मिन्देशेसर्वस्मिन्काले । अतः प्रागभावप्रध्वंसान्योन्याभावात्यंताभावानांचतुर्णामपिधर्मीसन्नेव ॥ ७५५ ॥ प्रागभावेप्रतियोगिनोघटादेःपश्चात्सत्त्वंनियतमिति

अभावेषुहिसर्वेषुयोधर्मीविद्यमानता ॥ तस्यसर्वस्यनियतानाभावोऽसतिधर्मिणि
॥ ७५४ ॥ नाभ्रूदत्रघटोनष्टोघटोनायंघटःपटः ॥ शशशृंगंसर्वदेशकालेनेतिहिधी
र्नृणां ॥७५५॥ पश्चात्सत्त्वंप्रागभावेनियतंप्रतियोगिनः ॥ अतोसौप्रागभावोभूत्प्रध्वं
सप्रतियोगिनः ॥ पूर्वसत्वंचनियतमुत्तराभावतास्यतत् ॥७५६॥ सद्भ्यामभावइति
हिततःप्राहुर्विपश्चितः ॥ नाशेनजन्मनातस्माज्जगत्सत्यत्वमुच्यते ॥ ७५७ ॥ ॥

संबंधः । अतः पश्चात्प्रतियोगिसत्त्वनियमात् । असौ अभावः । तत्तस्मात् पूर्वसत्त्वनियमात् । अस्य प्रध्वंसस्य ॥ ७५६ ॥ उक्तार्थेप्राचांवाचंसंमतित्वेनाह ॥ सद्भ्यामिति ॥ ततः प्रागभावप्रध्वंसयोःप्रतियोगिसत्त्वस्यापिनियतत्वात् । सद्भ्यां विद्यमानाभ्यां धर्मिप्रतियोगिभ्यांनिरूप्यतइतिवाक्यशेषः । तार्किकास्तुसर्वाभावेष्वपिधर्मिप्रतियोगिसत्त्वनियमंवदंति । तदयुक्तं ।

अत्यंताभावप्रतियोगिनिशशविषाणे सन्निष्ठभेदप्रतियोगिनिअसतिचसत्त्वादर्शनात् । तत्त्ववादिनस्तुसर्वाभावेष्वपिधर्मिसत्त्वनियमं प्रागभावप्रध्वंसयोरेवप्रतियोगिसत्त्वनियमंचाहुः । वक्ष्यतिचैतद्ग्रंथकारस्स्वयमेव । अतइदंवाक्यमस्माकमप्यनुकूलमेवेतिभावः । तस्मात्प्रागभावप्रध्वंसयोःप्रतियोगिसत्त्वनियमात् । उच्यतेविवेकिभिः ॥ ७५७ ॥ अन्योन्याभावेक्वचित्प्रतियोगिसत्त्वं क्वचित्तदनपेक्षेत्याह ॥ सतइति ॥ अविद्यमानात् शशविषाणादेः ॥ ७५८॥ ननुकिमर्थमयंविभागइत्यतआह॥नायमिति॥

सतस्सदंतराद्भेदेप्रतियोगिनिसत्यता ॥ अविद्यमानाद्भेदेतुप्रतियोगीपरंनसन् ॥ ७५८ ॥
नायमारोपितश्चंद्रोनेदंरजतमित्यपि ॥ यतःप्रतीतिर्लोकानांधर्मीतत्रापिसन्भवेत्
॥ ७५९ ॥ त्रिकालनास्तिताधर्मिकालत्रितयमेवहि ॥ ७६० ॥ शशशृंगस्यनास्तित्वंतद्ध
रूपादिनास्तिता ॥ त्रिकालनास्तितैवेतिधर्मीकालोखिलस्यसन् ॥७६१॥ ॥

यतइत्यस्यपूर्वेणान्वयः । धर्मी चंद्रशुक्त्यादिः । तत्रापि अविद्यमानाद्भेदप्रतीतावपि ॥ ७५९ ॥ अत्यंताभावेपिप्रागुक्तंधर्मिसत्त्वनियममुपपादयन्प्रतियोगिसत्त्वंनैवापेक्षितमित्याह ॥ त्रिकालेति ॥ शशविषाणंनासीन्नास्तिनभविष्यतीतियाकालत्रयनास्तिता । अत्यंताभावइतियावत् । उपलक्षणंचैतत् । सर्वदेशेषुनास्तितेत्यपिग्राह्यं । तस्यधर्म्याधारः कालत्रितयंसर्वदेशाश्च । एवशब्देनशशविषाणंव्यावर्तयति ॥७६०॥ शशशृंगेयारूपनास्तिता तस्याअपित्रैकालिकाभावत्वात्कालत्रितयमेवधर्मीत्याह॥शश

श्रृंगस्येति ॥ तद्रूं शशश्रृंगगतंयद्रूपादितन्नास्तिता । अखिलस्य शशविषाणाद्यत्यंताभावस्यतद्गतरूपाद्यत्यंताभावस्यच ॥ ७६१ ॥ प्रतियोगिभूतरूपव्यावर्तकतयाशशविषाणेरूपात्यंताभावइतिव्यवह्रियते । नतुतस्यसाक्षाद्धर्मितयेत्याह ॥ असत इति॥७६२॥कथंतर्हिशशविषाणेऽत्यंताभावप्रतियोगित्वादिधर्माधारत्वमित्यतआह॥ प्रतियोगित्वेति ॥ तत्र शशविषाणे। अत्यंताभावस्य शशविषाणादिप्रतियोगिकात्यंताभावस्य। इयंप्रागुक्ता। अभावप्रतियोगित्वं भ्रांतिज्ञेयत्वं नास्तित्वेनज्ञेयत्वादिकंचावि

असतःशशश्रृंगादेर्धर्मित्वंतूपचारतः ॥ ७६२ ॥ प्रतियोगित्वपूर्वास्तुधर्मिसत्तानपेक्षिणः ॥ भाव धर्मास्संतितत्रात्यभावस्यगतिस्त्वियं ॥ ७६३ ॥ निषेधप्रतियोगित्वमात्रंसर्वस्यचासतः ॥ देशः कालश्चाखिलोपिधर्मीतस्यनिषेधने ॥ ७६४ ॥ शशश्रृंगंनकुत्रापिनकदापीतिहिप्रमा ॥ तद्दैर्घ्यंच नकुत्रापिनकदापीतिहिप्रमा ॥ ७६५ ॥ अत्यंताभावमात्रेतुप्रतियोगिन्यसत्यता ॥ नियताकथम त्यंताभावस्सोपिसतोयदि ॥ कालत्रयेप्यभावंहितच्छब्दार्थंविदुर्बुधाः ॥७६६॥ ॥

द्यमानस्यैवभवति । नतुकदापिविद्यमानस्य । अतस्तेधर्मिसत्तानिरपेक्षत्वात्शशविषाणादावेवस्युः । अत्यंताभावस्यतुसार्व देशिकसार्वकालिकतयाव्यवह्रियमाणत्वाद्देशकालावेवधर्मिणावितिभावः ॥ ७६३ ॥ तदेवविशदयति ॥ निषेधेति ॥ तस्यासतः ॥ ७६४ ॥ तद्दैर्घ्यं शशश्रृंगदीर्घत्वं ॥ ७६५ ॥ अत्यंताभावमात्रे सकलात्यंताभावे । अत्यंताभावस्यप्रतियोगीसर्वो



प्यसन्नेव । विद्यमानस्यात्यंताभावायोगादितिभावः । सोपि अत्यंताभावोपि । तच्छब्दार्थं अत्यंताभावशब्दार्थं ॥ ७६६ ॥ अत एवघटादेरत्यंताभावप्रतियोगित्वकथनमयुक्तमित्याह ॥ यइति ॥ सः घटात्यंताभाववादी । सर्वदाऽभावादितिसंबंधः । नचे त्सर्वदाऽभावोनचेत् । शोषयेत् गलंशोषयेत् । कदाचित्क्वचिद्विद्यमानस्याप्यभावस्यात्यंताभावत्वेऽत्यंतपदवैयर्थ्यमितिभावः ॥ ७६७ ॥ नचेत् तत्रात्यंतपदवैयर्थ्यंनचेत् । तस्य शशश्रृंगाद्यत्यंताभावस्य ॥ ७६८ ॥ सर्वाभावेषु प्रागभावप्रध्वंसान्यो

योत्यंताभावमेवाहघटस्यसहिसर्वदा ॥ जलाहरणयोग्यस्याभावाच्छुष्यद्गलोभवेत् ॥ नचेदत्यंतशब्दोयंशोषयेद्बहुजल्पतः ॥ ७६७ ॥ प्रागभावादयोप्यत्यंताभावाःस्युर्नचे त्तव ॥ धर्मीतस्याप्युक्तरीत्यासन्नेवेतिविनिश्चितः ॥ ७६८ ॥ एवंचधर्मिणस्सत्त्वंसर्वाभा वेषुयद्ध्रुवं ॥ अन्योन्याभावरूपोयंभेदोनारोपितेषुतत् ॥७६९॥ वर्तमानःपरंधर्मीभावो स्याभावएववा ॥ सचभावेषुभावात्माह्यभावेषुतदात्मकः ॥७७०॥ पटएवघटोनेतिस मानाधिकृतत्वतः ॥ यतःप्रतीयतेसर्वैस्ततोधर्मिण्यभिन्नता ॥ ७७१ ॥ ॥

न्याभावात्यंताभावेषु । यद्यस्मात् । आरोपितेषु आरोपितचंद्रेषु । सर्वथाऽविद्यमानेष्वितियावत् । तत्तस्मात् ॥ ७६९ ॥ वर्त मानः विद्यमानः । अस्यान्योन्याभावस्य । सः अन्योन्याभावः ॥ ७७० ॥ हीत्यनेनसूचितंहेतुमाह ॥ पटएवेति ॥ समानाधि कृतत्वतः सामानाधिकरण्यादित्यर्थः । ततःसामानाधिकरण्येनप्रतीयमानत्वात् । घटःपटोनेति । अभावःभावोनेतिभावेऽभा

वेचसामानाधिकरण्येनप्रतीयमानत्वात्भावाभावात्मकोन्योन्याभावइतिभावः ॥ ७७१ ॥ नन्वन्योन्याभावस्यभावस्वरूपत्वे भावाभावविरोधशांतिरित्यतआह ॥ भावाभावेति ॥ प्रतियोग्यनुयोगिनोःप्रतियोग्यनुयोगिरूपभावाभावयोरेव । नतुयस्यक स्याप्यभावस्ययेनकेनापिभावेनविरोधइतिभावः । तत्रहेतुमाह ॥ घटाभावइति ॥ हियस्मात् घटाभावःपटवतिभूतलेवर्तते । असौघटाभावःघटवत्येवभूतले न । तस्मात्प्रतियोग्यनुयोगिरूपभावाभावयोरेवविरोधोनतुयस्यकस्याप्यभावस्ययेनकेनापिभावेन ॥ ७७२ ॥ अस्त्वेवं प्रकृतेकिमित्यतआह ॥ एवमिति ॥ एवं पूर्वोक्तघटाभाववत् । अयंघटस्यभेदः घटप्रतियोगिकभेदइत्य

भावाभावविरोधश्चप्रतियोग्यनुयोगिनोः ॥ घटाभावःपटवतिघटवत्येवनह्यसौ ॥ ७७२ ॥ एवंघट
स्यभेदोयंपटेस्तिनघटेपरं ॥ अतस्सिद्धोविरोधोस्मिन्प्रतियोग्यनुयोगिनोः ॥ ७७३ ॥ उक्तप्रत्यक्षबल
तस्सोऽभिन्नस्स्वस्वधर्मिणा ॥ अनवस्थाभियांतेचधर्म्यैक्यंवाच्यमस्यहि ॥ ७७४ ॥ उक्तप्रत्यक्षानुसा
रात्प्रागेवसनिगद्यतां ॥ धर्मित्वादीशक्रुसत्वात्तत्तच्छक्तिविशेषतः ॥ ७७५ ॥ ॥

र्थः । पटेऽस्ति । तस्याप्रतियोगिरूपत्वात्तद्रूपोप्यस्तु । परंकेवलंघटेन । तद्रूपताऽस्माभिरपिनोच्यते । अतः घटभेदस्यप्रतियो गिभूतघटरूपत्वानुक्तेः । अस्मिन्भेदे । प्रतियोग्यनुयोगिनोर्विरोधस्सिद्धः । घटप्रतियोगिकभेदस्यधर्मिभूतपटरूपत्वांगीकारेपिप्र तियोगिभूतघटरूपत्वानंगीकारात्प्रतियोग्यनुयोगिरूपभावाभावविरोधस्यभेदस्थलेपिनकाचित्क्षतिरितिभावः ॥ ७७३ ॥ सः भेदः । अस्यभेदस्य ॥ ७७४ ॥ सः धर्म्यभेदः । अभेदेकथंधर्मधर्मिभावइत्यतआह ॥ धर्मित्वादीति ॥ आदिपदेनधर्मत्वादि

कंग्राह्यं ॥ ७७५ ॥ एवंतर्हिप्रागभावप्रध्वंसात्यंताभावानामपिप्राभाकररीत्याधर्मिस्वरूपत्वमस्त्वित्यतआह ॥ इहेति ॥ अभावः भिन्नः धर्मिणाभिन्नइत्यर्थः । तत्रहेतुंविशिनष्टि ॥ आधारेति ॥ तेषामभावानां । तत्तस्मात् । इहभूतलेघटोन कपालेघटोन । कालत्रये शशशृंगंनेत्यभावत्रयस्यापिस्वधर्मिभिर्भेदसापेक्षाधाराधेयभावस्यैवप्रतीतत्वेनाभेदबाधकसद्भावात्साधकाभावाच्चधर्म्यभेदोनांगीक्रियतइतिभावः ॥ ७७६ ॥ पूर्वंप्रसक्त्यभावात्धर्म्यभेदायोगात्धर्मिसत्त्वासंभवाच्चशशविषाणादौनान्योन्याभावइत्यु

इहनेतिप्रतीतस्तुभिन्नोऽभावस्त्रिरूपवान् ॥ आधाराधेयभावोहितेषांधर्मिषुदृश्य
ते ॥ धर्म्यभेदेतुमानंनतद्भिन्नास्स्वस्वधर्मिभिः ॥ ७७६ ॥ एकाभावेत्वभावोन्यो
मृतमारणमेवहि ॥ ७७७ ॥ अन्योन्याभावएवैकोवर्तमानेषुवस्तुषु ॥ नप्रध्वंसः
प्रागभावोनात्यंताभावएववा ॥ ७७८ ॥ इहभूमौघटोनेतियोनिषेधःप्रतीयते ॥
सतत्संसर्गनाशोवातस्यप्राङ्नास्तितैववा ॥ ७७९ ॥ ॥ ॥

क्तं । अधुनाऽभावस्याभावांतरासहत्वाच्चात्यंताभावप्रतियोगिनितस्मिन्नान्योन्याभावइत्याह ॥ एकाभावइति ॥७७७॥ तदेव विशदयति ॥ अन्योन्याभावइति ॥ ७७८ ॥ नन्विहभूतलेघटोनास्तीतिवर्तमानघटस्यैवाभावांतरप्रतीतेरुक्तमयुक्तमित्यतआह ॥ इहभूमाविति ॥ सः अभावः । तस्य घटस्यसंसर्गनाशः तत्संसर्गनाशः । तस्य तत्संसर्गस्य । प्राङ्नास्तिता प्रागभावः

॥ ७७९ ॥ यत्रकाश्यादौ । ननुघटोनेतिप्रतीयमानोऽभावःकथंतत्संसर्गाभावस्यादितिचेत् न । तार्किकेणापिघटात्यंताभावाभिमतघटाभावस्यसंसर्गाभावत्वेनव्यवह्रियमाणत्वात् । युक्त्यंतरंचाह ॥ योघटइति ॥ सएवकथंनास्तीतिसंबंधः । तत् घटोस्तिघटोनास्तीत्येतत् । प्रागभावप्रध्वंसात्यंताभावेषुघटादिप्रतियोगिनएवाभावात्घटाद्यभावत्वंवक्तुंशक्यं । इहतुप्रतियोग्यभिमतघटस्यविद्यमानत्वात्कथंतदभावोवक्तव्यः । एकेनैवाकारेणैकदाभावाभावयोरेकत्रविरुद्धत्वात् । विद्यमानत्वादेवविद्यमानेघटेप्रागभावप्रध्वंसयोरयोगात्घटस्वरूपेणभावो रूपांतरेणैवचाभावोवाच्यः । किंचशशविषाणवदत्यंताभावायोगात्इहघटोनेतिप्रतीतस्यतस्याभावस्यान्योन्याभांवत्वायोगाच्चपरिशेषेणघटसंसर्गस्यैवाभावोवक्तव्यः । घटसंसर्गेतु घटस्यपश्चादानयनेप्रागभावस्य

संसर्गोयत्रनैवस्यात्तत्रत्वत्यंतनास्तिता ॥ योघटोस्तिकथंनास्तिसएवव्याहतं(हि)चतत् ॥ ७८० ॥

अन्यत्रापसरणेप्रध्वंसस्य सर्वथाऽसंबंधेऽत्यंताभावस्यचवक्तुंशक्यत्वात् । कथंतर्हिघटःपटोनेत्यत्रपटतादात्म्यस्यविद्यमानस्यैवघटेऽभावइतिचेत् । न । तत्रापिपटतादात्म्यसंबंधस्यैवघटेनिषेधात् । सचनास्त्येवेतिकथंविद्यमानस्याभावः । ननुतर्ह्ययमप्यत्यंताभावएवास्त्विवतिचेत् । न । नियमेनघटःपटइतिसमानाधिकरणपदद्वयार्थतयाप्राप्ततादात्म्यंप्राक्प्रसज्यनेतितत्तादात्म्यसंसर्गनिषेधरूपत्वाख्येनात्यंताभाववैलक्षण्येनान्योन्याभावत्वस्यैवन्याय्यत्वात् । घटेपटतादात्म्यंनेत्यत्रतुपटतादात्म्यपदेनतादात्म्यस्यप्रसक्तावपिपदद्वयसामानाधिकरण्यार्थतयाप्राप्ततादात्म्यप्रसक्त्यभावेनान्योन्याभावत्वायोगात् । शशशृंगंनेतिवत् तादात्म्यं



नेत्याकारेणयत्रतादात्म्यंनिषिद्ध्यतेसोत्यंताभावः । अनीदृशाकारेणयत्रतादात्म्यंनिषिद्ध्यतेसोन्योन्याभावइतिविवेकः । अतएवायमभावः घटःपटोन पटोघटोनेत्येवमाकारेणप्रतीयते । अत्यंताभावस्तुशशशृंगंनेत्येव । नतुशशशृंगमिदंनेति ॥ ७८० ॥ ननुघटोनास्तीत्यभावोघटसंसर्गाभावश्चेत्संसर्गोनास्तीतियोभावःप्रतीयते सकस्येत्यतआह ॥ संसर्गइति ॥ तत्संबंधस्य संसर्गसंबंधस्य । एवंचैतद्भूतलघटसंसर्गःकाश्यांनास्तीतियोभावःप्रतीयते । सोप्येतद्भूतलघटसंसर्गस्ययःकाशीसंसर्गःतस्यैव । सचनास्त्येवेतिनक्कापिप्रामाणिकस्यात्यंताभावप्रतियोगितेत्याह ॥ काश्यामिति ॥ अस्य एतद्भूतलघटसंसर्गस्य ॥ ७८१ ॥ घटसंसर्गवत्

संसर्गोनेत्यभावस्तुतत्संबंधस्यनास्तिता ॥ काश्यामयंचसंसर्गोनेतिचास्यनिषेधनं ॥ ७८१ ॥
घटसंसर्गवत्संसर्गस्यसंसर्गनास्तिता ॥ सचाप्रामाणिकस्तस्यह्यत्यंताभावएवसः ॥ ७८२ ॥
प्रामाणिकस्यप्रागूर्ध्वंप्रागभावविनाशने ॥ वर्तमानत्वसमयेत्वन्वोन्याभावएवहि ॥ ७८३ ॥

यथाघटोनास्तीत्युक्तेघटसंसर्गस्यैवनिषेधस्तद्वत्काश्यामेतद्भूतलघटसंसर्गोनास्तीत्युक्तेपि संसर्गस्य एतद्भूतलघटसंसर्गस्ययःकाशीसंसर्गः तन्नास्तितेत्यर्थः । सः एतद्भूतलघटसंसर्गस्यकाशीसंसर्गः । तस्य संसर्गसंसर्गस्य । सःअभावः ॥ ७८२ ॥ तर्हिप्रामाणिस्यकोभावइत्यतआह ॥ प्रामाणिकस्येति ॥ प्राक् उत्पत्तेःप्राक् । ऊर्ध्ववर्तमानत्वादूर्ध्वं । प्राक्प्रागभावप्रतियोगित्वं ऊर्ध्वंप्रध्वंसप्रतियोगित्वमित्यर्थः । वर्तमानत्वसमयेतयोरभावयोरभावात्सतएवसदंतरभेदसद्भावात्एकनिष्ठभेदप्रतियोगित्वमन्यस्ये

त्यर्थः ॥ ७८३ ॥ तर्हिप्रागभावदशायांभेदाभावात्अभूतादभूतांतरस्यतादात्म्यंस्यादित्यतआह ॥ अभूतइति ॥ अभूतेघटे । असौप्रागभावः । तदा अभूतत्वदशायां । अतः तादात्म्यस्यापिप्रागभावात् । विरोधिभूतभेदाभावेपिप्रागभावाख्यविरोधिसद्भावात् । अभूतेघटे । नैव । अभूततादात्म्यमपिनशंकितुंशक्यमेवेतिभावः ॥ ७८४ ॥ अन्यः अभावः । प्रागभावान्योन्याभावादिः । लीनान्यैक्यं लीनस्य ध्वस्तस्यान्यस्यपदार्थस्यैक्यमित्यर्थः । तस्यलीनपदार्थांतरस्य । युक्तिस्तुपूर्ववदेवद्रष्टव्या ॥७८५॥

अभूतेप्रागभावोस्तितादात्म्यस्याप्यसौतदा ॥ अतस्तदात्मतान्यस्मिन्नभूतेनैवशंक्यते ॥७८४॥ ध्वस्तेतुध्वंसएवास्तिनान्योऽभावस्तुकश्चन ॥ तादात्म्यस्यापिनाशेनलीनान्यैक्यंचतस्यन ॥ ७८५ ॥ वर्तमानेतुभेदोस्तिततोनान्योन्यमेकता ॥ अत्यंताभावएवास्तितथात्यंतासतोपिहि ॥७८६॥ तत्तादात्म्यंहितन्मात्रंतस्याप्यत्यंतनास्तिता ॥ तेष्वन्योन्यंभेदकथातादात्म्यस्याप्यसत्त्वतः ॥ ७८७॥ तादात्म्याभावधीस्तस्यह्यत्यंताभावतस्तदा ॥ अतोभेदव्यवहृतिस्तत्रतत्रतथातथा ॥ सतितद्भेदसद्भावात्तेषुतद्भिन्नतावचः ॥ ७८८ ॥

ततः भेदसद्भावात् ॥ ७८६ ॥ तत्तादात्म्यं तस्यशशशृंगादेस्तादात्म्यं तन्मात्रंशशशृंगाद्यात्मकमेव । तस्यापि । तत्तादात्म्यस्यापि । तेषु शशशृंगादिषु । भेदकथा उक्तरीत्याभेदाभावेपिभेदवार्ता । असत्त्वतः अत्यंताभावात् ॥ ७८७ ॥ तस्य तादात्म्यस्य । हियस्मात् । अतः तादात्म्यस्याप्यत्यंतासत्त्वात् । तद्भेदसद्भावात् तस्मादसतः भेदसद्भावात् । तेषु सत्सु ॥ ७८८ ॥

सिंहावलोकनन्यायेनपुनरसत्सुभेदकथायायुक्त्यंतरंचाह ॥ यथाकथंचिदिति ॥ वैसादृश्यात् शशशृंग नरशृंगादिविलक्षणप दैर्व्यवह्रियमाणत्वात् । भिन्नभिन्नाभावप्रतियोगित्वाद्वा । तेषु शशशृंगनरशृंगादिषु । तेषु असत्सु ॥ ७८९ ॥ ननुतादात्म्यप्र तियोगिकाभावएवभेदइत्युच्यते । सचप्रागभावादिकमादायातीतादिष्वपिभवद्भिरेवांगीकृतः । तथापिभेदोनास्तीत्यस्यकोभिप्राय इत्यतआह ॥ तादात्म्यस्येति ॥ तादात्म्यस्येतिविशेषणंप्रागभावादिविशेष्यत्रयेपिसंबध्यते । आदिपदेनप्रध्वंसात्यंताभावग्रो

यथाकथंचिद्वैसादृश्याद्वातेष्वपिभेदवाक् ॥ धर्म्यभावेनतेष्वन्योन्याभावस्याप्यसंभवात् ॥७८९॥ तादात्म्य स्यप्रागभावोनाशोत्यंतनिषेधनं ॥ ऐक्यस्यप्रागभावादिर्नभेदस्त्रितयंचतत् ॥ ७९० ॥ घटेसतिपटादीनांता दात्म्यंयन्निषिध्यते ॥ घटःपटोनभवतिपटोनघटइत्यपि ॥ सएवभेदनामायमन्योन्याभावइष्यते ॥ ७९१ ॥ नास्तितादात्म्यमितितुप्रागभावादिरीर्यते ॥ अन्योन्याभावभेदस्तद्वर्तमानेषुकेवलं ॥ ७९२ ॥ ॥

ग्रहणं । तत्त्रितयंच तादात्म्यप्रागभावादित्रितयंचनभेदइतियोजना ॥ ७९० ॥ तर्हिभेदःकइत्यतःप्रागुक्तंभेदमेवपुनस्स्मारयति ॥ घटेसतीति ॥ यत्तादात्म्यं घटःपटोन पटोघटोनेत्याद्याकारेण सतिघटेपटादीनांनिषिध्यते । सः एतादृशतादात्म्यनिषेध एव । एवपदेनेहतादात्म्यंनाभूत् इहतादात्म्यंध्वस्तं इहतादात्म्यंकदापिनास्तीत्याकारकतादात्म्यनिषेधत्रयंव्यवच्छिनत्ति । अयं अयमेव ॥ ७९१ ॥ व्यवच्छेद्यमेवसामान्यतोदर्शयति ॥ नास्तीति ॥ तत्तस्मात् अतीतादिषुभेदप्रतीत्यभावात् ॥ ७९२ ॥

अतः एकाभावस्थलेऽभावांतराभावात् । अतिदुष्टः अन्यनिषेधरूपत्वादतिक्रूरः । अतिदुष्टत्वमेवोपपादयति ॥ स्वगोत्रेति ॥ अभावस्याभावांतरासहिष्णुत्वात्स्वगोत्रकलहप्रियइत्यर्थः । भावनिषेधेनपरगोत्रकलहात्अभावांतरासहिष्णुत्वेनस्वगोत्रकलहाच्चा तिदुष्टइतिभावः । तत्रविशेषमाह ॥ धर्मिणीति ॥ एकः अन्योन्याभावः । धर्मिणिधर्मिण्येव । नतुस्वप्रतियोगिनि । अन्यो न्याभावप्रतियोगिनिशशविषाणादावत्यंताभावप्रतियोगित्वस्यापिविद्यमानत्वात् । एकाकी स्वधर्मितादशायांतस्यप्रागभावादिक मसहमानइत्यर्थः । तेत्रयः प्रागभावप्रध्वंसात्यंताभावाः । प्रतियोगिनि स्वस्वप्रतियोगिन्येवएकाकिनः । स्वप्रतियोगितादशाया

अतोऽभावोतिदुष्टोयंस्वगोत्रकलहप्रियः ॥ धर्मिण्येकस्सदैकाकीप्रतियोगि(नि)षुतेत्रयः ॥ ७९३ ॥
भावाभावस्वरूपत्वान्नान्योन्याभावतापृथक् ॥ इतितत्वविवेकंतत्कुर्वन्गुर्वग्रणीर्मम ॥ ७९४ ॥ ॥

मभावांतरप्रतियोगित्वमसहमानाइत्यर्थः । स्वगृहेऽन्यमसहमानोलुब्धइवैकएकाकी । अपरेतुस्वमारितेशत्रौमारकांतरमसहमा नावीरभटाइवैकाकिनइतिभावः ॥ ७९३ ॥ उक्ताभावव्यवस्थाकल्पनायाःकिंमूलमित्यतस्तद्दर्शयति ॥ भावाभावेति ॥ ननुस र्वजनप्रसिद्धमन्योन्याभावपदंविहायान्योन्याभावतापदेनकुतोन्योन्याभावस्यग्रहणमितिचेत् । सत्यं । अयमभिसंधिर्ग्रंथकारस्य। भावाभावस्वरूपत्वादितिपूर्ववाक्येभावपदेनभवतीतिकर्तृव्युत्पत्त्याघटपटादयोभावागृहीताः । अतःप्राक्प्रस्तुतांतामेवव्युत्पत्तिं मनसिनिधायप्रयोगकौशलंचविदुषामुपदिशन्नाचार्यः अन्योन्यंनभवतइत्यन्योन्याभावौ घटपटौ तयोर्भावोन्योन्याभावतेतित



ल्प्रत्ययांतपदेनान्योन्याभावमभ्यधादिति । वक्तुर्विवक्षापूर्विकाशब्दप्रवृत्तिरितिहिप्राचांवाचः । तत्तस्मात् । तमेवहेतुंविशिनष्टि ॥ भावाभावेष्विति ॥ ताद्रूप्यात् तद्रूपत्वात् । भावाभावाभिन्नत्वादित्यर्थः । असतिशशविषाणादौ । अवर्तनात् । उक्त रीत्याऽभावादित्यर्थः । असतिअन्योन्याभावस्यवर्तनेहिसतोस्यतद्रूपायोगेनपृथग्गणनास्यात् । तत्रच उक्तरीत्याऽवर्तने अन्य त्रचतद्रूपत्वेकिंपृथग्गणनयेतिनपृथगुक्तवानितिभावः ॥ ७९४ ॥ ७९५ ॥ प्रकृतमनुसरति ॥ तस्मादिति ॥ तस्मा दसतिभेद

अन्योन्याभावाभिधानंतत्वंनपृथगुक्तवान् ॥ भावाभावेषुताद्रूप्याद्भेदस्यासत्यवर्तनात् ॥७९५॥ तस्मात्सा धनवैकल्यमस्मिन्पक्षेदृढंविदां ॥७९६॥ किंचारोपितरूप्येषुरूप्यत्वंकस्यसंमतं ॥ अतआरोपितोभेदोनभेद स्सर्ववादिनां ॥ ७९७ ॥ अनारोपितभेदस्तुसत्यएवाखिलस्ततः ॥ साध्यसाधनवैकल्यशल्यमुद्ध्रियतेकथं ॥ ७९८ ॥ अतस्त्वैषदृष्टांतोनाम्नादृष्टांतएवहि ॥ यतोद्वेधापिदृष्टांतस्सवैरस्यमनीषिभिः ॥७९९॥ ॥

स्याविद्यमानत्वेनतद्भेदेभेदत्वस्यसुतरामविद्यमानत्वात् । अस्मिन्पक्षे आरोपितचंद्राणामेवभेदइतिपक्षे ॥ ७९६ ॥ प्रागुक्तंसुल भंपक्षंबहुचर्चायामसमर्थस्यापिमंदस्योपकारायसिंहावलोकनन्यायेनपुनस्स्मारयन्भेदत्वानुमानदूषणमुपसंहरति ॥ किंचेति ॥ व्याख्यातप्रायमेतत् । ततः एकत्रसाधनवैकल्यात् । अपरत्रसाध्यवैकल्यात् ॥ ७९७ ॥ ७९८ ॥ नाम्नानाममात्रेणनत्वर्थतः । दृष्टोऽतस्साध्यसाधनयोरध्यवसायोयत्रेत्यस्यार्थस्यात्राभावात् । कथंतर्हिदृष्टांतनामापीत्यतआह ॥ यतइति ॥ द्वेधा आरोपि

तानारोपितपक्षयोःअंतोनाशः । अस्यत्वदभिलषितार्थस्य । अनुकूलार्थाभावेपिप्रतिकूलमिममर्थमादायदृष्टांतनाममात्रंघटतइति भावः ॥ ७९९ ॥ अधुना विमताआत्मानःपरमात्मनस्तत्वतोनभिद्यंते आत्मत्वात्परमात्मवदित्यनुमानंकिंचिदनुवदन्नाभाससमा नयोगक्षेमतयादूषयति ॥ आत्मत्वादिति ॥ अस्तुतर्हीदमप्यनुमानमित्यतआह ॥ अतइति ॥ ८०० ॥ परानुमानस्यात्यप्रा माणिकत्वसूचनायबह्वाभाससाम्यमाह ॥ पशुत्वादित्यादिना ॥ अथघापूर्वानुमानेनपरस्यमातृगमनाख्यमहापातकमुक्तं तेन

आत्मत्वात्परमात्मेवयद्यात्मायंमतेतव ॥ नारीत्वात्तर्हिभार्यैवतेमातास्यात्तथैवहि ॥ अतस्त्वंमातृ गमनीत्युपेक्ष्यःप्रतिवादिनां ॥८००॥ पशुत्वाद्गौश्शुनीतेस्याद्वस्तुत्वादन्नमेवहि ॥ अशुद्धंस्याद्घटोपि स्यात्पटोद्रव्यत्वतस्तव ॥ ८०१ ॥ आभासोपमहेतूनांतन्मुख्येयमुदाहृतिः ॥ अतोनुमानतोप्यै क्यंनसिद्ध्येत्प्रतिवादिनां ॥८०२॥ यतोनुमाततोप्यक्षागमावन्वेवसाभवेत् ॥ ८०३ ॥ ॥

लज्जावांश्चेत्परदेशमेवगच्छेत् । तथापिनिर्लज्जतयागृहंनत्यजतिचेत्क्षीरपानान्नभोजनजलपानानामभावेनमरणंस्यादित्युत्तरानुमा नैराह ॥ ८०१ ॥ तत्तस्मात् । आभासपङ्क्तिपतितत्वात् । इयंत्वदनुमा । उदाहृतिरुदाहरणंनिदर्शनमित्यर्थः । अतः उक्त विधयाऽनुमानानामाभासत्वात् ॥ ८०२ ॥ उक्तानुक्तपरकीयसर्वानुमानसाधारणदूषणमाह ॥ यतइति ॥ अनुमा प्रमाणांतर मनुसृत्यैवप्रमाणमित्यर्थः । ततस्तस्मात्कारणात् । साऽनुमा । त्वदभिलषितानुमानजातंचसर्वं द्वासुपर्णेत्यादिनिरवकाशश्रुत्यन

नुसारित्व।न्नाहंसर्वज्ञइत्यादिप्रत्यक्षाननुसारित्वाच्चानुमानपदयोग्यमपिनभवतीतिभावः ॥ ८०३ ॥ उभयवादिसंप्रतिपत्त्याप्यै
क्येमानंनास्तीत्याह ॥ **मानानामेवेति** ॥ सर्वमिथ्यात्ववादिनस्तवमतेऐक्यवाक्यानांसर्वेषामपिसुतरांत्रिकालनास्तित्वापरपर्या
यमिथ्यात्वात्मिथ्यात्वांगीकारात् ऐक्येमानंन । ममतुमते ऐदंपर्यमात्रमिथ्यात्वात् इदमैक्यं परंतात्पर्यविषयोयस्यतत् इदं
परं तस्यभावःऐदंपर्यंतात्पर्यमित्यर्थः । तन्मात्रमिथ्यात्वात् सर्वसत्यत्ववादिनोपिममतेएतावन्मात्रमिथ्यात्वस्यसंमतत्वादित्य

**मानानामेवमिथ्यात्वादैक्येमानंनतेमते ॥ ममत्वैदंपर्यमात्रेमिथ्यात्वात्तानितत्रन ॥ ८०४ ॥ विमतौजीव
परमौविरुद्धगुणवत्त्वतः ॥ अभिन्नौनैवतुहिनदहनाविवसर्वदा ॥ सर्वानुभवसिद्धेयमनुमाभेदसाधिका
॥ ८०५ ॥ नाहंसर्वज्ञइत्यादिसाक्षिप्रत्यक्षमस्तिहि ॥ जीवेशभेदेसर्वेषांवेदस्तूक्तःपदेपदे ॥ ८०६ ॥ अत
स्त्रिमार्गगामित्वाद्भेदोगंगेवसेश्वरैः ॥ धार्येयंशिरसासर्वैःपुनातिचजगत्त्रयं ॥ ८०७ ॥ ॥**

र्थः । तानि ऐक्यवाक्यानि । तत्र ऐक्ये । न प्रमाणंन । एवंचोभयवादिसंप्रतिपत्त्याऐक्येप्रमाणाभावात्मातापितृरहितपुत्रग
र्भवत्गर्भस्रावात्प्रागेवतवैक्याख्यशिशुःअभावमापेतिभावः ॥ ८०४ ॥ स्वमतेऽनुमानप्रत्यक्षागमान्दर्शयति ॥ विमताविल्या
दिना ॥ व्यावहारिकभेदमादायसिद्धसाधनतामाभूदितिसर्वदाऽभिन्नौनेत्युक्तं । आवयोर्मतेदहनतुहिनयोस्सर्वदाप्यभेदाभाव
स्यसंप्रतिपन्नत्वात्दृष्टांतश्चनसाध्यविकलः ॥ ८०५ ॥ सर्वेषांसाक्षिप्रत्यक्षमितिसंबंधः ॥ ८०६ ॥ अतः प्रमाणत्रयानुसारित्वात्

॥ ८०७ ॥ अधुना । उच्चस्यनीचता पापफलमेव । पापंच स्मरणमात्रात्सर्वेषांपापहारिणि सकलपापहरगंगाजनकचरणेसर्वज्ञे नारायणेमनसापिस्मर्तुंनशक्यते । अतस्तस्यनीचजीवत्वंकथंस्यादितिस्वोक्तानुमानस्यानुग्राहकतर्कंप्रपंचयति ॥ देवानामित्यादिना ॥ तन्मूलपापाद्यै श्शापकारणीभूतपापाद्यैः । विदुरभीष्मादिषुतथाश्रवणात् ॥ ८०८ ॥ ८०९ ॥ तस्मादुक्तन्यायात् । सा नीचयोनिः । स्मृत्यादीनां चंडालाःकोटिजन्मसु । विष्ठायांजायतेक्रिमिरित्यादिस्मृत्यादीनां । आदिपदेनपुराणादिकंगृह्य

देवानांकिलमानुष्यंनाज्ञानेनैवकेवलं ॥ किंतुशापेनतन्मूलपापाद्यैर्वाभवेद्भुवि ॥ ८०८ ॥
विप्राणामंत्यजत्वंचमहापापफलंकिल ॥ अंत्यजानांचविष्ठायांक्रिमितापापतःकिल ॥ ८०९ ॥
तस्मादुच्चस्यनीचत्वप्राप्तिःपापेनकेवलं ॥ अज्ञानमात्रतस्साचेत्स्मृत्यादीनामपार्थता ॥ ८१० ॥
एवंसतिश्वचंडालपशुपक्ष्यादियोनिषु ॥ अनादिकालतोभूत्वासदासर्वत्रसंसरेत् ॥ ८११ ॥

ते । किंचेंद्रद्युम्नस्यागस्त्यहेलनरूपपापेनगजत्वप्राप्तिदर्शनात् नारदावज्ञानेननलकूबरमणिग्रीवयोर्वृक्षत्वप्राप्तिदर्शनात् अहल्यायाश्चपरपुरुषपरिग्रहरूपपापेनशिलात्वदर्शनाच्च ज्ञानिनोऽज्ञानित्वमपिमहापापफलं । तस्मात्पापाभावेप्यज्ञानादेवनीचयोनिप्राप्तिरित्यपिरिक्तंवचः ॥ ८१० ॥ बहुदुष्कर्माण्येवविण्मयार्णवोविष्ठामयसमुद्रः । तत्रमज्जितं । तेब्रह्मतवैवपरब्रह्मस्यात् । तदेव तद्ब्रह्मैवत्वमसि उक्तविधयाऽनादिकालमारभ्यपापाविलस्यतस्यब्रह्मता आग्रहमात्रात् । जीवचैतन्यमेवतत् । तस्यचजीवाभेदोयुक्त



एवेतिभावः ॥ ८११ ॥ ८१२ ॥ विग्रहेपीतिसंबंधः । चित्सुखसंपूर्णं निरवधिकज्ञानसुखसंपूर्णं । चित्सुखसंपूर्णमित्यादिविशेषणं मत्स्यकूर्मादिहीनयोनिष्ववतरणमपिनपापात् । तत्रापिज्ञानानंदबलादिशुभगुणभरितस्यवेदवेदांगपारगस्यब्रह्मादीनांचगुरोः पापासंभवात् । अतींद्रियंहिपापं दुःखाज्ञानादिफलबलोन्नेयं । तदभावेतस्याप्यभावनियमात् । किंत्वानंदोद्रेकाद्वा देवादिषुकृ

तेब्रह्म बहुदुष्कर्मविण्मयार्णवमज्जितं ॥ परंब्रह्मतवैवस्यात्तदेवत्वंनसंशयः ॥ ८१२ ॥
अस्मद्ब्रह्महयग्रीवमत्स्यकूर्मादिविग्रहे ॥ अपिचित्सुखसंपूर्णंसहस्रार्कसमप्रभं
॥ ८१३ ॥ अनंतवेदवेदांगपुराणस्मृतिपारगं ॥ चतुर्मुखाद्यैराराध्यंतेषांविद्योपदेष्टृच ॥ ८१४ ॥ यन्मंत्रोपिचमर्त्यानांविद्यासिद्ध्यैनियुज्यते ॥ यद्भक्त्यामुच्यते
जंतुर्यस्यमातापितानच ॥८१५॥ यत्कृपावीक्षणात्सद्योमुक्तोनिष्पापतामियात् ॥
अवद्यगंधविधुरंपरक्लेशविमोचनं ॥ ८१६ ॥ ॥ ॥

पयावादैत्यहननाख्यलीलार्थंवेतिसूचनाय अनीदृशीषु तवब्रह्मणःदुःखाज्ञाननरकयातनादिपापफलभोक्तृजीवात्मकप्रागुक्तहीनयोनिषुप्राप्तिःपापादेवेतिसूचनायच ॥ ८१३ ॥ ८१४ ॥ यन्मंत्रः येषांहयग्रीवादीनांमंत्रः । यस्य हयग्रीवमत्स्यकूर्मनरसिंहादिरूपिणः । इदमपिहरेःपापनिमित्तयोनित्वाभावसूचनार्थं । पापजपश्वादियोनिषुमातृपितृसाहित्यनियमस्यैवदर्शनात् ॥ ८१५ ॥

॥ ८१६ ॥ ततः हयग्रीवादिरूपान्नारायणात् ॥ ८१७ ॥ स्वधर्मनिष्ठश्शतजन्मभिः पुमान्विरिंचतामेतीतिस्मृतेः विदेहिरुद्रो रुद्रियंमहित्वमितिश्रुतेश्चयद्दास्यंचतपःफलमित्यर्थः । नन्वैक्याभावेब्रह्मभावायकल्पतइत्यादिवाक्यानांकागतिरित्यतआह ॥ तद्भक्तीति ॥ तस्यहरेर्भक्तिरूपभावः । तद्भावस्तत्त्वं । भावोभक्तिरितिस्मृतइतिवचनात् भावनैवभक्तिरितिव्युत्पत्त्याचभावपदस्यभक्त्यर्थकत्वात् ब्रह्मणोभावायभक्त्यैकल्पतइत्येववाक्यार्थः । ब्रह्मत्वंप्राप्नोतीत्यर्थस्तूक्तभगवन्महिमविरुद्धत्वात्अयुक्तएव

अनंतरूपेष्वप्येवंयस्यशक्तिरनंतधा ॥ ततोधिकंपरंब्रह्मकिंस्याद्वदविवेकिनां
॥ ८१७ ॥ ब्रह्माद्योपियद्दासायद्दास्यंचतपःफलं ॥ तद्भक्तिरूपभावस्यात्तद्भा
वस्तुनकस्यचित् ॥ ८१८ ॥ नयत्रमायेतिगिरामायायाभगवत्पदे ॥ सामान्यतो
निषेधेनमायालेशोपिनेष्यते ॥ ८१९ ॥ ॥ ॥

॥ ८१८ ॥ अधुना नयत्रमायाकिमुतापरेहेरेरनुव्रतायत्रसुरासुरार्चिताः । श्यामावदाताश्शतपत्रलोचनाःपिशंगवस्त्रास्सुरुचस्सुपेशसइतिभागवतस्थवैकुंठवर्णनवाक्येन यत्रमायानेतिसामान्यतोमायांनिषिध्य मायाभावे तत्रापरे मायानिमित्तसत्त्वरजस्तमोगुणादयःनेतिकिमुत किंवक्तव्यमितिमायाभावेकैमुत्याख्ययुक्तिंचोक्त्वा हरेरनुव्रतायत्रेत्यादिवाक्यशेषेणहरिभक्तानांमुक्तानांस ॥ ३४६ ॥ विस्तरंवर्णितत्वात् मायानिवृत्तिकालीनोमौक्तभेदोयंपारमार्थिकएव नव्यावहारिकइत्याह ॥नयत्रेति॥ भगवत्पदे वैकुंठे ॥८१९॥

सामान्यनिषेधेपिकुतोमायालेशोपिनेष्यतइत्यतोयुक्तिमाह ॥ सत्येकस्मिन्निति ॥ अतः प्रतियोगितावच्छेदकावच्छिन्नयत्किंचि त्सद्भावेसामान्यनिषेधस्यक्काप्यदर्शनात् । नशेषभाक् । नावशिष्यतइत्यर्थः ॥ ८२० ॥ अत्रघटोनेतिवत् यत्रमायानेतिनिषेध श्चसामान्यनिषेधएवेत्याह ॥ मायेति ॥ मुख्यानिर्मायता मायालेशस्याप्यभावरूपनिर्मायता । अतोमुख्यार्थपरित्यागेनकारणा भावमात्रं किंतुबाधकमप्यस्तीतिभावः । भगवतोनिर्मायत्वंच नयत्रश्रूयतेमायालोकदृष्टिविकल्पनेत्यादिप्रागुक्तवाक्यैरेवसिद्धं

सत्येकस्मिन्नपिघटेघटोनास्तीतिधीर्नहि ॥ अतस्सामान्यतोऽभावेप्रतियोगीनशेषभाक्
॥८२० ॥ मायानेतिनिषेधोयंसामान्याभावएवहि ॥ मुख्यस्यबाधनेहिस्यादमुख्योर्थोन
चान्यथा ॥ निर्मायभगवल्लोकेमुख्यानिर्मायतोचिता ॥ ८२१ ॥ नयत्रसत्त्वमित्यादिनो
क्तमायाफलात्यये ॥ कैमुत्यायोदितोमायाभावोयंमुख्यएवहि ॥ ८२२ ॥ नचेत्तत्कार्य
कामादीन्कैमुत्येनकथंक्षिपेत् ॥ किमुतापरइत्यत्रयतोहेतोरसिद्धता ॥ ८२३ ॥ ॥

॥ ८२१ ॥ कैमुत्याख्ययुक्त्याचमुख्यार्थएवग्राह्यइत्याह ॥ नयत्रेति ॥ ८२२ ॥ नचे न्निर्मायत्वंमुख्यंनचेत् । ईषन्मायालेश स्यावशेषेतत्कार्यसत्त्वादेरपीषदवशेषावश्यंभावान्नेतिकिंवक्तव्यमितिकथंकैमुत्येनफलनिषेधंकुर्यात् । सहिअस्मिन्विप्रग्रामेशूद्रानै वसंतीत्युक्तेचंडालानसंतीतिकिंवक्तव्यमित्यादाविवसर्वथानिषेध्याभावएवयुक्तइतिभावः । युक्त्यंतरंचाह ॥ किमुतेति ॥ इत्यत्र

साध्ये । हेतोः निर्मायत्वरूपहेतोः । द्रव्यत्वाभावसाधकतयाप्रयुक्तनिर्गुणत्वहेतौगुणलेशस्याप्यवशेषेऽसिद्धिवन्मायालेशस्याप्य
वशेषेनिर्मायत्वहेतोरसिद्धिस्स्यादितिभावः ॥ ८२३ ॥ तत्रापि निर्मायभगवल्लोकेपि ॥ ८२४ ॥ अतः निर्मायलोकवर्तित्वात् ।
भेदाकारादिसंपदि । भेदोजीवभगवद्भेदः आकारोहस्तपादादिः । आदिपदेनाभरणादिकंगृह्यते । परमार्थतस्सत्त्वंचेतिसंबंधः

हरेरनुव्रताएवतत्रापिकिलचेतनाः ॥ सर्वेचतुर्भुजाभिन्नाहरिणाचपरस्परं ॥ ८२४ ॥ अतो
भगवतोलोकेभेदाकारादिसंपदि ॥ जीवानांचमिथोभेदेजीवबाहुल्यएवच ॥ सिद्धंमायाति
दूरत्वंसत्त्वंचपरमार्थतः ॥ ८२५ ॥ तस्मात्परममोक्षत्वंवैकुंठादिपुरत्रये ॥ अव्यावहारिकंभे
दंप्राहभागवतेशुकः ॥ ८२६ ॥ अतोजीवेशभेदाद्यमभेद्यंसर्ववादिनां ॥ मायायंनास्पृशत्तंतु
कोन्योमायावशस्स्पृशेत् ॥ ८२७ ॥ विमतोजीवपरयोर्भेदोयंपरमार्थसन् ॥ अविद्यास्तमयेस
त्वाद्यथात्मेत्यनुमानतः ॥ सत्यभेदोपिसंसिद्ध्येद्धेतोरागमिकत्वतः ॥ ८२८ ॥ ॥

॥ ८२५ ॥ तस्माल्लोकस्यनिर्मायत्वात् । वैकुंठादिपुरत्रयेपरममोक्षत्वमितिसंबंधः । वैकुंठादिपुरत्रयस्यैवपरममोक्षत्वमितियावत् ।
मायात्ययस्थलस्यैवपरममोक्षत्वादितिभावः ॥ ८२६ ॥ उपसंहरति ॥ अतइति ॥ अमायामयत्वादित्यर्थः । आद्यपदेनाकारा
दिकंगृह्यते । यंभेदं मायावशः मायाधीनोवादी ॥ ८२७ ॥ भेदेऽनुमानमुक्त्वाभेदसत्यत्वेप्यनुमानमाह ॥ विमतइति ॥



असिद्धिंपरिहरति ॥ हेतोरिति ॥ ८२८ ॥ आगमिकमनुमानांतरंचवक्तुंपीठमाचरति ॥ नवैसइति ॥ ८२९ ॥ अनुमानप्रयो
गंदर्शयति ॥ ब्रह्मचिदिति ॥ जीवचिन्नैवेतिसाध्यं । जीवचिदभिन्नोनैवेत्यर्थः । सदादुःखाभोक्तृत्वात् । कदाचिद्दुःखाभोक्तृ
त्वंजीवचितोप्यस्तीत्यतोव्यभिचारपरिहारायसदेत्युक्तं । हेतोरसिद्धिपरिहारसूचनायोक्तंस्मृतिमूलेति ॥ ८३० ॥ भेदस्यपारमा
र्थिकत्वेपरप्रक्रिययैवसिद्धमनुमानांतरंचाह ॥ विमतइति ॥ अनादीतिउपरंजकतयाहेतुगर्भपक्षविशेषणं । अस्मन्मतेतुघटपटादि

नवैसआत्मात्मवतामितिवाचयमनुस्मर ॥ योदुःखंनैवभुंक्तेऽसौदुःखीजीवःकथंभवेत् ॥ ८२९ ॥
ब्रह्मचिज्जीवचिन्नैवदुःखाभोक्तृत्वतस्सदा ॥ घटवत्पटवद्धेतिस्मृतिमूलानुमाभवेत् ॥ ८३० ॥ विम
तोनादिजीवेशभेदादिःपरमार्थसत् ॥ अनादित्वाद्यथाब्रह्मेत्यस्तिशास्त्रानुमामम ॥ ८३१ ॥ भेदा
दिषट्कानादित्वंषडस्माकमनादयः ॥ इतिसंजल्पतैवोक्तंत्वयातोनकुतोपिभीः ॥ ८३२ ॥ पूर्वंपूर्वं
विद्यमानेयत्रेदंपूर्वतातुन ॥ षोढानादिंविभजतामनादिरयमेवहि ॥ ८३३ ॥ ॥

भेदेहेतोर्भागासिद्धिपरिहाराय ॥ ८३१ ॥ अतः हेतोःपरमतसिद्धत्वात् ॥ ८३२ ॥ अनादित्वंचनिरवधिकप्राक्कालमारभ्यविद्य
मानत्वमेव नत्वादिराहित्यमात्रं । तथासतिशशश्रृंगादेरप्यनादित्वप्रसंगेनषडस्माकमनादयइतिविभागायोगात् । अतोहेतोर्नैका
पिविपक्षगामित्वं । किंत्वनुकूलतर्कसहितत्वात्प्राबल्यंचास्तीत्याह ॥ पूर्वंपूर्वमिति ॥ आदिराहित्येसतिविद्यमानत्वमनादित्वमि

तिभावः ॥ ८३३ ॥ अन्यानादेः शशशृंगाद्यनादेः । निन्हुतेः त्वयैवनिराकरणादित्यर्थः ॥ ८३४ ॥ कल्पितः अविद्याकल्पितः । तस्मात् भेदस्यप्रबलानेकानुमानसिद्धत्वात् ॥ ८३५ ॥ अधुनाऽद्वैतेपराभिलषितेनानादिमाययेतिवाक्येनैवद्वैतंसाधयति ॥ अनादीत्यादिना ॥ अवशः परवशः । लोकप्रसिद्धजीवपदेनैवोक्तत्वात्सुप्तत्वादेश्चतत्रैवप्रसिद्धत्वात्सुप्रसिद्धइत्युक्तं । कश्चन

सपक्षपक्षगोहेतुर्यतोयंनविपक्षगः ॥ षण्णामक्षुण्णतद्भावादन्यानादेश्चनिन्हुतेः ॥ ८३४ ॥
अनादिःकल्पितश्चेतिव्याहतेःप्रथमंगृहं ॥ अतःकर्कशतर्कोपिधिक्करोतिमतंतव ॥ तस्मादुक्तं
समस्तंचनिरवद्यमितिस्थितं ॥ ८३५ ॥ अनादिमाययासुप्तोयदाजीवःप्रबुध्यते ॥ अजमनिद्र
मस्वप्नमद्वैतंबुध्यतेतदा ॥ ८३६ ॥ अनादितोपिसुप्तोऽज्ञोजीवोमायावशोऽवशः ॥ अप्रबुद्ध
श्चपूर्वार्धेसुप्रसिद्धोभिधीयते ॥ उत्तरार्धेत्वजोऽनिद्रस्वप्नशून्यश्चकश्चन ॥ ८३७ ॥ सचजन्मा
दिदूरत्वात्सदानिद्रोज्झितत्वतः ॥ अस्वप्नत्वादमायत्वाद्देवोनारायणोभवेत् ॥ ८३८ ॥ ॥

पूर्वार्धोक्ताद्विरुद्धःकश्चिदभिधीयतइतिसंबंधः । अनिद्राऽस्वप्नत्वयोस्सुप्तत्वस्यचैकत्रायोगादितिभावः ॥ ८३६ ॥ ८३७ ॥ सः उत्तरार्धोक्तः । देवपदेन आदित्याऋभवोस्वप्नाइतिदेवपर्यायास्वप्नपदमहिम्नानारायणएवात्राभिधीयतइतिसूचयति । विशिष्य पूर्वार्धोक्तस्यैवमायिकत्वोक्त्यातद्विरुद्धस्योत्तरार्धोक्तस्यार्थादमायत्वमपिसिद्धमितिभावेनोक्तं । अमायत्वादिति । अन्यथाऽत्रोक्ता

निद्रत्वस्यव्याहतत्वादितिभावः ॥ ८३८ ॥ पूर्वार्धेस्पष्टंबद्धत्वोक्त्योत्तरार्धेसामान्यतोनिद्राऽभावादिवाचकानिद्रादिपदैर्नित्यमु क्तत्वस्यलाभात् । अनादिकालबद्धस्य सदाबंधोज्झितस्यचेत्युक्तं । यतोयस्मात् । विरुद्धधर्माक्रांतत्वादित्यर्थः । सउत्तरार्धोक्तः नारायणः । अद्वैतः द्वंद्वसमानार्थकद्वैतशब्दोक्तशीतोष्णादिद्वंद्ववर्जनादेवाद्वैतपदवाच्यःनतुभेदाभावात् । तथासत्युक्तविरुद्ध धर्मविरोधादितिभावः ॥८३९॥ किंचतवमतेकर्तृकर्मभावविरोधेनैकस्यैवबोध्यत्वबोद्धृत्वायोगादप्यद्वैतपदस्यास्मदुक्तएवार्थोवक्त

अनादितोपिबद्धस्यसदाबंधोज्झितस्यच ॥ भवेद्भेदोयतस्तस्मात्सोऽद्वैतोद्वंद्ववर्जनात्
॥ ८३९ ॥ योबोद्धानसबोध्योहिकर्तृकर्मविरोधतः ॥ अतःपूर्वार्धमध्यस्थोनोत्तरार्धग
तोपिते ॥ कर्तृकर्मविरोधाख्यसर्पस्तेह्यप्रतिक्रियः ॥ ८४० ॥ बोध्यब्रह्मैक्यवादास्तेबोद्धृ
त्वंत्याजयंतिहि ॥ अतोद्वैतपदंचैतन्नजीवैक्यपरंतव ॥ ८४१ ॥ ॥

व्योनतुसाक्षादैक्यमेवेत्याह ॥ योबोद्धेति ॥ तेमते ॥ ८४० ॥ इमंन्यायमन्यत्राप्युपदिशति ॥ बोध्येति ॥ ब्रह्माहमस्मीत्या द्यैक्यवाक्येष्वपिबोध्येनब्रह्मणाबोद्धुरपरोक्षतोज्ञातुर्जीवस्ययेऐक्यवादाः तेसर्वेपि तेतवबोद्धृत्वं शास्त्रस्यपूर्वोत्तरार्थवेत्तृत्वंत्या जयंतिहीतिसंबंधः । क्वचिच्छास्त्रकोणेकर्तृकर्मभावस्यैकत्रायोगंवदसि क्वचिच्चतादृशयोरेवजीवब्रह्मणोरैक्यंवदसि । अतःपूर्वो त्तरविरोधादैक्यमेकस्मिन्नपिवाक्येनवक्तुंशक्यं । किंतुविवेकीचेत् । अस्मदुक्तविधयैवसकलैक्यवाक्यानामप्यर्थंवदेतिभावः ।

अतः कर्तृकर्मभावविरोधात् ॥ ८४१ ॥ पूर्वकालविशेषानुक्तेः अजानिद्रादिपदानांसर्वदाजन्मनिद्राद्यभावार्थकत्वमुक्तं । इदानीं युक्त्यंतरेणापितमेवार्थमुपपादयति ॥ सदेति ॥ सुसेरुत्थितःपशुरस्वप्ननाम्नाउक्तःकिं नैवोक्तः । किंतुसदास्वप्नवर्जितादेवाएवत त्पदवाच्याः । एवंचतत्प्रायपठिताजानिद्रादिपदानामपिसार्वकालिकजन्मनिद्राद्यभावएवार्थोवक्तव्यः । तस्माद्बोद्धृबोध्यत्वविरोधवदयमपिविरोधोपरिहार्यएवेतिभावः ॥ ८४२ ॥ युक्त्यंतरंचाह ॥ बोध्यमिति ॥ एतत्परा सार्वकालिकनिद्राद्यभावपरा

सदानिद्राखप्नजन्मशून्यास्तत्पदवाच्यतां ॥ अहेत्यस्वप्ननाम्नोक्तःकिंसुसेरुत्थितःपशुः ॥ ८४२ ॥
बोध्यंवस्तुप्रशंसंतीश्रुतिरेतत्परैवसा ॥ नामुख्यार्थेबलान्नेयामुख्यार्थकःपरित्यजेत् ॥ ८४३ ॥
भेदाभावात्स्वरूपेषुसदृशाभावतोपिवा ॥ द्वंद्वाभावाचसोद्वैतोबोद्धृद्वैतस्यसाधनात् ॥ ८४४ ॥
यथाऽधनोयमित्युक्तिस्स्वधनंप्रतिषेधति ॥ नयाचितधनंस्वस्मिन्गेहेगेहेधनानिवा ॥ ८४५ ॥ ॥

उक्तार्थेलोकसंमतार्थांतरविन्यासंकरोति ॥ मुख्यार्थमिति ॥ काचकनकयोर्मध्येयथाविवेकीकनकमेवगृह्णाति । एवंमुख्यामुख्ययोरर्थयोर्मध्येशब्दोपिबाधाभावेमुख्यमेवार्थंवदेदितिभावः ॥ ८४३ ॥ पूर्वोक्तार्थयुक्तीसंकलयन्पुनरर्थद्वयंचाह ॥ भेदाभावादिति ॥ सः परमात्मा ॥ ८४४ ॥ अद्वैतशब्दस्यस्वगतभेदवर्जितत्वमेवार्थोभवेत् । ननुयत्किंचिद्भेदवर्जितत्वमित्यत्रनिदर्शनमाह ॥ यथाऽधनइति ॥ याचितधनं अन्यस्माद्याचितधनं । स्वस्मिन्ननिषेधतीतियोजना ॥ ८४५ ॥ अन्यतोजीवाज्ज

डाच्च । अन्यत्रजीवजडेषु । तत् द्वैतं ॥ ८४६ ॥ किंच एकोदेवइत्यादिश्रुतौहरिर्देवतया नित्यमुक्ततयाचवर्ण्यते । तत्समाख्ययाऽत्रापिउत्तरार्धेऽस्वप्नपदोक्तोऽज्ञानाख्यनिद्रात्यंताभावार्थकानिद्रपदोक्तश्चहरिरेवभवेत् । जीवश्चमायाबद्धत्वदुःखित्वनरकित्वादिनाश्रुत्यादौकीर्त्यते । तत्समाख्ययाजीवपदशक्त्याचपूर्वार्धेजीवएवोच्यते । एवंसत्येवहिश्रुत्युक्ताबोद्धृताबोध्यताचशोभते नान्यथा । एवंचप्रतिपाद्यद्वैतस्यैवविद्यमानत्वादुत्तरार्धोक्तंभगवतोऽद्वैतत्वमपिद्विप्रकारतयेतंज्ञातंद्वीतं तस्यभावोद्वैतमितिव्युत्प

तथाद्वैतपदंविष्णौस्वद्वैतंप्रतिषेधति ॥ नत्वन्यतोहरेर्द्वैतंनाप्यन्यत्रस्थितंचतत् ॥ ८४६ ॥ केवलोनिर्गुणस्सोयंदेवःप्रोक्तोवचोंतरे ॥ नित्यमुक्तोमृतस्यैषसेतुश्चोक्तस्स्थलेस्थले ॥ ८४७ ॥ जीवस्तुबद्धोदुःखीचजन्ममृत्युजरावशः ॥ पातकीनारकीचैवश्रुत्यैवोक्तःस्थलेस्थले ॥ ८४८ ॥ एवं विरुद्धचैतन्यद्वयंभिन्नंह्यनादितः ॥ तयोर्नैक्यंकदापिस्यान्मुक्तःसारूप्यमेत्यसौ ॥ ८४९ ॥ पुनर्जन्मस्वप्नबंधदुःखाद्यप्रियवर्जनात् ॥ नित्यमुक्तोऽनित्यमुक्तइतितत्रापिचांतरं ॥ ८५० ॥ बंधान्मुक्तस्ततोजीवोनित्यमुक्तःकथंह्यसौ ॥ अतोबोद्धृत्वशून्यैवबोध्यब्रह्मैक्यवाक्तव ॥ ८५१ ॥

त्त्याद्वैतपदवाच्यमिथ्याज्ञानराहित्यादेव । अनिद्रपदोक्ताज्ञानराहित्येनसहविपरीतज्ञानराहित्यस्यैववक्तुंयोग्यत्वात् । विरुद्धस्वभावतयासर्वत्रकथनाच्चजीवेश्वरभेदरूपद्वैताभावमादायनासावद्वैतइत्याह ॥ केवलइत्यादिना ॥ ८४७ ॥ ८४८ ॥ ८४९ ॥ केनसारूप्यमित्यतआह ॥ पुनर्जन्मेति ॥ तत्रमुक्तौ ॥ ८५० ॥ अतः उक्तरीत्याब्रह्मैक्यायोगात् ॥ ८५१ ॥ अत्रोभयतःपाशां

रज्जुंकरोति ॥ यदीति ॥ ब्रह्मणोबोध्यत्वेनबोद्धात्वयासहैक्यायोगादितिभावः । द्वितीयपक्षेमनसाज्ञातस्यैववचसावक्तव्य त्वादितिभावः ॥ ८५२ ॥ अधुनैक्यंमिथ्यासत्यंवा द्वितीयेपिब्रह्मणोभिन्नमभिन्नंवेतिविकल्प्यसर्वपक्षेपिदूषणमाह ॥ किंचेति ॥ विरुद्धश्रुतिदौर्बल्यात् मिथ्याभूतार्थकत्वेनस्वविरुद्धैक्यश्रुतेर्दौर्बल्यात् । स्वबोध्यंभेदं बलात्सत्यार्थप्रतिपादकत्वसत्त्वात् ॥ ८५३ ॥ तेनैव ऐक्येनैव । द्वितीयंनास्तीतिश्रुतेर्यत्किंचिद्द्वितीयसद्भावेव्याघातापरिहारात् । सत्यत्वेसदद्वैतभंगप्रसंगात् ।

यदिब्रह्मैक्यबोद्धात्वंकथमैक्यंभवेत्तव ॥ यदिब्रह्मैक्यबोद्धानकथमैक्यकथातव ॥८५२॥ किंचैक्यं यदिमिथ्यास्यात्तर्हिभेदश्रुतिस्सती ॥ विरुद्धश्रुतिदौर्बल्यात्स्वबोध्यंबोधयेद्बलात् ॥ ८५३ ॥ सत्यं चेद्ब्रह्मणोभिन्नमभिन्नंवानिगद्यतां ॥ भेदेतेनैवतेऽद्वैतश्रुतेस्स्याद्व्याहतिस्स्फुटा ॥ ८५४ ॥ प्रतियोग्य नुयोगिभ्यांनिरूप्यस्यानिरूप्यतः ॥ अमतस्यमताच्छास्त्रबोध्यस्यतदबोध्यतः ॥ ८५५ ॥ ऐक्यमैक्य स्यघटतेकथंयुक्तिविदांमते ॥ तवापिनविरुद्धैक्यंलक्षणापेक्षिणःक्वचित् ॥ ८५६ ॥ ॥

मिथ्यात्वेप्रागुक्तदोषानुषंगाच्च ॥ ८५४ ॥ अनिरूप्यतः प्रतियोग्यनुयोग्यनिरूप्यात् । मता त्सर्वसंप्रतिपन्नात् । तदबोध्यत स्स्वप्रकाशतयाशास्त्राप्रतिपाद्याच्चब्रह्मणःऐक्यमितिसंबंधः । षष्ठ्यंतपदत्रयस्यत्वैक्यस्येत्यनेनसंबंधः । अमतस्यासंप्रतिपन्नस्य । कथंस्यात् । नकथंचित् । उक्तविधयाप्रकारत्रयेणपरस्परविरुद्धयोरैक्यब्रह्मणोरैक्यायोगादितिभावः । विरुद्धयोरैक्यंतवापिम तंनेत्याह ॥ तवेति ॥ लक्षणापेक्षिणः सर्वज्ञासर्वज्ञयोर्जीवब्रह्मणोरैक्यायोगेनतत्त्वंपदयोर्जहदजहल्लक्षणापेक्षिणः ॥ ८५५ ॥

॥ ८५६ ॥ नन्वत्रापिसप्रतियोगिकत्वादिविरुद्धधर्मत्यागेनैक्यमुच्यतइतिचेत् । तत्राह ॥ विरुद्धांशेति ॥ जीवप्रतियोगिकत्वब्रह्मानुयोगिकत्वपरित्यागे । साएकता जीवेश्वरैकतान । सैव जीवब्रह्मणोरेकतैव । एवपदेनमुंडितांयांकांचनएकतांव्यवच्छिनत्ति । जीवब्रह्मणोरैक्यस्यैवसत्यत्वेब्रह्मस्वरूपत्वेचभेदश्रुतेर्विरोधः । जीवब्रह्मनिरूपितैक्यस्यचाभावेयस्यकस्यचिदैक्यस्यैवसत्यत्वेचजीवब्रह्मणोरेकत्वनिषेधकभेदश्रुतेर्नकोपिप्रतिमल्लः । जीवब्रह्मभेदवादिनापिब्रह्मणिब्रह्मैक्यस्यांगीकारादितिभावः । किंप्र

विरुद्धांशपरित्यागेनसाजीवेश्वरैकता ॥ रुणद्धिसैवश्रुत्युक्ताजीवेश्वरभिदाश्रुतिं ॥ सा
चेन्नास्तितदाभेदश्रुतेःकिंप्रतिबंधकं ॥ ८५७ ॥ अतोजीवेश्वराभेदोह्यात्मभिन्नोमृषैव
ते ॥ यत्किंचिदैक्यस्यैक्येवासत्त्वेवानपरस्यभीः ॥ ८५८ ॥ स्वरूपैक्येसतिघटेपटादि
भ्योनकिंभिदा ॥ स्वरूपैक्येसतिपरस्वरूपाद्भिन्नतापिन ॥ ८५९ ॥ ताभ्यांव्यावर्तितैक्य
स्याप्यैक्यपक्षोनशोभते ॥ तदेवह्युपलक्ष्यत्वंनचेच्छुष्कैक्यमापतेत् ॥ ८६० ॥ ॥

तिबंधकं । नकिंचिदित्यर्थः । नहियस्यकस्यचिच्चेतनस्यशिष्टत्वंचोरत्वाक्रांतचेतनशिरश्छेदस्यविरोधीतिभावः ॥ ८५७ ॥ एतदेवविशदयन्नुक्तार्थेदृष्टांतावप्याह ॥ अतइत्यादिना ॥ अतः प्रतियोग्यनुयोगिभ्यामनिरूपितैक्यस्यैवसत्यत्वाद्यंगीकारात् । जीवेश्वराभेदः जीवेश्वरनिरूपिताभेदः ॥ ८५८ ॥ ८५९ ॥ ताभ्या मुपलक्षणभूताभ्यांजीवेश्वराभ्यांव्यावर्तितस्यतवैक्यस्याप्या

वर्तितब्रह्मणैक्यायोगादितिभावः। तदेव व्यावर्त्यत्वमेव। नचेद्व्यावर्त्यत्वमपिनचेत्। शुष्कैक्यमापतेत्। तच्चनविरुद्धमित्युक्तं ॥ ८६० ॥ एवं ऐक्यस्यव्यावर्त्यत्वाख्योपलक्ष्यत्वेसति। ऐक्यं तस्यैक्यस्यैक्यं। तौ ऐक्यपरमात्मानौ ॥ ८६१ ॥ किंचयादृश तादृशमैक्यंभवतु तस्यसत्यत्वंब्रह्मणैक्यंचतवमतेनघटतइत्याह ॥ किंचेति ॥ तयोश्च ऐक्यपरमात्मनोः धर्मधर्मित्वात् एक स्यधर्मत्वादपरस्यधर्मित्वादित्यर्थः। विरुद्धयोः धर्मधर्मिभावेनैक्यानर्हयोः ॥ ८६२ ॥ ऐक्यंब्रह्मैक्यं। तदभावे ऐक्याभावे।

एवंचकथमैक्यंस्याद्व्यावृत्तेपरात्मनि ॥ व्यावर्त्याव्यावर्त्यताभ्यामेवयत्तौविरोधिनौ
॥ ८६१ ॥ किंचैकंब्रह्मतद्भावोह्यैक्यंशब्दविदांमते ॥ तयोश्चधर्मधर्मित्वात्कथमैक्यंवि
रुद्धयोः ॥ ८६२ ॥ एवंचनैक्यमैक्यस्यतदभावेनतत्वता ॥ अतत्वावेदकंशास्त्रममानंत
ज्जितंपरैः ॥ ८६३ ॥ विरुद्धैक्येतुसार्वज्ञपूर्वधर्माजिजृंभिरे ॥ निर्गुणोक्तेस्तदेकत्वगुणेना
ताडयन्मुखं ॥ स्वाभेदसंभवाद्भिन्नगुणाभावार्थतांददुः ॥ ८६४ ॥ ॥

तत्तस्मात् ऐक्यप्रतिपादकशास्त्रस्यामानत्वात् ॥ ८६३ ॥ विरुद्धयोरैक्यंपरोनवदत्येव। कश्चिदौद्धत्याद्वदतिचेत्तस्याप्युत्तरमाह ॥ विरुद्धैक्यइति ॥ पूर्वपदेन भेदसर्वेश्वरत्वादयोगृह्यंते। जिजृंभिरे स्वमिथ्यात्वकारणाभावा द्विरुद्धयोस्सिंहदेवदत्तयोरिवमुख्यैक्यायोगाच्चविकसिताअभूवन्नित्यर्थः। ननुनिर्गुणोक्तिसद्भावात्कथंगुणानांजृंभणमित्यतआह ॥ निर्गुणोक्तेरिति ॥



तदेकत्वगुणेन तस्यब्रह्मणःजीवादेकत्वाख्यगुणेन। मायावाद्यभिमतभावरूपैक्याख्यगुणमध्यपतितानस्मान्कथंनिषेधसीतिमुखमुद्रणंचक्रुरितिभावः। अपौरुषेयवाक्यत्वाद्भिन्नगुणाभावरूपार्थेऽवकाशंददुरित्याह ॥ स्वाभेदेति ॥ स्वेषांब्रह्मणासहाभेदस्स्वाभेदः। तत्संभवात्। निषेधबहिर्भावसंभवात्। (यद्वास्वेषामैक्यवद्धर्मधर्मिभावेप्यभेदसंभवात्। अभिन्नैक्यानिषेध्यातद्वदस्मदनिषेधस्यसंभवात्)भिन्नगुणार्थतांददुरित्यन्वयः ॥ ८६४ ॥ तदैक्यं जडजगदैक्यं। एकतैक्यवत् ऐक्यस्यैक्यवत्। यथाविरुद्ध

जडंजगच्चसत्यंस्यात्तदैक्यंचैकतैक्यवत् ॥ मिथ्याश्रुतेस्तुभेदेनासत्त्वमर्थोस्त्वभेदिषु ॥
तदभावेतुनैक्यस्याप्यैक्यमित्यतिसंकटं ॥ ८६५ ॥ यदिचेतनसंबंधाच्चितोरैक्यंचचिद्भ
वेत् ॥ तदाजडंजगच्चित्स्याद्न्यायसाम्यान्नचेन्नच ॥ ८६६ ॥ विरुद्धैक्यंचांततस्तत्स्थानै
क्येपर्यवस्यति ॥ सविशेषब्रह्मवादेनायंदोषोभविष्यति ॥ ८६७ ॥ ॥

योरैक्यब्रह्मणोरैक्यमुच्यते। तथाजडब्रह्मणोरैक्यमुच्यतामितिभावः। अथवा ऐक्यंतावच्चेतनधर्मत्वान्नचेतनः। तदैक्यवत्अचेतनजगदैक्यमपिकुतोनोच्यतइत्यर्थः। ननुजडस्यापिसत्यत्वेब्रह्माभिन्नत्वेचमिथ्याश्रुतेःकागतिरित्यतआह ॥ मिथ्येति ॥ अभेदिषु अभेदवत्सुजडेषु। तदभावे जडजगदैक्याभावे। द्वयोरप्यचेतनत्वाविशेषादितिभावः ॥८६५॥ चित्संबंधादैक्यस्यापिचित्त्वेऽज्ञानादिजडस्यापितत्स्यादित्याह ॥ यदीति ॥ ८६६ ॥ तर्हिभवतांमतेपिसापेक्षभेदसार्वज्ञादिधर्माणांकथंब्रह्मण्यभेदइत्याशंक्य

नायमस्माकंदोषइत्याह ॥ सविशेषेति ॥ ८६७ ॥ सःविशेषः । भेदिता अभेदेपिभेदभेदिभावइत्यर्थः ॥ ८६८ ॥ भेदस्य भिन्नतावादीतार्किकः । तस्य जगत्सत्यत्ववादिनः ॥ ८६९ ॥ ८७० ॥ तस्मात् उक्तरीत्याऐक्यस्यविकल्पासहत्वात् । अन्यस्य भेदस्य ॥ ८७१ ॥ प्रकारांतरेणाप्यैक्यश्रुतीनांदूषणमाह ॥ किंचेति ॥ विश्वस्यबाधिका ब्रह्मव्यतिरेकेणासत्त्वरूपमर्थमादाय

भेदहीनेपिभेदस्यकार्यंसक्कुरुतेयतः ॥ अतस्सापेक्षभेदस्याप्यभेदोभेदिताचनः ॥ ८६८ ॥
भेदस्यभिन्नतावादीतत्सत्यत्वंवदेद्यदा ॥ तदाकिंदूषणंतस्यसदद्वैतंयतोस्यन ॥ ८६९ ॥ निर्वि
शेषब्रह्मवादेसापेक्षनिरपेक्षयोः ॥ जीवैक्यब्रह्मणोरैक्येदोषस्यास्यास्तिनौषधं ॥८७०॥ तस्मा
द्भेदश्रुतेरग्रेनैक्यश्रुतिशतस्यते ॥ स्वार्थस्यसाधनेशक्तिःकिमुतान्यस्यबाधने ॥ ८७१ ॥ किंचै
कमेवाद्वितीयंनेहनानेतिचश्रुतिः ॥ सर्वंब्रह्मेतिवाक्यस्याद्यदिविश्वस्यबाधिका ॥ ८७२ ॥ तदा
भेदपरैवाभून्नाभेदपरताश्रुतेः ॥ अबाध्यबाध्ययोर्भेदोयतोवश्यमपेक्षितः ॥ ८७३ ॥ जीवभे
देत्वभेदाह्ययाबाध्यत्वाशास्तुवातव ॥ अभेदोयस्यनैवस्यात्तद्भेदःकेनबाध्यते ॥ ८७४ ॥ ॥

विश्वमिथ्यात्वपरास्यादित्यर्थः ॥ ८७२ ॥ भेदपरा जगद्भेदपरा । कुतइत्यतआह ॥ अबाध्यबाध्ययोरिति ॥ ८७३ ॥ नन्व स्तिभेदः सोपिव्यावहारिकतयाबाध्यइतिचेत्तत्राह ॥ जीवभेदइति ॥ अभेदाख्या भेदविरुद्धैक्याख्या । तवमते यस्यजडस्य ।

तद्भेदः जडब्रह्मभेदः । केनकारणेन । तवापिमतेमुक्तौजीवैक्यप्राप्त्याजीवभेदमात्रस्यबाधोस्तु । जडैक्यप्राप्तेरेवाभावात् उक्त रीत्याश्रुतिसिद्धस्यजडभेदस्यब्रह्मवत्पारमार्थ्यमेवाभूत् । बाधकत्वेनाभिमतत्वन्महावाक्यानामुक्तरीत्याभेदसाधकत्वस्यैवप्राप्तेरि तिभावः ॥ ८७४ ॥ ननुधर्मिणोविश्वस्यबाधेतद्धर्मभूतभेदस्यकथमवशेषइतिशंकांद्वेधापरिहरति ॥ विश्वेति ॥ धर्म्यभिन्नस्येति वदताब्रह्मव्यतिरेकेणासत्त्वप्रतिपादिकापिश्रुतिर्नबाधिकेतिसूचयति ॥ ८७५ ॥ तत्तस्मात् । अन्योन्याभावस्यनित्यत्वांगीकारा

विश्वबाधेपिविश्वस्माद्योभेदोब्रह्मणिस्थितः ॥ धर्म्यभिन्नस्यतस्यालंकथंबाधायते
श्रुतिः ॥ ८७५ ॥ धर्मिनाशेपिभेदोयमविनाशीमतेतव ॥ तद्बाध्यजगतोभेदो
प्यबाध्यस्स्यात्सुखेनते ॥ ८७६ ॥ अभावद्वैतवादेतेनान्योन्याभावबाधिका ॥
श्रुतिरेषायुक्तबाधोयुक्तोनायुक्तबाधनं ॥ ८७७ ॥ नचेज्जीवोपिबाध्यस्स्यादतोभे
दोनचाल्यते ॥ भेदमिथ्यात्वानुमानेततोत्रव्यभिचारिणि ॥ ८७८ ॥ ॥

त् । तेमते ॥ ८७६ ॥ अस्मिन्पक्षेप्यद्वैतवाक्यस्याबाधकत्वंद्वेधोपपादयति ॥ अभावद्वैतेपि ॥ अयुक्तबाधनं । बाध्याबाध्य भेदस्यावश्यकतयायुक्तिविरुद्धंतद्बाधनमित्यर्थः । नहिघटोनास्तीतिनिषेधतायुक्तिप्राप्तस्तदभावोपिनिषेद्धुंशक्यतइतिभावः ॥ ८७७ ॥ नचेत् । युक्तबाधनमेवनचेत् । अयुक्तमपिबाधनंक्रियतेचेदित्यर्थः । ब्रह्मव्यतिरेकेणकिमपिनास्तीतिवाक्यस्यजगद

भावक्जीवाभावेपिन्यायप्राप्तत्वात् । जीवाभावेकस्यमुक्तिस्स्यादितियुक्तिविरोधेनहितद्बाधोनक्रियते । तस्मादिहापिनायुक्तबा
धनमितिभावः । अतः भेदबाधस्ययुक्तिविरुद्धत्वात् । ततः युक्तभेदस्यसत्यत्वात् । अत्राबाध्येजगतोभेदे ॥ ८७८ ॥ श्रुतीनां
मिथ्यात्वपरत्वेदोषमुक्त्वाऐक्यपरत्वेपिदोषमाह ॥ यदीति ॥ ८७९ ॥ व्यतिरेकेणासत्त्वंअसत्त्वमैक्यंचेत् जगत्सत्यत्वमापतेदि
त्युक्तं । एतद्भियाव्यतिरेकेणासत्त्वं । असत्त्वंचेत् जगन्मिथ्यात्वंचेत् उदितं तद्भेदसत्यत्वंस्मरेतिसंबंधः । अव्यतिरेकेणसत्त्वं

यद्यभेदपरैवेयंश्रुतिस्सर्वामतेतव ॥ तदाजगदबाध्यंस्यान्मिथ्यात्वाशागतातव ॥
अबाध्याभेदमापन्नःकथंबाध्योभविष्यति ॥ ८७९ ॥ व्यतिरेकेणचासत्त्वमसत्त्वंचे
त्स्मरोदितं ॥ सत्त्वमव्यतिरेकेणयदितर्हिनबाध्यता ॥ ८८० ॥ सर्वैक्यंसर्वबाधंवा
सेयंश्रौतपदावली ॥ वदेज्जीवैकतावार्तानैषुवाक्येषुशोभते ॥८८१॥ तत्त्वमस्यादिवा
क्येस्यात्कथातस्याःकथंचन ॥ नञाछिन्नपदासान्यैर्नत्वदर्थेपदंक्षिपेत् ॥ ८८२ ॥ ॥

ऐक्येनसत्त्वमित्यर्थः ॥ ८८० ॥ एषु सर्वब्रह्मेत्यादिषु । प्रथमपक्षेजगत्सत्यत्वस्थैर्यं द्वितीयपक्षेभेदस्यस्थैर्यं । एवंचपक्षद्वयेपितव
हानिरेव । अतोनेमानिवाक्यानित्वयापुरस्कर्तव्यानि । त्वदभिलषितजीवमात्रैक्यस्यवार्ताप्यत्रनास्तीतिभावः ॥८८१॥ तस्याः
जीवैकतायाः । कथंचनेतिवदताश्वेतकेतुमात्रैक्यप्रतिपादिकास्यात्कथंचित् । साचनत्वदभिलषितसकलजीवैक्यप्रतिपादनाया



लमितिसूचितं । अन्यैः तत्ववादिभिः । पदंतदितिपदं ॥ ८८२ ॥ तत्तस्मात्कारणात् ॥ ८८३ ॥ प्राक्सूचितमर्थंविशदयति ॥
जीवेति ॥ जीवैक्यमात्रवाक् सकलजीवैक्यप्रतिपादकवाक् तत्त्वमसि अहंब्रह्म सोहमस्मीत्यादिवाक् तस्यतस्यैकैकजीवस्यै
वाभेदमात्रेत्वयापिवक्तुंशक्यते । जडजगदसंगृह्यसर्वजीवांश्चसंगृह्यतवापेक्षितमैक्यंनकापिश्रुतिर्वक्तीतिभावः ॥ ८८४ ॥ सर्वै
क्यप्रतिपादकवाक्येपूक्तदोषंएकजीवैक्यप्रतिपादकवाक्येप्यतिदिशति ॥ क्वचिदिति ॥ कोणइत्यर्थः । तत्तद्धर्माणां तस्यजी

तन्महावाक्यराशेस्तेमिथ्यात्वैक्यपरत्वयोः ॥ भेदस्यसत्यताविश्वसत्यतावाभवेद्ध्रुवं ॥ ८८३ ॥
जीवैक्यमात्रवाक्प्रायश्श्रुतौनश्रूयतेक्वचित् ॥ सर्वस्यैक्येमृषात्वेवानोक्तदोषद्वयौषधं ॥ ८८४ ॥
क्वचिज्जीवैक्यवाक्तत्तद्धर्माणांसत्यतांदिशेत्॥विशिष्टैक्येनचेन्मिथ्याभूतधर्मभिदांदिशेत्॥८८५॥
अद्वितीयमितिश्रुत्याद्वितीयाद्भिन्नतैवहि ॥ सिद्ध्येदनश्वइत्युक्त्यायथाश्वादन्यतागजे ॥ ८८६ ॥
अश्वोनेतिह्यनश्वोभूद्गजस्तत्पुरुषाज्ञया ॥ बहिरंगाद्बहुव्रीहेस्समासःप्रबलोह्ययं ॥ ८८७ ॥ ॥

वस्य तस्यब्रह्मणश्चधर्माणां । विशिष्टैक्ये सर्वज्ञत्वाल्पज्ञत्वादिविरुद्धधर्मविशिष्टयोरैक्ये । नचेत् । विशिष्टैक्यंनचेत् । विरुद्ध
धर्माणांमिथ्यात्वमुक्त्वाचिन्मात्रैक्यमुच्यतेचेदित्यर्थः ॥ ८८५ ॥ सकलवाक्यानुस्यूतदोषमुक्त्वाप्रत्येकंचदूषयति ॥ अद्विती
यमितीति ॥ यथेत्यस्यतथाद्वितीयात्भिन्नतैवब्रह्मणस्सिद्ध्येदितिसंबंधः ॥ ८८६ ॥ दृष्टांतंद्रढयति ॥ अश्वइति ॥ तत्पुरुषा

ज्ञया तत्पुरुषाख्यसमासबलेनेत्यर्थः । राजपुरुषाज्ञयेतिध्वनिः । तत्पुरुषस्यकथंप्राबल्यमित्यतआह ॥ बहिरंगादिति ॥ बहिरंगात्श्रौतपदद्वयबहिर्भूतान्यपदार्थप्रधानात् । नविद्यतेद्वितीयंयस्येतिसमासेश्रौतनञर्थद्वितीयपदार्थंचोल्लंघ्ययस्येत्यश्रौतबाह्यपदार्थस्यैवतदितिसमासनिरूपणफलतयांऽततस्स्वीकारात्बहिरंगत्वमितिभावः । अयंतत्पुरुषः । नद्वितीयमद्वितीयमितिसमासेश्रौतनञर्थएवपर्यवसानेनांतरंगत्वादितिहेतुंहिशब्देनसूचयति ॥ ८८७ ॥ सर्वलोकप्रसिद्धंनिदर्शनांतरंवदन्नुक्तमेवार्थंविशदयति द्वितीयादिति ॥ अयंपटःघटोनेतिप्रोक्तइतिसंबंधः । तथेतिपूर्वेणान्वयः । अन्योन्याभावव्यवहारस्यसर्वप्रसिद्धोदाहरणत्वाददमुदितं । एवमेवएकं स्वगतभेदवर्जितंसत्पदोक्तंब्रह्मैवाद्वितीयं द्वितीयंजगन्नेत्युक्तेद्वितीयाज्जगतोपिभेदएवब्रह्मणिसिद्ध्येत् ।

द्वितीयाद्भिन्नतैवस्याद्वितीयंनेतिविग्रहे ॥ नघटोयमितिप्रोक्तेघटभेदोयथापटे ॥ ८८८ ॥
किंचाद्वितीयशब्दोयंलयस्थब्रह्मगोचरः॥ अतोजगत्प्रागभावध्वंसौनञ्वक्तिनापरं ॥ ८८९ ॥

ब्रह्मणएवद्वितीयजगद्भिन्नतयान्यस्यसर्वस्यद्वितीयांतःपातित्वेनततोभेदाभावात्तद्व्यवच्छेदायैवकारः । एवंचस्पष्टंभेदप्रतिपादकमिदंवाक्यमभेदेनयन्स्वस्याप्यव्युत्पन्नादभेदमेवार्थात्साधयेत् । नतुब्रह्माभेदमितिभावः ॥ ८८८ ॥ बहुव्रीह्याश्रयणेपिप्रकरणविरोधान्नत्वदभिलषितसिद्धिरित्याह ॥ किंचेति ॥ सदेवेदमग्रआसीदितिप्राथमिकवाक्येइदमग्रेअस्याग्रइतिप्रलयस्यप्रस्तुतत्वादितिभावः । अतःप्रलयकालीनब्रह्मगोचरत्वात् । अपरमत्यंताभावं । नविद्यतेद्वितीयंयस्येतिसमासेपिनञःप्रलयकालीनःपूर्वजगद्ध्वंसोवा उत्तरजगत्प्रागभावोवाऽर्थस्स्यात् । तदानीमुभयोरपिजागरूकत्वात् । नञर्थयोग्यत्वाच्च । नहितंतुसंयोगनाशज

न्यपटध्वंसदशायामिहतंतुषुपटोनेतिनिषेधः प्राचीनपटध्वंसंवा तत्रैवभाविपटांतरप्रागभावंवाविनापटस्यात्यंताभावमेववदन्क्वापि दृष्टइतिभावः । एतावताध्वंसप्रागभाववत्त्वमात्रेणात्यंताभावस्यैवमिथ्यात्वेनत्वयाविवक्षितत्वादितिभावः ॥ ८८९ ॥ ८९० ॥ ॥ ८९१ ॥ विरुद्धस्याभावस्यविरोधमेवोपपादयति ॥ त्रिकालेति ॥ पुराप्रलयात्पूर्वं । सतःविद्यमानस्य । लयेप्रलये । लीन स्यप्रध्वस्तस्यजगतः । प्रध्वंसस्यप्राक्प्रतियोगिसत्त्वनियमात् । पुरासतइत्युक्तं । पश्चा त्प्रलयोत्तरसृष्टिकाले । प्रागभाव

द्वितीयध्वंसवद्वातत्प्रागभाववदेववा ॥ ब्रह्मस्यान्नहिमिथ्यात्वलब्धिरेतावतातव ॥ ८९० ॥
नञोदुराग्रहोनास्तिविरुद्धस्यैवबोधने ॥ ८९१ ॥ त्रिकालासत्त्वरूपंतेमिथ्यात्वंहिसतःपुरा ॥ लयेली
नस्यनैवाभून्नापिपश्चाद्भविष्यतः ॥ ८९२ ॥ जगच्चसर्वमेतादृगनीदृक्चद्वंगमस्तिते ॥ ८९३ ॥ यदितस्यै
वमिथ्यात्वमाशास्सेपशुतातदा ॥ त्वत्तोगतेतिजीवैक्यवादोभग्नस्तवैवहि ॥ ८९४ ॥ अग्रशब्दोक्त
कालस्यसत्त्वात्तत्समयेपिच ॥ द्वितीयशून्यंतद्ब्रह्मनतदानान्यदाप्यभूत् ॥ ८९५ ॥ ॥ ॥

स्यपश्चात्प्रतियोगिसत्त्वनियमादितिभावः ॥ ८९२ ॥ सर्वमतीतमनागतंच । एतादृक् एकंप्रध्वंसप्रतियोगितयाप्राक्सत् । अपरंप्रागभावप्रतियोगितयोत्तरत्रसत् । अनीदृक् प्रागप्यसत् । उत्तरत्राप्यसत् । तदानीमप्यसत् ॥ ८९३ ॥ ननुत हिंतस्यैवश्रृंगस्यमिथ्यात्वंवदिष्यामीत्यतस्तवमतेतदप्यशक्यमित्याह ॥ यदीति ॥ जीवैक्यं पशुजीवैक्यं ॥ ८९४ ॥ द्विती यशब्देनानित्यजगद्विवक्षायामुक्तैवगतिः । नित्यजगद्विवक्षायांतुतस्यप्रलयकालेपिविद्यमानत्वेनोक्तविधयापिनिषेधायोगात् ।

त्रिकालस्थायिनिनित्येत्वदभिमतत्रैकालिकनिषेधस्यसुतरामयोगात्समाभ्यधिकराहित्यमेवाद्वितीयशब्दार्थोवक्तव्यइत्याह ॥ अग्रेति ॥ तदा प्रलयकाले । अन्यदा सृष्टिकाले ॥ ८९५ ॥ स्वासिना स्वस्यासिसमेनपरनिराकरणार्थमसित्वेनाभिमतेनवाक्येन । अद्वितीयत्वप्रतिपादकवाक्यएवकालाख्यद्वितीयस्योक्तत्वात्स्वयंमायीछिन्नः । तत्रलौकिकमाभाणकंसंवादयति ॥ कालस्येति ॥ कालवशात्कस्मिंश्चिदनिष्टआगतेकालस्यकुटिलागतिरितिसर्वेवदंति । अग्रशब्दोक्तकालमहिम्नैवमतहान्या

स्वासिनैवस्वयंछिन्नःकालस्यकुटिलागतिः ॥ यत्स्वाभिमतवाक्येनस्वस्यैवाभूत्पराभवः ॥ ८९६ ॥ नष्टिर्महदवज्ञायामर्थस्यस्यात्पदेपदे ॥ यदच्युतस्यनीचैक्यवादैःकुप्येत्पदावली ॥ ८९७ ॥ नेहनानेतिवाक्यंचनानाभूतंनकिंचन ॥ ब्रह्मणीत्याहतेनैक्यंसर्वस्यजगतोभवेत् ॥ ८९८ ॥ ॥

ख्यानिष्टप्राप्तेरस्योदाहरणंमायावाद्येवेतिभावः । यत् यस्मात् ॥८९६॥ एवंचदुर्नीतिविषयोपिसएवाभूदित्याह ॥ नष्टिरिति ॥ महदवज्ञायां महतःपूज्यस्यावज्ञायां । अर्थपदेनद्रव्यंशब्दार्थश्चगृह्यते । पदशब्देनचांघ्रिविक्षेपस्सुप्तिङंतंपदंचगृह्यते । यद्यस्मात् । पदावली अग्राद्वितीयादिपदावली कुप्येत् परोदीरितमर्थंनसहतइत्यर्थः । वाक्यस्थपदविरुद्धत्वात्परस्यार्थोनष्टइतिभावः ॥ ८९७ ॥ नेहनानेतिवाक्यं नेहनानास्तिकिंचनेतिवाक्यं । तेन ब्रह्मणिसर्वस्यनानाभावनिषेधेन । सविशेषणेविधिनिषेधौ



विशेषणमुपसंक्रामतइतिन्यायात्सर्वस्यजगतःऐक्यंभवेदितियोजना ॥ ८९८ ॥ अस्यजगतः । किंचनकिमपीतिसर्वग्राहिकिंचनपदमहिम्ना चिन्मात्रमस्मिन्वाक्येगृहीतुंनशक्यमितिभावः ॥ ८९९ ॥ अत स्सर्वैक्यायोगात् । चिन्मात्रैक्यस्यउक्तरीत्याऽत्रालाभाच्च ॥ ९०० ॥ यद्यस्मात्तयोःपदयोः । नानाभूतंनास्तीत्युक्तेऽभिन्नमस्तीत्यर्थस्यपर्यवसानात् इहनास्तीत्युक्तेऽन्यत्रास्तीत्यर्थस्यचपर्यवसानात् मिथ्यात्वमप्यस्मिन्वाक्येवक्तुंनशक्यमितिभावः । अतः पराभिलषितजीवैक्यजगन्मिथ्यात्वार्थयोरसंभवात् ।

अनृतस्यजडस्यास्यसर्वस्यैक्यंतवापिन ॥ किंचनेतिपदस्यार्थश्चिन्मात्रंनकथंचन ॥८९९॥ अतोनैक्यश्रुतिरियंनापिमिथ्यात्ववादिनी ॥ नानापदेनचेहेतिपदेनचविरोधतः ॥९००॥ अभिन्नसत्त्वमन्यत्रसत्त्वंवायत्तयोर्मतं ॥ अतस्स्वगतधर्मेषुस्वावतारेषुकिंचन ॥ नानाभूतंनेतिहरेस्तैरैक्यंवक्तिवागियं ॥ ९०१ ॥ घटेनजलमित्युक्तिर्यथातद्गंजलंक्षिपेत् ॥ नेहनानेतिवाक्तद्वत्स्वगतंभेदमाक्षिपेत् ॥ ९०२ ॥ ॥ ॥

किंचनशब्दस्यार्थंवासयितुंस्वगतधर्मेषुस्वावतारेष्वित्युक्तं । अनंतगुणेष्वनंतावतारेषुचकिंचनकिमपिनानाभूतंनास्तीतिसर्वैक्यकथनायसार्थक्यादितिभावः । एवंसतिपराभिलषितसंकोचःकुतोनेतिचेन्न । अस्मिन्ग्रामेकिंचनेत्युक्तेतद्ग्रामस्थसर्वलाभवत् इहकिंचनेत्युक्तेब्रह्मगतसर्वलाभस्यैवन्याय्यत्वात् । तैर्धर्मैरवतारैश्च ॥ ९०१ ॥ श्रुतेरर्थांतरंवक्तुंदृष्टांतमाह ॥ घटइति ॥ तद्गं घटगतं ।

क्षिपेत्‌निषेधति । स्वगतंब्रह्मगतं ॥९०२॥ अत स्स्वनिष्ठभेदस्यैवनिषेधसंभवात् । किंचनपदस्यैवार्थःकाचनेति । इहब्रह्मणि नाना भूतंकिंचन धर्मादिकंनास्तीतिवाश्रुतेरर्थःसंभवति । काचन नाना भिदानेतिवाश्रुतेरर्थस्संभवति उभयत्रापीहपदमहिम्नाघटेभेदो नेत्युक्तेस्वावयवयोरेवमिथोभेदनिषेधवत्स्वगतस्वगुणभेदस्यैवनिषेधइतिभावः ॥ ९०३ ॥ भेदप्रतिनिधिंचैतच्छ्रुत्यैवश्रौतंकर्तुम र्थांतरमाह ॥ अथवेति ॥ पदस्वारस्यसंपदा यथास्थितपदसंपदा । इह नाना भेदोनास्तीतिपूर्ववाक्यखंडस्यापियथास्थितपदै

अतःकाचननानेहनेत्यर्थोवाभवेच्छ्रुतेः ॥ ९०३॥ अथवानेहनानेतिप्रतिषिध्यभिदांहरौ ॥ भेद
व्यवहृतेरस्तिकिंचनालंबनंत्विति ॥ श्रुतिर्विशेषमाचष्टपदस्वारस्यसंपदा ॥ ९०४ ॥ नेहनाने
तिवाक्याच्चयदिनास्त्येवतेजगत् ॥ असत्स्यात्पारमार्थ्येननास्तीतितुपदांतरं ॥ ९०५ ॥ कुतो
ध्याह्रियतेतर्हिभ्रांत्येतिपदमाहर ॥ एवंसर्वस्यजगतोरक्षयाभैक्षवान्भव ॥ ९०६॥ ॥

रेकार्थमुक्त्वा तर्हिभेदव्यवहारस्यकिमालंबनमितिशंकायां अस्तिकिंचनेतिवाक्यशेषेणविशिष्यवक्तुमशक्यंविशेषाख्यालंबनंकिंच नेतिसामान्यपदेनोक्त्वाऽस्तीतिविधानात्‌अयमप्यर्थस्साधीयानितिभावेनोक्तंपदस्वारस्यसंपदेति ॥ ९०४ ॥ परार्थेदूषणांतरंचाह ॥ नेहेति ॥ तर्ह्यसत्स्यात् अत्यंतासत्स्यात् । त्रिकालनास्तितायाएवनञर्थतयात्वयांगीकारादितिभावः । आहर अध्याहर । तथाचकिमपिभ्रांत्यानास्तीत्युक्तेऽभ्रांत्यैवसर्वस्यसत्त्वंसिद्ध्यतीतिभावः । भैक्षवान्भवेतिवदतापरार्थेऽन्नस्यापिमिथ्यात्वाद्भिक्षापि

नलभ्यतइतिसूचितं । इदमप्युपलक्षणं । पारमार्थ्येननास्तीत्युक्तेऽपारमार्थ्येनास्तीत्यर्थोलभ्यते । तच्चव्याहतं । अतोनभिक्षाभा वमात्रं किंतुव्याहतभाषिणस्तवकपोलेताडनमपिस्यादितिद्रष्टव्यं ॥ ९०५ ॥ ९०६ ॥ किंचोपक्रमानुसारित्वाच्चास्मदुक्तएववा क्यार्थोनत्वदुक्तइतिवक्तुमुपक्रमवाक्यंपठति ॥ यदेवेहेति ॥ अनेन यदेवेहतदमुत्रयदमुत्रतदन्विह मृत्योस्समृत्युमाप्नोतियइह नानेवपश्यतीतिवाक्यंसंगृह्णाति । आद्यंवाक्यमुपक्रमवाक्यमित्यर्थः । अवतीर्णस्येशितुरितिसंबंधः ॥ ९०७ ॥ तद्भेददर्शनस्य

यदेवेहतदेवामुत्रेत्याद्यंवाक्यमीशितुः ॥ अवतीर्णस्यवैकुंठवासिनश्चाभिदांजगौ ॥ ९०७ ॥
तद्भेददर्शनस्यानर्थोक्त्यासैवन्यवारयत् ॥ भेदाभेदनिवृत्त्यर्थंभिदांतस्यपरात्मनः ॥ ९०८ ॥
तत्रापिकारणंवक्तुंनेहनानेतिवाक्पुनः ॥ तद्भेदमाक्षिपच्चेतियुक्तंप्रक्रमविक्रमात् ॥ ९०९ ॥
अतोभेदस्यमिथ्यात्वादेवधर्मेषुभेददृक् ॥ विनिंदितायतोनास्तीत्यादौसैवतमच्छिनत् ॥९१०॥

मूलरूपावताररूपभेददर्शनस्य । साउपनिषत् । तस्यपरमात्मनःभिदांन्यवारयदितिसंबंधः । अभेदस्यप्राग्विहितत्वात् भेदाभेदनि षेधोपिभेदनिषेधएवपर्यवस्यतीतिभावः ॥ ९०८ ॥ तत्रापि भेददर्शननिंदायामपि । प्रक्रमविक्रमात् उपक्रमसामर्थ्यात् ॥९०९॥ अतः पूर्वमिथ्यादृष्टित्वेनैवभेददर्शननिंदनात् । धर्मेष्वपिमिथ्यादृष्टित्वादेवभेददर्शनस्यनिंदनं । अन्यथाप्रायपाठविरोधादिति भावः । ननुभेदनिषेधकवाक्यबलात्तत्रैवभेदोनांगीक्रियते । नत्वन्यत्रेतिचेत् । तत्राह ॥ यतइति ॥ सैव(स्वका)सकारणनिंदि

तभेदाया सा इहनानानेतिसामान्यतोनिषेध्री नेहनानास्तिकिंचनेतिवागेव । तंधर्मभेदं । उभयोर्वाक्ययोर्मध्यगतासावाग्देहली दीपन्यायेनधर्मभेदमपिनिषेधतीतिभावः । इहभूलोकेयदेवरूपंभगवद्रूपेष्वेवावतीर्णं तत्तदेवामुत्रामुष्मिन्वैकुंठलोकेअस्ति । यत् अमुत्र वैकुंठलोके तत्तदेव अनु किंचित्कार्यमनुसृत्य इहभूलोकेऽवतीर्णंभवतीत्युभयविधप्रत्यभिज्ञयापरमात्मनोमूलरूपस्यावता ररूपस्यचात्यंताभेदंसमर्थ्य पुनर्भेदाभेदवादिनोमतंनिषेद्धुंमृत्योस्समृत्युमाप्नोतिययइहनानेवपश्यतीतिवाक्ये यः इह रूपद्वये नाने वपश्यति । भेदेऽस्वरसंसूचयितुमिवशब्दः । सः मृत्यो मारकसंसारादप्यतिशयेनमृत्युश्शस्त्रताडनादिनामारकमंधंतमःप्राप्नोती तिभगवद्रूपेषुभेददर्शिनोनिंदाकृता । अभेदंसमर्थ्यतत्रपुनर्भेदस्यनिंदायामत्यंताभेदस्यैवलाभात् । भेददर्शननिंदातुननग्नस्त्रीदर्श ननिंदावन्निमित्तांतरेण । किंतुमिथ्यादृष्टित्वादेवेतिप्रदर्शनायनास्तिकिंचनेतिवाक्येनप्रागुक्तंतद्गतभेदमेवनिषेधतीत्युपक्रमोपसं हारानुगुण्येनार्थोलभ्यते । एवंधर्मान्पृथक्पश्यंस्तानेवानुविधावतीत्युत्तरवाक्येनचैवमितिपूर्वोक्तभगवद्रूपभेददर्शनंदृष्टांतीकृत्य भगवद्धर्मभेददर्शिनोपि तानेवानुविधावतीतिरूपभेददर्शनफलतयोक्तान्मृत्यूनेवानुविधावतीतिसमानफलत्वमुच्यते । अतोनेहना नेतिश्रुतिःतस्यापिभेददर्शनस्यामिथ्यादृष्टित्वेनैवनिंदनमितिदर्शयितुंतमपिभेदमुपोद्धातप्रक्रिययानिषेधति । अतएवेहेत्युभयोर पिधर्मिभूतब्रह्मणएवसामान्यतोनिर्देशः । एवंचब्रह्मणिस्वरूपधर्मभेदाख्यस्वगतभेदद्वयस्याप्युपक्रमोपसंहारानुगुण्येननिषेधोल भ्यते । यथोदकमित्यत्रोक्तयथेतिपदमहिम्नैवतथेतिपदलाभात् मध्यस्थितवाक्यस्योभयविधभेदप्रतिषेधकत्वलाभायैकवाक्यतया व्याख्याने एवं धर्मीवद्धर्मान्पृथक्पश्यंस्तथाताननु विधावतीत्यर्थलाभेन एवंपदस्ययथाविन्यासमेवव्याख्यानाख्यगुणाच्च



बह्वर्थकवेदवाक्यस्येयमप्येकायोजना । जीवेश्वरभेदनिषेधस्यतुवार्ताप्यत्रनशोभते । यतश्चोदेतिसूर्योस्तंयत्रचगच्छति । तंदे वास्सर्वेअर्पितास्तदुनात्येतिकश्चनेतिवाक्येअस्यामेवोपनिषदिसूर्यादिदेवानांचस्वव्यापारेषुभगवदधीनत्वश्रवणेन तदुनात्येतिकश्च नेतिसर्वस्यापितदधीनत्वश्रवणेनचसतात्पर्यं जीवेश्वरभेदस्थापनेनपुनस्तस्यैवनिषेधायोगात् । देवास्सर्वेतमनुसृत्यस्वस्वस्थाने ष्वर्पिताः । तत्रनिदर्शनतयासूर्यस्योदाहरणं । एवंचत्रेधाभेदस्याभ्यासात्कथंनमहातात्पर्यं ॥ ९१० ॥ जीवेश्वरभेदनिषे धकथनेबाधकांतराणिचाह ॥ ईशानइत्यादिना ॥ तत्र तस्यामुपनिषदि । तादृगेवेत्यनेन । यथोदकंशुद्धेशुद्धमासिक्तं

ईशानोभूतभव्यस्येत्युपसंहारवाक्यते ॥ अनीशजगदद्वैतंभिनत्तीतिमतिर्मम ॥ तत्रैवतादृगे
वेतियत्फलोक्तिश्चभेदवाक् ॥ ९११ ॥ किंचनास्तीत्यभावस्यवर्तमानत्वमात्रता ॥ कीर्त्यतेऽत
स्त्रिकालस्थाभाववार्तापिनात्रते ॥९१२॥ मिथ्यात्वपरतातस्मादस्मिन्वाक्येनशोभते ॥९१३॥

तादृगेवभवति । एवंमुनेर्विजानतआत्माभवतिगौतमेतिश्रुतिमुपादत्ते । इयंहिश्रुतिः शुद्धजलेशुद्धजलांतरस्यलोडनेप्युभयोस्सा दृश्यमेवस्यात् । नत्वैक्यमितिपराभिलषितदृष्टांतमपिविघटयंती आत्मपदोदितजीवस्वरूपस्यब्रह्मणिप्रवेशाख्यसायुज्येपि एवंभ वतीतिउभयोस्सादृश्यमेवस्यात् । नत्वैक्यमितिपरममोक्षेपिभेदमाह । अतोजीवेश्वरभेदेश्रुतेर्महातात्पर्यवत्त्वान्नकापितन्निषेधो घटते । किंतुनिरवकाशैतच्छ्रुत्यनुसारेणैवसर्वाश्श्रुतयोव्याख्येयाइतिभावः ॥ ९११ ॥ प्रकारांतरेणापिश्रुतेर्मिथ्यात्वपरतांनिरा करोति ॥ किंचेति ॥ अतः लटोवर्तमानाभावमात्रपरत्वात् । अत्रश्रुतौ ॥ ९१२ ॥ तस्मात्त्रैकालिकाभावबोधकपदाभावात् ।

अस्माकंतुप्रागेवेतिपदमहिम्नारूपेष्वत्यंताभेदस्योक्तत्वेनवाक्यद्वयेभेददर्शनस्यनिंदितत्वेनचरूपभेदादेश्श्रुत्यनभिप्रेततयाअर्थादत्यं ताभावस्यैवसिद्धेः । (अभेदेनास्तिते)भेदेननास्तितामात्रेणापिवाक्ययोजनात् ( नात्रोद्यतानां ) मिथ्यात्वेभराभावाच्च ॥९१३॥ किंचयस्मिन्निदंसंचविचैधिसर्वंयस्मिन्देवाअधिविश्वेनिषेदुरितिश्रुतौब्रह्मण्येवश्रुतंजगत्पुनरनयाश्रुत्याकथंतत्रैवनास्तीत्युच्यते । श्रुत्योःपरस्परविरोधप्रसंगात् । अतोप्यस्मदुक्तएववाक्यार्थइत्याह ॥ यदस्तीति ॥ जगच्चेतनं जडंजडत्वादेवाभेदानर्हं । यस्मि

यदस्तितत्कथंनास्तिततोब्रह्मणियच्छ्रुतं ॥ जडंजगद्भेदानर्हंचगर्ह्यात्रतत्कथा ॥ ९१४ ॥ अस्तित्व
स्यानृतत्वेननास्तित्वघटनायदि ॥ तर्ह्यन्योन्याश्रयोदोषोहन्यादन्यायवादिनं ॥ ९१५ ॥ आस्तित्व
स्यानृतत्वेस्यान्नास्तित्वघटनातव ॥ नास्तित्वघटनायांस्यादस्तित्वस्यानृतात्मता ॥ ९१६ ॥ अतस्सा
रूपभेदस्यधर्मभेदस्यवाहरौ ॥ निषेधायप्रवृत्तेतिप्रांचोर्थंचोदयंतिनः ॥ ९१७ ॥ इहेत्येतत्पदंनोचेन्नेह
स्यादितिमेमतिः ॥ नानापदंचान्यथास्यान्नानानर्थप्रदंतव ॥ ९१८ ॥ ॥ ॥

न्देवाअधिविश्वेनिषेदुरितिश्रुतौमहाचेतनानामपिदेवानांब्रह्मण्याश्रयाश्रयिभावश्रवणात्जगदप्यभेदानर्हं । अत्रवाक्ये । तत्कथा जगत्कथा । गर्ह्या । स्वरूपनिषेधमुखेनभेदनिषेधमुखेनवाउक्तरीत्याजगतोत्रवक्तुमशक्यत्वादितिभावः ॥ ९१४ ॥ अस्तित्वस्यानृ तत्वान्नविरोधइत्यतआह ॥ अस्तित्वस्येति ॥ ९१५ ॥ अन्योन्याश्रयमेवोपपादयति ॥ आस्तित्वस्येति ॥ ९१६ ॥ अतःअ न्यार्थासंभवात् । सा नेहनानेतिश्रुतिः ॥ ९१७ ॥ नोचेत् ब्रह्मणिस्वगतभेदपरत्वंनोचेत् । इहश्रुतौ । मिथ्यात्वपरत्वेकिंचनना

स्तीत्येतावतापूर्तेः इहपदस्यनानापदस्यचवैयर्थ्यात् । अन्यत्रसत्त्वप्रापकतयाप्रकारांतरेणसत्त्वप्रापकतयाचविरुद्धत्वाच्चेतिभावः ॥ ९१८ ॥ श्रुतेर्जगद्विषयतायामप्यनुकूलमर्थमाह ॥ अथापीति ॥ नानाभूतंजगत् इहब्रह्मणिकिंचन किंचिन्नास्ति । किंतुसर्वं चास्तीत्यर्थस्यपदस्वारस्येनैवलब्धेस्सर्वश्रुत्यविरुद्धत्वाच्चातिमनोहरइत्युक्तं ॥९१९॥ ब्रह्माहमस्मि सोहमस्मीत्यादिवाक्यानामपि

अथापिजगदर्थत्वेयदितेस्तिमहान्भरः ॥ तर्हिकिंचननेहास्तिकिंतुसर्वंचनःप्रभौ ॥
सर्वाधारेहरावस्तीत्यर्थोस्त्वतिमनोहरः ॥ ९१९ ॥ ब्रह्माहमस्मीतिवाक्येकथमैक्य
भ्रमस्तव ॥ सुपांसु(रि)लुगितिसूत्रेणप्रथमासप्तमीयतः ॥९२०॥ अतोब्रह्मणिवर्तेऽ
हमित्यर्थेशास्त्रसंमते ॥ सतिसर्वविरुद्धैक्येनक्वचिद्विभ्रमंकुरु ॥९२१॥ किंचचिन्मात्र
योरैक्येकार्यंद्विपदशिक्षणं ॥ खंजवद्वाचरेत्स्वार्थेवाक्यंतत्रैकरक्षणे ॥९२२॥ अतोब्र
ह्माभिसंबंधाद्ब्रह्मशब्दोस्तुजीवगः ॥ अहंब्रह्मनियम्योस्मीत्यर्थश्चात्वखिलप्रियः ॥ ९२३ ॥

अनुकूलमर्थंसप्रमाणकमाह ॥ ब्रह्माहमिति ॥ ९२० ॥ ९२१ ॥ प्रकारांतरेणापिपरकीयार्थेदोषंवदन्स्वार्थमेवोपपादयति ॥ किंचेति ॥ द्विपदशिक्षणं अहंपदस्य ब्रह्मपदस्यच मुख्यार्थपरित्यागाख्यशिक्षणं । खंजवत् एकपादवत् । तत्रपदद्वयमध्ये । एकरक्षणे एकपदमात्रलक्षणांकृत्वापदांतरस्यमुख्यार्थापरित्यागाख्यरक्षणे ॥ ९२२ ॥ अतः एकपदरक्षणस्यन्याय्यत्वात् । ब्रह्म

ब्रह्मसंबंधीतिजीवगोस्तु जीवप्रतिपादकोस्तु । अहंब्रह्म लक्षणयाब्रह्मपदप्रतिपाद्योस्मीतिवाक्यार्थोस्तु । पदद्वयलक्षणापक्षादप्ये कपदलक्षणायाएवन्याय्यत्वादितिभावः ॥ ९२३ ॥ अयमप्यंगीकारवादइत्याह ॥ अंगीकृत्येति ॥ अनुशासने । सप्तसुप्रथमे त्यादिशब्दानुशासनशास्त्रे । अनुशिष्टश्चमुख्यार्थएवेतिभावः ॥ ९२४ ॥ अस्तुवैदिकपदानामनुशासनबलादर्थद्वयमपिमुख्यं । तथापिभवदुक्तार्थस्यैवांगीकारेकोहेतुरित्यतआह ॥ हिरण्यशृंगमिति ॥ अर्थनं तीर्थप्रार्थनं । मनोवाक्कायकृतपापपरिहारप्रार्थ

अंगीकृत्येदमुदितंवस्तुतस्त्वनुशासने ॥ अनुशिष्टार्थकथनात्स्वार्थत्यागोनमेक्वचित् ॥ ९२४॥ हिरण्य शृंगंवरुणंप्रपद्येसपुनातुमां ॥ इत्यर्थनंचतत्रोक्तंगच्छेद्ब्रह्मसलोकतां ॥ इत्युक्तब्रह्मसालोक्यंमुख्यै क्येनहिशोभते ॥ ९२५ ॥ अहमेवाहमित्यन्यात्मतामंतेप्रतिक्षिपन् ॥ जीवोज्योतिःपुरार्द्रोहमित्येवो क्त्वासमज्जति ॥ यद्बृहिंजातिजीवादावनुशास्तिसपाणिनिः ॥ ९२६ ॥ ॥ ॥

नंच । यजुर्वेदोपनिषदि अघमर्षणसूक्तस्थंहि ब्रह्माहमस्मीतिवाक्यं । तत्रहिवरुणप्रार्थनादिकंबहुधाजीवस्योच्यते । तच्चसाक्षाद्ब्र ह्मत्वेनघटते । अतस्सप्तमीस्वीकारइतिभावः ॥ ९२५ ॥ युक्त्यंतरंचाह ॥ अहमेवाहमिति ॥ अन्यात्मतां अहमित्युक्तस्वस्व रूपादन्यस्यपरब्रह्मणोपिस्वस्वरूपतां । अंते उपसंहारे । पुरापूर्ववाक्ये । अहंपदस्यसर्वत्रसंबंधात् । ब्रह्माहमस्मीत्यादिवाक्येजी वोहमस्मीत्याद्येवोक्त्वेत्यर्थः । नतुस्वस्यपरब्रह्मणासहैक्यमित्येवकारेणाह । सः स्नाता । यद्यस्मात् । बृहिंबृहधातुं । बृहजाति



जीवकमलासनशब्दराशिष्वितिपाणिनेरनुशासनादितिभावः । अयमाशयः । आर्द्रज्वलतिज्योतिरहमस्मि । ज्योतिर्ज्वलतिब्रह्मा हमस्मि । योहमस्मिब्रह्माहमस्मि । अहमस्मिब्रह्माहमस्मि । अहमेवाहंमांजुहोमिस्वाहेतिश्रुतावुपसंहारवाक्येऽहमेवाहंमांजुहोमि स्वाहेतिश्रूयते । तत्रचविशेष्यसंगतैवकारस्यान्ययोगव्यवच्छेदार्थकत्वात्अहमेवाहमस्मि नत्वन्यःपरमात्माप्यहमस्मि । तेनका रणेनमयिपापानांसंभावितत्वात्मन्निष्ठपापाख्यतूलदाहायमांत्वयिजुहोमिस्वाहेत्यर्थलाभात् ब्रह्माहमस्मीतिपूर्ववाक्येपिजीवोहम स्मीत्येवार्थोवाच्यः । ब्रह्मशब्दस्यजीवेप्यनुशासनात् । नतुपरंब्रह्माहमस्मीत्यर्थोवक्तुंयुक्तः । तस्योक्तविधयोपसंहारवाक्यविरुद्ध त्वात् । मज्जतीत्युक्तस्नानरूपक्रियाविरोधाच्चेति । इदंचोपलक्षणं । ब्रह्माहमस्मीतिप्राक्स्वेनैवोक्तवाक्यस्य योहमस्मिब्रह्माहम स्मि । अहमस्मिब्रह्माहमस्मीत्युत्तरवाक्यद्वयेस्वेनैवावश्यकक्रियाध्याहारेणब्रह्माहमस्मिब्रह्माहमस्मीतितत्रतत्रयोवदति । सःब्रह्म शब्दस्यजीवेप्यनुशासनात्अहमस्म्यहमस्मीत्येवाह । अहंशब्दवाच्योजीवोस्मीत्येवाहेतियावत् । एतद्वाक्यसमानार्थकंतद्वाक्यमि तिभावः । नतुपरब्रह्माहमस्मीत्याहेतिव्याख्या । तस्मादहमेवाहं नत्वन्योप्यहमित्युपसंहारात् । अन्यथाहमस्मीत्यस्यसिद्धानुवाद कत्वेनस्थानद्वयेचवैयर्थ्यात् । ब्रह्माहमस्मीतिस्थानद्वयस्थवाक्ययोरपिज्योतिर्ज्वलतिब्रह्माहमस्मीतिपूर्ववाक्योक्तार्थानुवादकत्वेन वैयर्थ्यात् । नचाभ्यासार्थपुनर्वचनमितिवाच्यं । अनुवादाप्रामाण्यपक्षेऽभ्यासस्याप्यप्रयोजकत्वादित्यपिद्रष्टव्यं । प्रकरणानुसारे णैवपुरेत्युक्तं । वस्तुगत्याऽनयोर्वाक्ययोरर्थपर्यालोचनायांअहमेवाहंनत्वन्यइतिवाक्येऽहंपदवाच्यजीवस्यनक्वापिपरब्रह्मभावइत्यर्थ लाभात् । योहमस्मीतिवाक्येवीप्सयासार्वत्रिकाणांब्रह्माहमस्मीतिवाक्यानामप्यन्यार्थकथनात्नक्वापिजीवपरमात्मैक्यावकाशइ

त्यप्यनुसंधेयं ॥९२६॥ आर्द्रपदार्थमाह ॥ आर्द्रतीर्थांबुनिस्नातमिति ॥ मेममरूपमितिस्नातुर्जीवस्यवचनं । ज्योतिःपदार्थमाह ॥ अघविवर्जितमिति ॥ तेनमालिन्यहेतुपापपरिहारेसतितेजोरूपजीवस्याग्निवज्ज्वलनेनकारणेनतीर्थस्नानेनपापपरिहारेसतिप्र काशमानरूपत्वाज्ज्योतिरहमस्मीत्याहेतिभावः । चशब्देनयस्माज्ज्योतिः ज्योतीरूपं जीवस्वरूपंज्वलति । प्रकाशकपुण्याभिवर्धनेन ब्रह्मध्यानेनाभिवृद्धब्रह्मवर्चसेनचज्वलति । अतिशयितप्रकाशंभवति । तेनकारणेनबृहधातोर्वृद्ध्यर्थकत्वाज्जीवेरूढत्वाच्चयोगरूढ्या

आर्द्रतीर्थांबुनिस्नातंरूपंमेऽघविवर्जितं ॥ ज्वलत्यनलवत्तेनज्योतिरस्मीतिचा
ब्रवीत् ॥ ९२७ ॥ परंब्रह्मपरंज्योतिःपरार्द्रोयःकृपार्णवे ॥ नासावहमितिप्राहयो
सौख्यस्याघमर्षणः ॥ ९२८ ॥ किंचाहमर्थोनात्मातेब्रह्माहमितिवाक्ततः ॥ जडा
हंकृत्यैक्यमाहनजीवैक्यंभवन्मते ॥ ९२९ ॥ ॥ ॥

ब्रह्मअतितेजस्वीजीवोहमस्मीत्यब्रवीदित्यपिद्रष्टव्यं ॥९२७॥ सामान्याकारेणस्वव्यवहारस्यातिशयितरूपाभावेतात्पर्यस्यलोकेदर्श नादार्द्रादिसामान्यपदत्रयव्यावर्त्यार्थमाह ॥ परंब्रह्मेति ॥ असौ वासुदेवः परंब्रह्म नारायणःपरंब्रह्म परंज्योतिरुपसंपद्य कृप यापरयाविष्टइत्यादौपरब्रह्मादिपदाभिधेयतयालोकवेदयोःप्रसिद्धः । युक्त्यंतरंचाह ॥ योसाविति ॥ स्वाघपरिहाराययंप्रार्थ यते । कथंतदभेदस्स्वस्येतिभावः ॥ ९२८ ॥ परपक्षेदूषणांतरंचाह ॥ किंचेति ॥ तेमते । ततः अहमर्थस्यात्मभिन्नत्वात्

॥ ९२९ ॥ ननुलक्षणयाब्रह्मपरत्वमंगीक्रियतइत्यतआह ॥ **मानसेति** ॥ अहंकारेआरोपाधिष्ठानब्रह्मचैतन्यप्रवेशेपिजीवचैतन्य स्यवार्तापिनास्तीतिसूचनायोक्तंमानसेति । लक्षणाबीजसंबंधस्यजीवचैतन्येऽभावादित्यर्थः । तस्मादहंब्रह्मेत्यादिवाक्यानांजीव ब्रह्मैक्यपरत्वशंसनंस्वमतहिंसनमेवेतिभावः ॥ ९३० ॥ सूत्रनिरूढं व्याकरणसूत्रनिरूढं । मणिं मणिवन्निर्मलंब्रह्माश्रिततत्वरूप मर्थं । काचं काचवन्मलिनंब्रह्मैक्यरूपमर्थं । कथंशक्रस्येत्यनेन यथाशक्रपदवीभिक्षुकस्यायोग्या ततोप्यत्यंतायोग्यापरब्रह्मपदवी

**मानसाहंकृतेरारोपाधिष्ठानचितैवहि ॥ सिद्ध्येल्लक्षणयाप्यैक्यंनतुजीवचितासह ॥ ९३० ॥**
**मणिंसूत्रनिरूढंचत्यक्त्वाकःकाचमाश्रयेत् ॥ कथंशक्रस्यपदवींभिक्षुकोरोढुमिच्छति ॥ ९३१ ॥**
**यतस्तदात्मानमेवावेदित्यवदधारवाक् ॥ अहंब्रह्मास्मीतिवाक्यंब्रह्मवाक्यतयास्फुटं ॥९३२॥**
**अतस्साकेवलंतस्यैकस्यैवब्रह्मतांवदेत् ॥ अन्ययोगव्यवच्छेत्रीहन्यादवधृतिर्नचेत् ॥ ९३३ ॥**
**विशेष्यसंगतस्यैवकारस्यबुधमंडली ॥ अन्ययोगव्यवच्छेदमर्थयत्प्रत्यपद्यत ॥९३४॥ ॥**

तिसूचयति ॥ ९३१ ॥ युक्त्यंतरेणापियत्रक्कापिस्थितस्याहंब्रह्मेतिवाक्यस्यपरब्रह्मवाक्यतैवनजीववाक्यतेत्याह ॥ यतइति ॥ वाक् । तदात्मानमेवावेदहंब्रह्मास्मीतिमाध्यंदिनश्रुतिः । तद्ब्रह्मअहंब्रह्मास्मीतिआत्मानमेवावेद नत्वन्यमितिअहंब्रह्मेतिवाक्यं ब्रह्मवाक्यतयाऽवदधार । अतःकारणात् । सावाक् । तस्यब्रह्मणः । नचेत् । ब्रह्मणएववाक्यंनचेत् ॥ ९३२ ॥ ९३३ ॥ विशे ष्यस्यैवब्रह्मणः आत्मानमितिकर्मत्वोक्तेस्तत्संगतस्याप्येवकारस्यविशेष्यसंगतत्वमुक्तं । तदेवात्मानंब्रह्माहमस्मीत्यावेद तदात्मा

नमेवब्रह्माहमस्मीत्यावेदेतिवावाक्यद्वयस्यच पार्थएवात्मानंधनुर्धरंमेने पार्थआत्मानमेवधनुर्धरंमेनइतिवाक्यद्वयवत्फलतस्सा म्यादितिभावः । अथवा एवशब्दस्यतदित्यनेनैवसंबंधात्विशेष्यसंगतत्वंद्रष्टव्यं । अतः परब्रह्मैक्यवाक्यत्वात् । तांश्रुतिं । यद्यस्मात् । तेषुजीवेषु अर्थात् आत्मानमेवब्रह्मेत्यावेदेत्युक्तेऽन्येषुब्रह्मतानास्ति । अस्तिचेत्तानपिब्रह्मतयाकुतोनवेत्ति । विद्यमा नस्यवेदनयोग्यत्वात् । अतोनास्त्येवेत्यर्थतः । अनेनैववाक्येनजीवानामब्रह्मत्वस्यापिसिद्धेरितिभावः । तत्तस्मात् ॥ ९३४ ॥

अतोजीवब्रह्मतायांनतांयुंजीतबुद्धिमान् ॥ यत्तेष्वब्रह्मताप्यर्थात्प्राप्तातद्धेदवागियं ॥९३५॥<br>
ऋषयोनुवदंत्येतांप्रभोर्वाक्यत्वतःक्वचित् ॥ मत्तःपरतरंनास्तीत्यादिवाक्यानुवक्तृवत् ॥९३६॥<br>
सोहमित्यादिवाक्यस्याप्येवमेवगतिर्भवेत् ॥ योवेत्तिवेदमर्यादांतद्धीत्यैनेदृशंवचः ॥ ९३७ ॥<br>
सर्वंब्रह्मेतिवाक्याच्चकिंजडब्रह्मतापिते ॥ बाधात्ततस्तुसंकोचेजीवादप्यस्तुबाधितात् ॥९३८॥

॥ ९३५ ॥ तर्हिंक्वचित्क्वचित्प्रदेशेऋषिभिरपिब्रह्माहमस्मि सोहमस्मीत्याद्युच्यते । तस्यकागतिरित्यतआह ॥ ऋषयइति ॥ मत्तःपरतरंनान्यदितिकृष्णवाक्यस्यान्यैरपिभक्त्यादिनेदिनेपाठेपियथातेषांसर्वोत्तमतानायाति । तथेदमपि । तस्मादघमर्षणसू क्तस्थवाक्यमपिनजीवानांब्रह्मैक्यसंपादकमितिभावः ॥ ९३६ ॥ ९३७ ॥ सर्वंखल्विदंब्रह्मेतिवाक्यस्यप्राग्दूषितत्वेपितत्रानुक्तदो षमपिवक्तुंपुनराह ॥ सर्वमित्यादिना ॥ ततःजडात् । बाधितात् । जीवादपि । अस्तु संकोचोस्तु । नाहंसर्वज्ञइतिजीवैक्य



स्यापिबाधितत्वात् । किंचजडेनाहंसर्वज्ञइतिप्रत्यक्षाभावेनजीवभेदस्येवसाक्षिरूपातिप्रबलस्वस्वप्रत्यक्षबाधाभावात् अतींद्रियेषु जडेषुप्रायःपरप्रत्यक्षस्याप्यभावात्जडस्यब्रह्मैक्येयुक्तिबाधएव नतुप्रत्यक्षबाधः । ईश्वरप्रत्यक्षस्यचास्माभिरदर्शनात् । जीवाभेद स्तूक्तसयुक्तिकप्रबलप्रत्यक्षबाधितत्वात्सर्वथापरित्याज्यइतिभावोविज्ञेयः ॥ ९३८ ॥ युक्त्यंतरंचाह ॥ इदंपदार्थइति॥ तत् पदं । इदंपदं । जडपरित्यागइत्युपलक्षणं । चेतनांगीकारेपिप्रकुप्यतीतिद्रष्टव्यं ॥ ९३९ ॥ ततः मुख्यार्थायोगात् ॥ ९४० ॥

इदंपदार्थोहिजडमनिदंब्रह्मतेमते ॥ अतोजडपरित्यागेपदंतद्धिप्रकुप्यति ॥ ९३९ ॥<br>
जडस्यचैक्यंमुख्यंनततोन्यार्थस्तवापिहि ॥ ९४० ॥ यतस्सर्वंसमाप्नोषितत्सर्वोसीतिभा<br>
रते ॥ गीतोक्तिस्तद्बलात्सर्वव्यापितैवार्थईर्यतां ॥ ९४१ ॥ ऐंद्रंव्याकरणंयस्यमूलरूपं<br>
न्यरूरुपत् ॥ सपार्थइशब्दशक्तिज्ञइशक्तिज्ञो(तः)श्चपरात्मनः ॥ ९४२ ॥ ॥

सप्रमाणकंस्वाभिमतार्थमाह ॥ यतइति ॥ अनेन सर्वंसमाप्नोषिततोसिसर्वइतिवाक्यंसंगृह्णाति । यतस्त्वंसर्वंजगत्समाप्नोषि सम्यगाप्नोषि । आप्लृव्याप्ताविति धातुः । समाप्त्यर्थकत्वेसर्वंसमापयसीतिणिजंतप्रयोगस्स्यात् । अस्मिन्प्रयोगेतु व्याप्त्यर्थकत्वमेव ग्राह्यं । अन्यथासकर्मकतानस्यात् । किंतुत्वंसमाप्तोभवसीत्येवप्रयोगस्स्यात् । तत स्सर्वव्याप्तत्वात् सर्वः सर्वशब्दवाच्योसीति कृष्णंप्रत्यर्जुनवाक्यं ॥ ९४१ ॥ व्याकरणकर्तृत्वादर्जुनकृतशब्दानुशासनंमान्यमित्याह ॥ ऐंद्रमिति ॥ यस्यार्जुनस्यमूलरूप

मिंद्रः । न्यरूरुपत्निरूपयामास । अतः व्याकरणकर्तृत्वात् । शब्दशक्तिज्ञइत्यनेनमुख्यएवायंप्रयोगःनत्वमुख्यइतिसूचयति । यतस्ततइतिशब्दप्रवृत्तिनिमित्तकथनात् प्रवृत्तिनिमित्तवतिचप्रयोगस्यमुख्यत्वादितिभावः । परात्मनश्शक्तिज्ञइत्यनेन नामानि सर्वाणियमाविशंतीत्यादिनोक्तसर्वशब्दमुख्यवाच्यत्वरूपभगवच्छक्तिज्ञत्वाच्चमुख्यमेवप्रयोगमनुशास्तीतिभावः ॥ ९४२ ॥ ऐक्यार्थकत्वेउपक्रमवाक्यविरोधंचाह ॥ तज्जलानितीति ॥ अनेन तज्जलानितिशांतउपासीतेतिवाक्यंसंगृह्णाति । इति अने

तज्जलानितिशांतस्सन्नुपासीतेतिपूर्ववाक् ॥ उपास्योपासकत्वंहिप्राहतच्चकथंतव ॥ ९४३ ॥
जीवइत्येवलक्ष्यत्वेपदयोस्सुविरुद्धता ॥ चिन्मात्रस्यतुलक्ष्यत्वेव्यर्थंसर्वपदंतव ॥ ९४४ ॥ यदि
सर्वभ्रमाधिष्ठानत्वंसर्वपदोदितं ॥ तदामुख्यार्थसंत्यागस्सर्वाधिष्ठानतैवच ॥ ९४५ ॥ अर्थो
स्तुलाघवान्मध्येभ्रमःकस्मान्निवेश्यते ॥ पूर्वश्रुतावुक्तसूत्ररीत्यावार्थोभविष्यति ॥ ९४६ ॥

नप्रकारेण । पूर्ववाक् सर्वंखल्विदंब्रह्मेत्यतःपूर्ववाक् । तदेतद्दृष्टंचश्रुतंचेत्युपासीतेतिवाक् । उपासीतेतिपदस्योभयत्रसाम्यादेकप्रकारत्वं उपास्तिविधायकोपक्रमोपसंहारवाक्यद्वयविरोधस्फोरणायवक्रमुद्रयाप्रवृत्तिः । एवंचोपास्तिविधायकवाक्यद्वयमध्यस्थवाचस्तद्विरुद्धमैक्यंअर्थंवदन्पूर्वोत्तरविवेकशून्यइतिभावः ॥९४३॥ लक्ष्यत्वे सर्वपदलक्ष्यत्वे । व्यर्थं चिन्मात्रेऽनेकत्वाभावाद्व्यर्थमित्यर्थः ॥९४४॥ सर्वाधिष्ठानता सर्वाधारता । लाघवात् सर्वभ्रमाधिष्ठानत्वापेक्षयासर्वाधिष्ठानत्वस्यलघुत्वात् । जीवपक्षेजडप

क्षेचैकार्थ्यलाभेनलघुत्वाच्च ॥९४५॥९४६॥ तदेवसूत्रंप्रदर्शयन्सकलाद्वैतवाक्येष्यापातप्रतीतार्थबाधेनास्यैवन्यायस्यसर्वत्रसंचार यितुंशक्यत्वात्पराभिलषितैक्यस्यनक्काप्यवकाशइत्याह ॥ सप्तस्विति ॥ तस्मात्त्वमसि तस्मिंस्त्वमसि । अहंब्रह्मण्यस्मि अहंतस्मिन्नस्मि । सर्वस्मिन्ब्रह्म । इत्यादिप्रकारेणसकलाद्वैतवाक्येपिअबाधितार्थस्यैवविद्यमानत्वेनबाधितैक्यार्थस्यक्काप्यनव काशात् ॥९४७॥ तर्हिंप्रथमाविभक्तेर्नक्काप्यवकाशइत्यतआह ॥यथाश्रुतेति॥ यथाश्रुतवाक्यार्थबाधाभावेप्रथमादिविभक्तीनांन

सप्तसुप्रथमायस्मात्क्लृप्तावेदेषुवैदिकैः ॥ तस्मादद्वैतवाक्यानांलक्षादपिनभीर्मम ॥९४७॥ यथाश्रुतप दस्यार्थस्यायोगेपूर्वयोगिभिः ॥ व्यत्यासशासनान्नातिप्रसंगोयत्रकुत्रचित् ॥९४८॥ अतस्तवायुधंसर्वं बलान्नीतंपरैर्युधि ॥९४९॥ यदेकज्ञानतस्सर्वविज्ञानंचश्रुतौश्रुतं ॥ अतोपिनपरात्मैक्यंसिद्ध्येदद्वैतवा दिनां ॥९५०॥ यदिस्याद्ब्रह्मविज्ञानेज्ञेयंजगदिदंचते ॥ तदाशंकावकाशस्स्यान्नैवंकिलभवन्मतं ॥९५१॥ निष्प्रकारकचिन्मात्रनिर्विकल्पकदृक्तव ॥ ब्रह्मदृग्जगतोज्ञानंतदाकस्यास्तिकथ्यतां ॥ ९५२ ॥ ॥

व्यत्यासइतितत्रसर्वत्रतासामेवावकाशइतिभावः ॥ ९४८ ॥ अत स्सर्वाद्वैतवाक्यानांस्वानुकूलीकरणात् ॥ ९४९ ॥ उततमादे शमप्राक्षोयेनाश्रुतंश्रुतंभवत्यमतंमतमविज्ञातंविज्ञातंभवतीतिश्रुतौब्रह्मविज्ञानेनसर्वविज्ञानमुच्यते । तच्चसर्वस्यब्रह्मस्वरूपत्वमभि प्रेत्यैवेतिमायावादिनोवदंति । तदपिनयुक्तमित्याह ॥ यदेकेति ॥ श्रुतौश्रुतंयत् अतोपीतिसंबंधः ॥ ९५० ॥ कुतोनसिद्ध्येदि त्यतआह ॥ यदीति ॥ भवन्मतं एवं पूर्वोक्तप्रकारेणनकिल ॥ ९५१ ॥ तर्हिंकथमित्यतआह ॥ निष्प्रकारकेति ॥ तवमते

ब्रह्मदृक् ब्रह्मपरोक्षज्ञानं निष्प्रकारकस्यनिर्धर्मकस्य चिन्मात्रस्य ब्रह्मचिन्मात्रस्य चित्त्वरूपधर्मस्यापिव्यावृत्त्यर्थमात्रपदं । निर्वि कल्पकदृक्किल निर्विकल्पकरूपापरोक्षज्ञानंकिल । तदा एतादृशनिर्विकल्पकज्ञानदशायां । कस्यजगतइतिसंबंधः । तवमतेब्रह्मा परोक्षज्ञानरूपे श्रवणमननोत्तरकालीने एकविज्ञाने ब्रह्मधर्माणामपिनभानं । अंततश्चित्त्वस्यापिनभानमितिप्रक्रिया । तदासर्व स्यजगतोज्ञानंकथंसंभावितमितिभावः ॥ ९५२ ॥ युक्त्यंतरंचाह ॥ अपिचेति ॥ आरोपितस्यरजतस्य अधिष्ठानस्य शुक्तिश

अपिचारोपितज्ञानंनाधिष्ठानस्यदर्शने ॥ अतोपिनजगज्ज्ञानंब्रह्मज्ञानंभवन्मते
॥ ९५३ ॥ चरमब्रह्मविज्ञानप्रशंसार्थंखलुश्रुतिः ॥ अर्थवादमिमंवक्तितत्तश्चरममे
वतत् ॥ वाच्यंत्वयैकविज्ञानंकथंतत्रान्यदर्शनं ॥९५४॥ अतोभ्रांतजगज्ज्ञानमधि
ष्ठानात्मदर्शने ॥ जातमित्यपिनैकस्यज्ञानात्सर्वस्यदृक्तव ॥ ९५५ ॥ ॥

कलस्य । अधिष्ठानयाथात्म्यज्ञानदशायां आरोपितज्ञानंकुत्रापिनभवतीत्यर्थः । भवन्मतेब्रह्मणिजगतःकल्पितत्वमतोब्रह्मतत्त्व ज्ञानदशायांतत्रारोपितजगज्ज्ञानंकथंतवमतेस्यादितिभावः ॥ ९५३ ॥ अत्रोक्तंज्ञानंचरमज्ञानमेवेत्यत्रयुक्तिमाह ॥ चरमेति ॥ इमं येनाश्रुतमित्यादिकं । उपलक्षणंचैतत् । अश्रुतंश्रुतममतंमतमित्युक्तश्रवणमननोत्तरकालीनत्वात् वीत्युपसर्गबलाच्चेत्यपिद्र ष्टव्यं । तदेकविज्ञानमितिसंबंधः । तत्र एकविज्ञाने । अन्यदर्शनं जगद्दर्शनं ॥ ९५४ ॥ अतः एकविज्ञानस्यचरमापरोक्षज्ञान



त्वात् । भ्रांतजगज्ज्ञानं जगद्भ्रमरूपज्ञानमितियावत् । अधिष्ठानात्मदर्शने अधिष्ठानभूतब्रह्मदर्शनेसत्येवजातं नत्वन्यथा । भ्रांते रधिष्ठानज्ञाननियतत्वादित्यर्थः । इत्यपि इतिहेतोरपि । तवमते । एकस्यज्ञानंसर्वस्यदृक्नाभूत् । जगदारोपदशायांयदधिष्ठान ब्रह्मज्ञानं तदेवएकविज्ञानमस्तु । तदासर्वविज्ञानमप्यस्त्येव । अयमेवश्रुत्यर्थइत्यपित्वयावक्तुंनशक्यते । एकविज्ञानपदेनमोक्ष हेतुभूतब्रह्मापरोक्षज्ञानस्यैवश्रुत्याअभिप्रेतत्वादितिभावः ॥ ९५५ ॥ तस्मा द्भ्रमकालीनाधिष्ठानज्ञानरूपब्रह्मज्ञानस्याप्रस्तुतत्वा

तस्माद्भ्रमस्यद्वावंशौस्तइत्यपिनतेगतिः ॥ भ्रमानुकूलसामान्यधीर्विज्ञानं
कथंवद ॥ ९५६ ॥ एवमप्यखिलभ्रांतजगदैक्यंभवेत्परं ॥ अप्रशंस्यप्रशं
सास्यात्प्रक्रमस्याप्यतिक्रमः ॥ ९५७ ॥ एकज्ञानेनसर्वस्यज्ञानंकाणवश्रुतिः
पुरा ॥ प्रस्ताव्यपुनराहैतदमृतत्वमितिस्फुटं ॥ ९५८ ॥ ॥

त् । दोषांतरंचाह ॥ भ्रमेति ॥ तथासतिवीत्युपसर्गवैयर्थ्यंचस्यादितिभावः ॥ ९५६ ॥ पुनरपिदोषत्रयमाह ॥ एवमिति ॥ एवमपि भ्रमकालीनाधिष्ठानज्ञानस्यैकविज्ञानत्वेपि । अनेनैकविज्ञानेसतिसर्वविज्ञानेनभ्रांतिकल्पितजगदैक्यमेवब्रह्मणोभवेत् । अस्मिन्नेकविज्ञानेतस्यैवसर्वस्यभ्रांत्याप्रतीयमानत्वात् । तच्चविरुद्धमितिभावः । अप्रशंस्यस्य संसारहेतुतयानिंद्यस्य । प्रक्रमस्य मोक्षोपयोगिब्रह्मज्ञानोपक्रमस्य ॥ ९५७ ॥ श्रुत्यंतरसमाख्ययाचमोक्षोपयोगिब्रह्मज्ञानमेवेदमेकविज्ञानमित्याह ॥ एकज्ञानेने

ति ॥ काण्वश्रुतिः आत्मनिविज्ञातेसर्वमिदंखलुविज्ञातंस्यादितिश्रुतिरित्यर्थः । एतदमृतत्वमित्यनेन एतावदरेखल्वमृतत्वमिति श्रुतिंसंगृह्णाति । अरेगार्गि एतावत् एतादृशमाहात्म्यसहितंएतज्ज्ञानमित्यर्थः । अमृतत्वं मुक्तिःखलु । इतिवाक्ययोजना ॥ ९५८ ॥ अस्यार्थंसदृष्टांतमाह ॥ लांगलमिति ॥ मुक्तिहेतुतात्राक् ज्ञानस्यमुक्तिहेतुतावाक् । इयं एतावदरेखल्वमृतत्वमिति श्रुतिः । यथालांगलंजीवनमितिसामानाधिकरण्योक्तावपिलांगलस्यजीवहेतुतैवार्थः । तथाएतावदेवामृतत्वमित्युक्तेपिपूर्वोक्त ज्ञानस्यामृतत्वहेतुतैवार्थइतिभावः । किलेत्यनेन आत्मनिविज्ञातेसर्वमिदंविज्ञातंस्यात् । एतावदरेखल्वमृतत्वमित्युपसंहारात्

लांगलंजीवनमितिप्रोक्तेजीवनहेतुता ॥ यथायातितथामुक्तिहेतुतावागियंकिल ॥ ९५९ ॥
अतःप्रमैववाच्येयंसातेचिन्मात्रगोचरा ॥ एकज्ञानेनसर्वस्यज्ञानंतस्मात्कथंवद ॥ ९६० ॥ तद
नारोपरूपैववाच्यासाचरमप्रमा ॥ सर्वस्यनास्तिताज्ञानमपितत्रनतेमते ॥ ९६१ ॥ ॥

अमृतत्वसाधनमात्मदर्शनं द्रष्टव्यइत्यनूद्येतिविवरणोक्तिं लांगलंजीवनमितितत्वदीपनोक्तदृष्टांतवचनंसूचयति ॥ ९५९ ॥ अतः स्वमतएवसिद्धत्वात् । प्रमा चरमापरोक्षप्रमा । इयं एकविज्ञानरूपा । सा चरमापरोक्षप्रमा । तेमते । तस्मा च्चिन्मात्रगोचरत्वात् ॥ ९६० ॥ त न्मोक्षहेतुत्वात् । सा एकप्रतीतिः अनारोपरूपा चरमप्रमैववाच्येतिसंबंधः । ननुसर्वस्यनास्तिताज्ञानंहि बाधः । अतोबाधरूपेचरमज्ञानेनिषेध्यतयासर्वज्ञानमप्यस्तीतिशंकांनिराकरोति ॥ सर्वस्येति ॥ ते निष्प्रकारकचरमज्ञानवादि

नः । ब्रह्मचिन्मात्रनिर्विकल्पकरूपेचरमज्ञानेसर्वज्ञानमपिनशोभते ॥ ९६१ ॥ सर्वाभावज्ञानंतुसुतरांनघटतइत्याह ॥ यतइति ॥ अस्मिन्पक्षेदोषांतरंचाह ॥ सर्वस्याभावधीरिति ॥ ९६२ ॥ नचेत् अभावज्ञानमभावज्ञानमेवनचेत् । भावज्ञानंचभवेच्चेदि दित्यर्थः । परःप्रतिवादी ॥ ९६३ ॥ बाधकांतरमप्याह ॥ तदभावेति ॥ अभावाभावस्यभावरूपत्वेनभावकथायामभावस्या

यतोह्यभावविषयंनप्राहुर्निर्विकल्पकं ॥ सर्वस्याभावधीस्सास्यात्सर्वज्ञानंतुतत्कथं
॥ ९६२ ॥ घटस्यनास्तिताज्ञानंघटज्ञानंहिकोवदेत् ॥ नचेदद्वैतविज्ञानीपरस्स्यात्वंतुभेद
दृक् ॥ ९६३ ॥ तदभावकथांवक्तुंतद्भावंकथयेद्धिकः ॥ अर्थाभावज्ञमर्थज्ञंवक्तिकोवापुमा
न्भुवि ॥ ९६४ ॥ किंचैवंसर्वविज्ञानमेकज्ञानाद्यदीष्यते ॥ तदामिथ्याभूतसर्वजगदैक्यं
भवेत्सतः ॥ ९६५ ॥ तस्मात्तदेकज्ञानेनसर्वज्ञानंश्रुतीरितं ॥ तवनार्थायकस्मैचिदनर्थाया
भवत्परं ॥ जीवैक्यस्यानुपायत्वाज्जडैक्यस्यैवचागतेः ॥ ९६६ ॥ ॥

पिनिषेध्यतयाकथ्यमानत्वात्रावणाभावंवक्तुंरावणसद्भावमेवकथयेदितिभावः । तथाअंजनभूखननादिप्रयत्नेप्यर्थाभावदर्शीअर्थ दर्शीस्यात् । एवंचसर्वव्यवहारसांकर्यस्यादितिभावः ॥ ९६४ ॥ अस्मिन्नपिपक्षेमिथ्याभूतजगदैक्यमेवब्रह्मणःस्यादित्याह ॥ किंचेति ॥ एवं निषेध्यतया । सतःब्रह्मणः ॥ ९६५ ॥ मंदाशंकापरिहारमुपसंहरति ॥ तस्मादिति ॥ तत् अधिष्ठानसामा

न्यज्ञानेनारोपितज्ञानरूपं जगन्नास्तितारूपबाधज्ञानेनिषेध्यतयाजगज्ज्ञानरूपंच । अर्थाय जीवैक्यरूपार्थाय । अनर्थाय मिथ्याभूतजगदैक्याय । तदेवविशदयति ॥ जीवैक्यस्येति ॥ ९६६ ॥ अतः अपेक्षिताप्राप्तेरनपेक्षितप्राप्तेश्चकिंकेनसंगतमितिसंबंधः ॥ ९६७ ॥ दोषांतरंचाह ॥ विरुद्धइति ॥ विरुद्धोहेतुः ब्रह्मप्रमाविषयत्वरूपहेतुः । दृश्यत्वंहिमिथ्यात्वेहेतुरुक्तः । तच्चजगतः उक्तरीत्याचरमवृत्तिविषयत्वेप्रमाविषयत्वरूपमेवाभूत् । एवंचब्रह्मवज्जगतस्सत्यत्वसाधकत्वेनविरुद्धइत्यर्थः । एतजगत् । इष्टं

अतोजैवैक्यमाशास्यंज्ञानेज्ञातमिदंजगत् ॥ प्रदृश्यमानमखिलंकिलकिंकेनसंगतं ॥ ९६७ ॥ विरुद्धो हेतुरुक्तस्स्यान्मिथ्यात्वस्यतुसाधने ॥ चरमब्रह्मविज्ञानेसर्वस्यज्ञातताधतः ॥ ९६८ ॥ ब्रह्मवज्जगदेत च्चकरोतिपरमार्थसत् ॥ अतश्श्रुत्यर्थकथनेतवेष्टंनैवसिद्ध्यति ॥ ९६९ ॥ अश्रुतार्थपरत्वांतुश्रौतार्थो हंतिधीमतां ॥९७०॥ अतस्सत्यत्वचित्त्वाद्यैस्सदृशत्वाच्चराचरं ॥ तदंगेष्वाश्रितत्वाद्धातज्ज्ञानेज्ञायते जगत् ॥९७१॥ दृष्टैकधूमसादृश्याद्धूममात्रस्यधीर्नकिं ॥ व्याप्तिग्रहायतच्छब्दवाच्यत्वस्यग्रहायवा ॥९७२॥

मिथ्यात्वजीवैक्यादि ॥ ९६८ ॥ ९६९ ॥ भावज्ञानस्यअभावज्ञानतायाअश्रुतत्वात्अश्रुतार्थपरं ॥ ९७० ॥ अतः अन्यार्थस्यायोगात् । आद्यपदेनार्थक्रियाकारित्वं नित्यत्वमानंदादिकंचगृह्यते । सदृशत्वात् हरेस्सदृशत्वात् । चराचरपदेनचेतनाचेतनजगदुच्यते । तदंगेषु तस्यहरेरवयवेषु । तज्ज्ञाने ब्रह्मज्ञाने इत्येवार्थइतिशेषः ॥ ९७१ ॥ सादृश्यादेकविज्ञानेनसर्वविज्ञानंसर्वजनसंप्रतिपन्नदृष्टांतमुखेनदर्शयति ॥ दृष्टेति ॥ दृष्टस्यैकधूमस्यसादृश्यात् एतन्निष्ठसकलधूमप्रतियोगिकसादृश्यादित्यर्थः । वस्तु



स्थित्याआकारादिनाअस्यातीतानागतसकलधूमसदृशत्वादितियावत् । तच्छब्दोधूमशब्दः । एकधूमदर्शनेहिस्वाकारसदृशाकारत्वरूपसादृश्यप्रत्यासत्त्यासर्वेधूमाःव्याप्तिग्रहायसंकेतग्रहायवागृह्यंतइतिसर्वेषामविवादं । सामान्यप्रत्यासत्त्येतिवदंस्तार्किकोपि एकज्ञानेनसर्वज्ञानमंगीकरोत्येव । अभावसाध्यकव्याप्तिग्रहायअभावादिपदसंकेतग्रहायचसादृश्यस्यैवप्रत्यासत्तितयातेनापिवक्तव्यत्वात् । सर्वत्रापिसैवप्रत्यासत्तिरस्तु । किंचवराहादिपरीक्षांबोधयंतोपिरूपरेखाभारादिनैवबोधयंति । तेपुनस्सर्वत्रतादृशरेखादिभिरेववराहत्वबुद्धिंकुर्वंति । विलक्षणरेखादिनातुतद्बुद्धिंत्यजंतीतिआपणवीथीस्थाअपिजानंति । रेखादिकंविनाकेवलंवराहत्वजात्यानकस्यापिकचिद्बोधः । अतोन्वयव्यतिरेकाभ्यांसादृश्यस्यैवोपस्थापकत्वमुचितं । किंचजातेराधारमात्रमलं । आधारनिय

नानालंकारगंधाद्यैरलंकृतनिदर्शने ॥ तदलंकारगंधादिदर्शनंचनकिंनृणां ॥ ९७३ ॥

मवतीचजातिःकंचिदाधारमेवज्ञापयेत् । आकारविशेषबोधनेकथंतस्याःशक्तिः । यदिच एकत्रयादृशाकारवति सादृष्टा अन्यत्रापितादृशाकारवानेवाधारोभवेदितिनियमः । अतस्तमपिबोधयतीतिमन्यसे तर्हियादृशतादृशशब्दार्थस्यसादृश्यत्वेन जातिवादिनापिव्यक्तिगतसादृश्यस्यैवपुरस्कर्तव्यत्वात् सैवप्रत्यासत्तिरस्तु । लाघवात्सर्वानुभवसिद्धत्वाच्च । अपिचमुखप्रतिभासायदर्पणादिनाप्रतिमुखंपश्यंस्तार्किकोपिसदृशस्यसदृशांतरोपस्थापकत्वंकथंनमनुते । नहितदेवतत् । प्रतिमुखत्वात् । नापिमुखत्वजातिमत् । येनजात्यैवोपस्थापकंस्यात् । प्रतिमुखत्वादेव । अतस्साधूक्तंदृष्टैकधूमसादृश्यादिति ॥९७२॥ सर्वाधारहरिदर्शनेसर्वस्यज्ञान

मित्यत्रापिदृष्टांतमाह ॥ नानालंकारेति ॥ ९७३ ॥ अस्मिन्नर्थेप्रमाणंचाह ॥ अद्भुतानीति ॥ इहेत्यस्यविवरणंभूमावित्यादि । सर्वात्मके सर्वमात्मनियस्यसःसर्वात्मा । स्वार्थेकप्रत्ययः । तानिअद्भुतानिसंतीत्यर्थः । सर्वात्मकपदस्यसर्वस्वरूपत्वार्थकत्वे त्वयितानीत्युक्ताधाराधेयभावायोगात्उक्तएवविग्रहः । अतःसर्वाधारंत्वांविपश्यतःमेअदृष्टंकिंनकिमपि । तवदर्शनेत्वदंगाश्रित सर्वस्यापिदृष्टत्वादितिवाक्यार्थः । एवंचएकविज्ञानेसर्वविज्ञानस्यकानुपपत्तिरितिभावः । विश्वरूपं विश्वं आपातालंजगत्स्वांगे

अद्भुतानीहियावंतिभूमौवियतिवाजले ॥ त्वयिविश्वात्मकेतानिकिंमेऽदृष्टंविपश्यतः
॥ ९७४ ॥ इत्यक्रूरवचःपश्यविश्वरूपंचतंस्मर ॥ शिशोर्यस्यकिलास्येप्रागपश्यद्विश्वमं
बिका ॥ ९७५ ॥ त्वयिदृष्टेऽखिलादृष्टाइतिग्रामेश्वरंनरं ॥ अन्यदर्शनजन्यस्यफलस्या
प्यत्रसंभवात् ॥ ९७६ ॥ यथावदंतिसर्वेषांहरिंसर्वेश्वरंतथा ॥ महाफलप्रदातारंप्रशं
सतिमहाप्रभुं ॥ ९७७ ॥ अमुख्योर्थोपिमुख्यार्थगुणलाभायकथ्यते ॥ ९७८ ॥ ॥

रूपयतिप्रकाशयतीतिविश्वरूपं तंनारायणं । अणुरूपेविश्वरूपाभावशंकांपरिहरति ॥ शिशोरिति ॥ अंबिका यशोदा ॥९७४॥ ॥ ९७५ ॥ भगवतस्स्वातंत्र्यमादायापिएकविज्ञानेनसर्वविज्ञानंघटयितुंदृष्टांतमाह ॥ त्वयीति ॥ अन्यदर्शनजन्यस्य अप्रधान पुरुषांतरदर्शनजन्यस्य । अत्र प्रधानपुरुषदर्शनेसतियथावदंतीतिपूर्वेणान्वयः । सर्वेषांमहाफलप्रदातारंप्रशंसति । भगवद्विज्ञाना देवसर्वज्ञातंभवतीतिस्तौति ॥ ९७६ ॥ ९७७ ॥ ननुतर्हिसर्वस्यज्ञानेयत्फलंतद्भवतीत्यनुक्त्वासर्वस्यज्ञानंभवतीतिश्रुतौलाक्षणिक

प्रयोगः किंनिमित्तइत्यतःसर्वत्रलाक्षणिकाद्यमुख्यप्रयोगस्यबीजमाह ॥ अमुख्यइति ॥ मुख्यार्थगुणलाभायेत्यमुख्यार्थगुणला भस्याप्युपलक्षणं । प्रकृतेमुख्यार्थभूतेसर्वज्ञानेभगवज्ज्ञानादप्रधानत्वाख्यगुणलाभात्सएवोक्तः । गंगायांघोषइत्यादौ अमुख्यार्थे पिगुणलाभः ॥ ९७८ ॥ तदेवदर्शयति ॥ गंगापदेनेति ॥ तस्यतीरस्य । तत्पदात्गंगापदात् । लक्ष्यत्वेयद्यस्मात् । तर्हिगंगा तीरेघोषइत्याद्येववाक्यमस्तु । कस्मादमुख्यवृत्तिराश्रियतइत्यतआह ॥ वाक्यंचेति ॥ ९७९ ॥ यद्यस्मात् । मुख्यार्थयोगिन

गंगापदेनतीरस्यलक्ष्यत्वेतस्यतत्पदात् ॥ पावित्र्यमपियत्सिद्ध्येद्वाक्यंचलघुजा
यते ॥ ९७९ ॥ यदल्पपदवाक्येनबहोर्मुख्यार्थयोगिन' ॥ अर्थस्यवक्रीतद्वृत्तिरि
यंलोकमतामता ॥ ९८० ॥ किंचब्रह्मणिविज्ञातेसतितस्यप्रसादतः ॥ सार्वज्ञ्यंजा
यतेनॄणामितिसर्वस्यसंमतं ॥ ९८१ ॥ अतश्श्रुतिरियंसाध्वीब्रवीत्यखिलसंमतं ॥
इदमेवार्थमित्यासीत्सर्वश्रुतिमनोहरं ॥ ९८२ ॥ ॥ ॥

इतिप्रकृतापेक्षया । अर्थस्यप्रयोजनस्य । तत्तस्मात् । गंगातीरेघोषइत्यतोगंगायांघोषइत्यस्यसिंहसदृशोदेवदत्तइत्यस्य सर्वज्ञान फलंभवतीत्यतस्सर्वज्ञातमित्यस्यचलघुत्वात्वाक्यलाघवायगुणलाभायचामुख्यावृत्तिरितिभावः ॥ ९८० ॥ श्रुतेरतिस्पष्टमर्थां तरंचाह ॥ किंचेति ॥ नॄणां सनकनारदादीनां । इति इदंप्रमेयं ॥ ९८१ ॥ अत स्सर्वजनसंमतत्वात् । इतिअनेनप्रकारेण

सर्वंप्रमेयं ॥ ९८२ ॥ अर्थांतराणिचाह ॥ सर्वकर्तृत्वेति ॥ ९८३ ॥ ९८४ ॥ ममतेश्रुतीनांस्मृतीनांचप्रायोनिगूहितार्थत्वमे वस्वभावः । अतस्सर्वत्रविरुद्धापातार्थेभरोनकर्तव्यइत्यत्रप्रागुक्तस्मृतिंस्मारयति ॥ बर्हिष्मन्निति ॥ ९८५ ॥ ९८६ ॥ तथा सिंहोदेवदत्तइतिवाक्यवत् । ब्रह्मसदृक्षतां जीवस्यकतिपयैर्गुणैर्ब्रह्मसमानतांवक्तुंश्रुतिस्तत्त्वमसीत्याहेतियोजना । लोकवेदानुसा

सर्वकर्तृत्वसार्वज्ञसर्वेशत्वादिसद्गुणैः ॥ सहितस्यहरेर्ज्ञानेसर्वंचज्ञायतेयतः ॥ ९८३ ॥ अतो प्येकस्यविज्ञानेसर्वज्ञानंभवेन्मम ॥ निर्विकल्पकचिन्मात्रज्ञानेतेज्ञकुतोन्यदृक् ॥ ९८४॥ बर्हि ष्मन्नेतदाख्यानंपरोक्षेणप्रकीर्तितं ॥ यत्परोक्षप्रियोदेवोभगवान्विश्वभावनः ॥ ९८५ ॥ इति भागवतोक्त्याचकचिद्वाग्वृत्तिरीदृशी ॥ श्रुतीनांचस्मृतीनांचतत्त्वंगूहयितुंमहत् ॥९८६॥ तथा तत्त्वमसीत्याहश्रुतिर्ब्रह्मसदृक्षतां ॥ गुणैःकतिपयैर्वक्तुंलोकवेदानुसारिणी ॥ ९८७ ॥ अतिशू रंनरंप्राहुश्शार्दूलइतियज्जनाः ॥ अग्निर्माणवकश्चेतियस्माद्वाक्चास्तिवैदिकी ॥९८८॥ अथवा जीवपरयोर्भेदंवक्तुंसविस्तरं ॥ प्रावर्तत श्रुतिरियंनाभेदमितिमेमतिः ॥ ९८९ ॥ ॥

रिणीत्यनेन नेदंव्याख्यानमपूर्वमितिसूचयति ॥ ९८७ ॥ यद्यस्मात् । माणवकोब्रह्मचारी । तस्मिन्नग्निवत्तपसादाहकत्वशक्ति बोधनायेतिभावः । तस्माल्लोकवेदानुसारिणीतिपूर्वेणान्वयः ॥ ९८८ ॥ किंचश्रुतिस्सर्वत्रस्वार्थप्रच्यावनपरंपरंबहुधाधिकर्तुंनव भिर्दृष्टांतैर्भेदंप्रदर्श्यनवधाऽतत्त्वमसीतिजीवब्रह्मणोर्भेदंसतात्पर्यंसाधितवती । अतोपिनेयंश्रुतिस्तवानुकूला । तथाहि । सयथा



शकुनिः सूत्रेणेतिवाक्योक्तशकुनिसूत्रदृष्टांतेनसुषुप्तिदशायामपिसत्पदवाच्यपरमात्मनिथम्यमतएवभिन्नंजीवंअतत्त्वमसीतिप्राग्बो धितवती । पश्चात् यथासोम्यमधुमधुकृतोनिस्तिष्ठंतीतिवाक्योक्तमधुमधुकृन्निदर्शनेनतत्रतत्रपरमात्मनासृष्ट्वारक्षितंजीवंअतत्त्व मसीतिबोधितवती । पुनःइमास्सोम्यनद्यःपुरस्तात्प्राच्यस्स्यंदंतइतिवाक्येननदीसमुद्रदृष्टांतेनप्रलयेसर्वजीवानामाधारात्सृष्टौबहि र्निर्गमनेअवधिभूताच्चहरेर्भिन्नंजीवंअतत्त्वमसीतिबोधितवती । अनंतरंअस्यसोम्यमहतोवृक्षस्येतिवाक्येजीवनामकपरमात्माधीन शोषणभाजनशाखास्थानीयंजीवंदुःखितयापरमात्मनोत्यंतभिन्नंजीवमतत्त्वमसीतिबोधितवती । न्यग्रोधफलमतआहरेतिवाक्ये चधानाणिमदृष्टांतेनाणुतयाऽदृश्यात्परमात्मनोदृश्यंजीवंअतएवभिन्नंअतत्त्वमसीतिबोधितवती । सर्वथाऽदृश्यत्वेऽसत्त्वप्रसंगेन पुनर्लवणमेतदुक्तेवधायेतिवाक्येलवणोदकदृष्टांतेनदृश्यलवणरसोपेतादृश्यलवणद्रव्यवत्दृश्यस्वातंत्र्याख्यशक्तिमतोहरेः अस्व तंत्रं अतएवभिन्नंजीवंअतत्त्वमसीतिबोधितवती । पुनःयथासोम्यपुरुषंगंधारेभ्यइतिवाक्येगंधारपुरुषदृष्टांतेनगुरूपदिष्टज्ञानेनल भ्यात्परमात्मनःलब्धृजीवमतएवभिन्नंअतत्त्वमसीतिबोधितवती । पुनःपुरुषंसोमोपतापिनंज्ञातयःपर्युपासतइतिवाक्येज्ञात्युपता पिदृष्टांतेनअनुपतापिनःपरमात्मनः उपतापोपलक्षितमरणवंतंजीवंअतएवभिन्नमतत्त्वमसीतिबोधितवती । अंतेपुरुषंसोम्योतह स्तगृहीतमानयंतीतिवाक्येराजतस्करपुरुषदृष्टांतेन अभेदोक्त्यास्वगुणापहारकहीनजीवानांबंधनहननादिक्लेशरूपतमोदातु भेदो क्त्यास्वगुणान्स्वस्मिन्नेवस्तुवतश्चबंधनहननादिविदूरमुक्तिदात्परमात्मन स्सदसद्गतियोग्यंअतएवभिन्नजीवंअतत्त्वमसीतिबोधि तवती । ग्रंथकृच्चविस्तरभयात्परशंकापनोदायकानिचिन्निदर्शनानिविवृण्वन्तमेवार्थंवक्तुमुपक्रमते ॥ अथवेत्यादिना ॥ त्वं

अतत् तस्मादन्यद्वस्तु असीतिश्वेतकेत्वाख्यजीवस्यपरस्यचभेदंवक्तुमित्यर्थः । असमर्थत्वद्योतनेन गर्विणस्तस्यगर्वपरिहारायन पुंसकप्रयोगः । नवभिर्दृष्टांतैर्भेदकथनात्सविस्तरमित्युक्तं ॥ ९८९ ॥ शिष्यंश्वेतकेतुं । गुरुःउद्दालकः । पुरापूर्वं । अक्षिगतस्य जाग्रदवस्था । कंठगतस्यस्वप्नः । हृदिसुषुप्तिरितिक्रमात्स्वप्नावसानेविद्यमानासुप्तिरितिभावः ॥ ९९० ॥ यत्रयदा । संपन्नःसम्य



स्वप्नावसानकालीनसुप्त्यवस्थांप्रबोधयन् ॥ स्वप्नांतंसौम्यजानीहीत्याहशिष्यंगुरुःपुरा ॥ ९९० ॥ यत्र स्वपितिनामायंपुरुषोजीवचेतनः ॥ सताब्रह्मचितासाकंसंपन्नस्स्यात्तदाप्ययं ॥ नतुतद्भावमाप्नोतिसे यंसुप्तिदशाकिल ॥ ९९१ ॥ प्राज्ञेनसंपरिष्वक्तइतिशाखांतरेश्रुतिः ॥ प्राज्ञेनसंपरिष्वंगमेवसुप्ताव कीर्तयत् ॥ ९९२ ॥ सम्यगालिंगनंह्येवसंपरिष्वंगईर्यते ॥ सम्यक्प्राप्तिश्चसंपत्तिर्भिन्नयोरेवकिंनते ॥ यदेकस्यनतेदृष्टेदृष्टेसर्वत्रचद्वयोः ॥ ९९३ ॥ अंतर्हितस्ययाप्राप्तिःप्रविष्टस्योदरेहरेः ॥ सैवापीति शब्दशक्तिशोधनेनत्वभिन्नता ॥ ९९४ ॥ ॥ ॥ ॥

क्प्राप्तः । सेयं जीवस्यब्रह्मप्राप्तिदशा स्वप्नांतंमेसौम्यविजानीहि । यत्रायंपुरुषस्स्वपितिनामसतासोम्यतदासंपन्नोभवतीतिश्रुति व्याख्यानमिदं ॥ ९९१ ॥ शाखांतरे बृहदारण्यके । प्राज्ञेनसंपरिष्वक्तइत्यनेन प्राज्ञेनात्मनासंपरिष्वक्तोनबाह्यंकिंचनवेदेतिश्रु तिमुपादत्ते ॥ ९९२ ॥ ते प्राप्त्यालिंगने ॥ ९९३ ॥ स्वंह्यपीतोभवतीतिश्रुतेरर्थमाह ॥ अंतर्हितस्येति ॥ अदृश्यस्येत्यर्थः ।

सा अदृश्यतयाप्राप्तिः ॥ ९९४ ॥ शब्दशक्तिमेवदर्शयति ॥ तिन्नंतइति ॥ तिन्प्रत्ययांतः । अत्र अपीतिपदे । अपिः अपीत्यु पसर्गः । अपीतिपदं तूक्तप्रत्ययांतमितिद्रष्टव्यं । एवंशब्दशक्तिशोधनेसम्यक्प्राप्तिरेवापीतिशब्दार्थोनत्वभेदइतिभावः । स्वप दंच स्वस्मिन्स्वस्यैवगम्यगमकभावान्यथानुपपत्त्या स्वतंत्रत्वाद्वा स्वामित्वेनस्वीयत्वाद्वा प्राक्सत्पदोदितब्रह्मपरं ॥ ९९५ ॥

तिं(क्ति)न्नंतोत्रयदिण्धातुर्यत्पिधानार्थकोस्त्यपिः ॥ अतोत्रान्यार्थविन्यासचिंताहंताफलैवते ॥ ९९५ ॥ सुप्त्युत्क्रांत्योश्चभेदेनेत्याहनिर्णयसूत्रकृत् ॥ यतस्सुप्तौचमुक्तौचभिदाशास्त्रविदोदि ता ॥ अतोद्विर्बद्धभेदोयंसुबद्धोभ्रूक्षुतेर्गले ॥९९६॥ सुप्तिश्चावांतरामुक्तिर्देहादेरप्ययात्तव ॥ सुप्तौमुक्तौचयन्नास्तितदैक्यंस्यात्कदावद ॥ ९९७ ॥ सदृष्टांतमिमामेववेदःप्राबोधयद्दृशां ॥ यतश्शकुनिसूत्राख्यनिदर्शनमदर्शयत् ॥ ९९८ ॥ दार्ष्टांतिकेतत्रमनोमंतृत्वाज्जीवएवतत् ॥ नचेदुपक्रमोन्यस्यस्याच्चान्यस्योपसंहृतिः ॥ ९९९ ॥ ॥ ॥

सूत्रानुसारिचेदंव्याख्यानमितिभावेनाह ॥ सुप्तीति ॥ अनेनसुषुप्त्युत्क्रांत्योर्भेदेनेतिसूत्रंगृह्णाति । शास्त्रविदा वेदव्यासेन । द्विर्बद्धः सुप्तौमुक्तौचबद्धः । व्यासानुशासनशब्दानुशासनाभ्यांबद्धइतिवा ॥ ९९६ ॥ ९९७ ॥ सदृष्टांतं । सयथाशकुनिस्सूत्रे णप्रतिबद्धोदिशंदिशंपतित्वान्यत्रायतनमलब्ध्वाबंधनमेवोपाश्रयतइतिदृष्टांतपूर्वकं । इमांसुप्तिं ॥९९८॥ एवमेवखलुसोम्यैतन्मनो

दिशंदिशंपतित्वाअन्यत्रायतनमलब्ध्वाप्राणमेवोपाश्रयतइतिदार्ष्टांतिकवाक्ये । तत्तस्मात् । नचे न्मनश्शब्दोजीववाचकोनचेत् । उपक्रमः यत्रायंपुरुषस्स्वपितिनामेत्युपक्रमः । अन्यस्य पुरुषपदोदितजीवस्य ॥ ९९९ ॥ शकुना दृष्टांततयोक्त्याख्यशकुनात् । यथागंतुःपुरुषस्यसमीचीनपक्षिणश्शकुनेजातेसतिजीवभयंनास्ति तथात्रापिदृष्टांतेशकुनेःप्रस्तावात्दार्ष्टांतिकेपिजीवस्यनापगमइ तिभावः ॥ १००० ॥ तेमनः । तवमतेतवदुराग्रहात्त्वन्मनसएवनाशोस्तु नतुमन्मनसइतिभावेनोक्तंतेमनइति । किंचमनसो

शकुनेश्शकुनाचायंजीवस्तत्रापिजीवति ॥ यच्चेतनोपमाप्रायश्चेतनस्यैवशोभते॥१०००॥
किंचांतःकरणाख्यंतेमनोलीनंतदातव ॥ प्राणसंश्रयतातस्यकथंलीनस्यकथ्यते ॥१००१॥
यतश्चोपरितत्स्थानेप्रजाशब्दंहिजीवगं ॥ सन्मूलाएवसोम्येमाःप्रजाइतिवदिष्यति ॥
अतोमनःप्राणशब्दौजीवब्रह्मपराविमौ ॥ १००२ ॥ इतिभेदंसदृष्टांतंप्राक्प्रस्ताव्य
पुनर्गुरुः ॥ तत्त्वमस्यादिवाक्येनकथमैक्यंवदेद्बद ॥ १००३ ॥ यस्त्वारब्धार्थमुत्सृज्य
द्विरूपायागिरोभरात् ॥ मध्येन्यार्थमपिव्यर्थमाशास्तेमद्यपाय्यसौ ॥ १००४ ॥ ॥

जीवत्वाभावेजीवपरयोरैक्यस्यापिनप्रस्तावस्स्यात् । अतस्त्वयापिमनःपदेनजीवएववाच्यः ॥ १००१ ॥ तत्स्थानेमनस्स्थाने । एतत्समाख्ययाप्रागुक्तप्राणपदस्यब्रह्मपरता मनःपदस्यजीवपरताचेतिद्वयमपिसिद्धमितिभावः ॥ १००२ ॥ १००३ ॥ उपक्रम विरुद्धमप्यर्थंवदंतमपहसति ॥ यस्त्विति ॥ द्विरूपायाः तदिति अतदितिचद्वेरूपेयस्यास्सातस्याःगिरः सआत्मातत्त्वमसीतिगि



रः । क्वचित्पतिव्रतारूपं क्वचित्स्वैरिणीरूपंचयस्यानार्यास्तस्यागिरइतिध्वनिः । अन्यार्थं उपक्रमविरुद्धार्थं व्यर्थं प्रयोजनंविनापि प्राकृयज्ञादिपुण्यकर्मारभ्यमध्येस्वैरिणीवाक्यात्तामालिंगन्यथामद्यपायी तथासावकाशवाक्यस्यउपक्रमविरुद्धार्थंवदन्नपिमद्यपा य्येवनविवेकीतिभावः ॥ १००४ ॥ प्रबलंदूषणांतरंचाह ॥ सतीति ॥ शक्यैक्यं तत्त्वंपदमुख्यार्थयोरैक्यं । तेमते । श्लोक्यं चन विरुद्धत्वाच्छक्यमपिन । तेन तत्ववादिनोक्तमुख्यार्थेसतिलक्षणाऽयोगेन जहदजहल्लक्षणयाऐक्यंवदतस्तवमुख्यार्थासंभवेन

सत्यतत्त्वमसीत्यस्मदर्थेमुख्येनलक्षणा ॥ नतेश्लोक्यंनापिशक्यंशक्यैक्यंतेन
शोक्यसि ॥ १००५ ॥ तत्त्वज्ञानश्श्रुतौतस्मात्तत्त्वज्ञोमत्तएवसः ॥ १००६ ॥
यत्सत्प्रतिष्ठसन्मूलसदायतनतांश्रुतिः ॥ प्रजाशब्दोक्तजीवानांवक्तितत्रैवसा
दरं ॥ अतस्त्रिधाप्रजानांचसतश्चोक्तैवभिन्नता ॥ १००७ ॥ ॥

च शोकी दुःखवान् । मुख्यार्थस्तुमायिनैवनांगीक्रियते । मुख्येसंभवत्यमुख्यायोगादितिन्यायेनउपक्रमानुकूलमुख्यार्थेसतिल क्षणायाश्चनात्रावकाशः । अतःपरस्यमहासंकटमभूदितिभावः ॥ १००५ ॥ तत्त्वज्ञः तद्भावाख्यार्थज्ञः श्रुतौतत्त्वज्ञोन किंतुम त्तएवेतिसंबंधः । पूर्वश्लोकेऽनुप्रासोलंकारः । अस्मिन्श्लोकेतत्त्वज्ञोमत्तएव नतुतत्वज्ञः किंतुअतत्त्वज्ञएवतत्वज्ञइतिफलितार्थं चादायद्वेधाविरोधालंकारः ॥ १००६ ॥ परकीयार्थेउपक्रमदृष्टांतन्यायविरोधानुक्त्वास्ववाक्यविरोधंचाह ॥ यदिति ॥ यत्

यस्मात् । तत्रएवमेवसोम्येमास्सर्वाःप्रजास्सन्मूलास्सदायतनास्सत्प्रतिष्ठाइतिदार्ष्टांतिकवाक्येबहुशोभेदकथनात्सादरमित्युक्तं । त्रिधा सन्मूलंयासामिति सदायतनंयासामिति प्रकर्षेणतिष्ठत्यस्यामितिप्रतिष्ठा सदेवप्रतिष्ठायासामितिचसृष्टेःप्राक्सृष्टिमध्येसृष्टे रुपरितनमोक्षकालेचेत्यर्थः । एवंचएकस्मिन्नेववाक्येस्पष्टंभेदमुक्त्वापुनस्तत्त्वमसीत्यभेदंचकथंब्रूयादितिभावः । अथवाउक्तदा र्ष्टांतिकवाक्येस्पष्टंभेदकथनात्तद्दृष्टांतवाक्योक्तनदीसमुद्रादीनामपिभेदएवविवेकिनावक्तव्यइतिभावः ॥ १००७ ॥ लवणोद कदृष्टांतेभेदमनुभावयति ॥ यन्नैक्यमिति ॥ यत्यस्मात् । भिन्नरसयोः मधुरलवणाख्यरसयुक्तयोर्लवणोदकयोः । हेतुगर्भ

लवणोदकदृष्टांतेस्पष्टंभेदोनिदर्शितः ॥ यन्नैक्यंभिन्नसरयोर्योगेप्यालोडनंपरं
॥ १००८ ॥ यथातप्तोदकेरूपस्पर्शाभ्यामभिभूतयोः ॥ अबग्न्योरुभयोर्योगस्तथै
वलवणोदके ॥ रूपाभिभूतलवणेरसस्याभिभवोजले ॥ १००९ ॥ ॥

मिदंविशेषणं । भिन्नरसत्वेनविरुद्धधर्माक्रांतत्वादेवनैक्यमित्यर्थः । योगे लवणस्यजलसंबंधे । जलांतःप्रवेशनइत्यर्थः । परंकेव लं । मृत्तिकायाजलेनेवालोडनमेव नत्वैक्यमित्यर्थः ॥ १००८ ॥ तर्हिंजलमाधुर्यस्यकस्मादननुभवइत्याशंकांदृष्टांतमुखेनपरिह रति ॥ यथेति ॥ यद्यपितप्तोदकेजलस्यशीतस्पर्शाभिभवः । अग्नेश्चशुक्लभास्वररूपाभिभवः । तथापिउष्णस्पर्शशक्त्याजलाद्भि न्नोग्निरप्यस्त्येव । जलरूपमहिम्नाअग्नेर्भिन्नंजलमप्यस्ति । एवंलवणोदकेपिउदकस्यमाधुर्यरसाभिभवः । लवणस्यचरूपाभिभवः ।

तथापिरसशक्त्याजलाद्भिन्नंलवणमप्यस्ति । रूपशक्त्यासांसिद्धिकद्रवत्वशक्त्याचलवणाद्भिन्नंजलमप्यस्ति । स्वनिष्ठगुणयोरेवा भिभवः । स्वरूपैक्यंतुनोभयत्रापि । अन्यथाअभिभूतरूपस्यग्रहस्यग्रस्तपुरुषैक्यंचस्यादितिभावः ॥ १००९ ॥ दृष्टांतांतरेपिभेद मुपपादयति ॥ नदीसमुद्राविति ॥ एवंलवणोदकवत् । तत्रापिनदीजलस्यरसाभिभवमात्रंनत्वैक्यं । ईषत्समुद्रजलयोगेउभ यस्वभावस्याप्यनुभवेनऐक्यादर्शनात् । इयांस्तुविशेषः । समुद्रजलंसर्वदालवणेनाभिभूतरसं नदीजलंतुकदाचित्समुद्रलवणज

नदीसमुद्रावप्येवंगंगासागरसंगमः ॥ इतिशास्त्रप्रसिद्धेश्चवृद्धानांचप्रसिद्धितः ॥ नदीशु द्धोदसंयोगोवार्धेस्स्याल्लवणोदके ॥१०१०॥ शुद्धेशुद्धोदकंसिक्तंतादृगेवभवेत्परं॥ एकप्र कारोदकयोरप्यैक्यंनतयोःकिल ॥ १०११ ॥ स्वोक्ततादृक्चदार्ढ्यार्थमेवेत्यैक्यंव्यवच्छिन त् ॥ यतश्श्रुतिस्ततस्तत्रतयोरैक्यंनसर्वथा ॥ १०१२ ॥ एवंचेत्कथमैक्यंस्याच्छुद्धोदल वणोदयोः ॥ वृद्धेःप्रत्यक्षसिद्धत्वादप्यैक्यंनोभयत्रच ॥ १०१३ ॥ ॥

लेनैवाभिभूतरसमिति । युक्त्यंतरंचाह ॥ गंगेति ॥ नदीसमुद्रजलयोरैक्येशास्त्रेलोकेचप्रयुज्यमानसंबंधार्थकसंगमपदविरोधइ तिभावः । वार्धेर्लवणोदकइतिसंबंधः ॥ १०१० ॥ किंचश्रुतौशुद्धोदकयोरेवयोगैक्यस्यनिषेधात्शुद्धोदकलवणोदकयोगे नतरा मैक्यमित्याह ॥ शुद्धइति ॥१०११॥ श्रुतिः यथोदकंशुद्धेशुद्धमासिक्तंतादृगेवभवतीतिश्रुतिः ॥१०१२॥ युक्त्यंतरंचाह ॥ वृद्धे

रिति ॥ उभयत्र शुद्धोदकयोरेवसंगमे शुद्धोदकलवणोदकसंगमेच ॥ १०१३ ॥ प्राग्बहुतयादृष्टानामपिपुनस्सर्वथैक्ये वृद्ध्यभावंदृष्टांतमुखेनोपपादयति ॥ **नहीति** ॥ बहुमूर्तिभिरेकतामैक्यं । तस्मादेकोदकस्यउदकांतरेणसर्वथैक्येवृद्धिरयुक्तैवेति भावः ॥ १०१४ ॥ अस्तिचवार्धावपिवृद्धिरित्याह ॥ **नद्यंब्विति** ॥ १०१५ ॥ युक्त्यंतरंचाह ॥ **यतइति** ॥ यत्यस्मात् । फलैकता एकफलत्वं । उभयोरैक्येस्थलांतरेएकस्मादेकफलवत्संगमेपिएकमेवफलंस्यात् । फलद्वैगुण्येनाकिंचित्कारणमितिभावः

नहिरासोत्सवस्यांतेबहुमूर्त्यैकतांगते ॥ कृष्णेविशतिनंदस्यगृहद्वारमवर्धत ॥१०१४॥
नद्यंबुयोगेवर्षासुवार्धिरप्यभिवर्धते ॥ १०१५ ॥ यतश्चोक्तंपुराणेषुसंगमेद्विगुणंफलं ॥
अतश्चनतयोरैक्यमैक्येयत्स्यात्फलैकता ॥ १०१६ ॥ समुद्रोदेपिलवणद्रव्यस्यचजलस्य
च ॥ संयोगएवेशकृतःसरिदब्ध्योस्तुकिंपुनः ॥ १०१७ ॥ पत्न्यस्तुसरितस्सर्वाःपतिस्तु
सरितांपतिः ॥ तद्भेदोनेक्ष्यतेपुंभिर्गाढालिंगनतःपरं ॥ १०१८ ॥ ॥

॥ १०१६ ॥ नदीजलसमुद्रजलयोरैक्याभावेकैमुत्यमाह ॥ **समुद्रेति** ॥ एकदेवताकेसमुद्रजलेपिलवणजलयोस्संयोगएव नत्वैक्यं तदाकिंवक्तव्यःनदीशुद्धजलस्यसमुद्रलवणजलस्यचैक्याभावइतिभावः ॥ १०१७ ॥ तर्हिंजलद्वयविवेकःकुतोनदृश्यतइत्यतस्साहित्यमुद्रयातत्रहेतुंवदन्नभिमन्यमानयोरैक्येअभिमानिनोरप्यैक्यंस्यात् । तच्चयुक्तिविरुद्धमित्याह ॥ **पत्न्यस्त्विति** ॥



यथागाढालिंगनेदंपत्योर्देहयोर्विवेकोनदृश्यते । तथानदीजलस्यापिसमानाभिघाताख्यदोषात्क्षीरस्थनीरस्येवविवेकोनदृश्यतइत्यर्थः ॥ १०१८ ॥ मुनीनांपिता तारापतेस्सखेतिचएकाकित्वाभावेहेतुगर्भविशेषणद्वयं ॥ १०१९ ॥ विपक्षेबाधकयुक्तिंचाह ॥ **नचेदिति** ॥ ऐक्याभावोनचेदित्यर्थः ॥ १०२० ॥ समुद्रमध्यस्थनदीजलानामपिपरस्परमैक्याभावेयुक्तिमाह ॥ **श्वेतइति** ॥

नहिप्रधानदिक्पालोवरुणोसौनिजालये ॥ पितामुनीनामेकाकीशेतेतारापतेस्सखा ॥१०१९॥
नचेद्वर्षासुवार्ध्यंबुमध्यान्नद्यंबुवार्धराः ॥ आनयंतिकथंशुद्धंवर्षंतिचततस्ततः ॥ १०२० ॥
श्वेतंगंगोदकंस्वादुतुंगांबुयमुनाजलं ॥ नीलमित्यादिभेदोस्तिप्रत्यब्दमपितज्जले ॥ १०२१ ॥
सोऽब्धौचभिन्नभिन्नांबुसद्भावेनविनाकथं ॥ नह्यपूर्वंसवार्वाहःकुर्वीतांबुस्थलेस्थले ॥ १०२२ ॥
सर्वेचसंगमंब्रूयुस्त्वंब्रूषेकथमेकतां ॥ हंताज्ञाश्चहसेयुस्त्वांपूर्णप्रज्ञभटास्तुकिं ॥१०२३॥ सिता
सितेचनद्यौद्वेप्रयागेसंगतेकिल ॥ मिश्रतीर्थेकिलैकत्रचित्रतीर्थोदसंग्रहः ॥ १०२४ ॥ ॥

तज्जले तासांगंगादीनांजले ॥ १०२१ ॥ सःभेदः । वार्वाहइतिहेतुगर्भविशेषणं । प्राग्विद्यमानोदकस्यप्रापकएव नतुकर्ता । तस्मादुदकवैचित्र्यंनतन्निमित्तकमितिभावः ॥ १०२२ ॥ किंचश्रौतस्मार्तलौकिकप्रवादबलात्शुद्धजलानामपिमेलनेसतिसंगमएव नत्वैक्यं । किंपुनर्लवणोदकशुद्धोदकयोरितिभावेनाह ॥ **सर्वेचेति** ॥ १०२३ ॥ सितासितेइत्यनेन सितासितेसरितौयत्रसंगते

तत्राप्लुतासोदिवमुत्पतंतीतिश्रुतिंसूचयति । एकत्र सरोवरे । चित्रतीर्थोदसंग्रहः नानातीर्थजलमेलनं मिश्रतीर्थनामकतीर्थंकिल । अस्थिप्रदानात्पूर्वंसर्वतीर्थेषुस्नानंकर्तव्यमितिदधीचिप्रार्थितेनेंद्रेणब्रह्मांडोदरगततीर्थेभ्यः किंचित्किंचित्तीर्थजलमानीयनैमिषारण्य प्रांतस्थिततदाश्रमस्थसरोवरेमेलनंकृतं । तत्रस्नात्वातेनमुनिनास्वदेहास्थि शक्रायदत्तं । यस्यतीर्थस्यअद्यापिलोकेवेदेचमिश्रतीर्थ मित्येवनाम । इमांपौराणिकप्रसिद्धिंकिलेत्यनेनसूचयति । तस्माद्बहुजलसमागमेपिमिश्रणमेव नत्वैक्यमितिभावः ॥ १०२४ ॥ सप्तनदीनां कृष्णावेणीतुंगाभद्राभीमरथीमलापहारिणीभवनाशिनीतिसप्तनदीनांसंगमः निवृत्तिसंगमःकिल । जनाःकाडलूरसंग

निवृत्तिसंगमस्ससप्तनदीनांसंगमःकिल ॥ कृष्णाभीमरथीसंगंप्राहुरद्यापिसंगमं ॥ १०२५ ॥
नानारससमाहारोमधुन्यप्येकताकिल ॥ वृद्धिश्चरसवैचित्र्यंनोचेत्तत्रकुतोवद ॥१०२६॥ सति
संपद्यनविदुरितिसर्वत्रयच्छ्रुतिः ॥ दार्ष्टांतिकोपसंहारंकुरुतेतोनतत्कथा ॥ १०२७ ॥ ॥

मइतिप्राहुः ॥ १०२५ ॥ यथासोम्यमधुमधुकृतोनिस्तिष्ठंतीतिदृष्टांतेपिनानात्ययानांवृक्षाणांसमवहारमेकतांगमयंतीतिश्रुतौस्प ष्टंरसानांनानारससमाहारस्यैवैकत्वेनव्यवहारात्त्वदभिलषितस्वरूपैक्यस्यनावकाशइत्याह ॥ नानेति ॥ मधुनि यो नानारसा नांसमाहारोमेलनं सएवैकताकिलेतिसंबंधः । युक्तिंचाह ॥ वृद्धिरिति ॥ वृद्धिः दिनेदिनेक्रमेणाभिवृद्धिः । रसवैचित्र्यं मधु राम्लादिरसवैचित्र्यं । नोचेत् समाहारैक्यंनोचेत् । स्वरूपैक्यमेवभवतिचेदित्यर्थः । तत्रमधुनि ॥१०२६॥ सतिसंपद्यनविदुरित्य

नेनप्रकारेण । इतिशब्दः प्रकारवचनः । सतिसंपद्यनविदुः सतआगम्यनविदुः सन्मूलास्सोम्येमास्सर्वाःप्रजा स्सतासोम्यत दासंपन्नोभवतीतिवाक्येष्वित्यर्थः । सर्वत्र बहुषुदृष्टांतेषु । यद्यस्मात् । अतः दार्ष्टांतिकविरोधात् । एकस्मिन्नपिदृष्टांतेऐक्यकथा न ॥ १०२७ ॥ युक्त्यंतरंसूचयन्नेतदेवविशदयति ॥ यस्मादित्यादिना ॥ १०२८ ॥ सा उपनिषत् । ततः सन्नामकपरमात्मनः

यस्मात्प्राग्भिन्नयोरैक्यंनस्याद्यत्नशतैरपि ॥ तस्मात्सर्वेपिदृष्टांताभेदस्यैवप्रसाधकाः ॥ १०२८ ॥ सतआगम्यनविदुःसतिसंपद्यचेतिसा ॥ मुक्तौसंपत्तिमेवाहसृष्टौचागमनंततः ॥ १०२९ ॥ गम कस्यचगम्यार्थादागंतुश्चागमावधेः ॥ अवश्यंभिन्नतावाच्यामध्येवाच्याकथंनसा ॥ १०३० ॥ अनाद्यनंतकालीनामेवंजीवेशयोर्भिदां ॥ नविदुर्येतेभवंतिसिंहव्याघ्रादयःकिल ॥ १०३१ ॥ इतिभेदाज्ञानिनिंदांभूयोभूयःकरोतिया ॥ अभ्यासादर्थवादाचसासम्यग्भेदतत्परा ॥ अतादि त्येवगदितुंयतते नततोन्यथा ॥ १०३२ ॥ सदायतनसन्मूलसत्प्रतिष्ठत्वकीर्तनात् ॥ स्थितौ सृष्टौचमुक्तौचभेदस्स्पष्टंनिगद्यते ॥ १०३३ ॥ ॥ ॥ ॥

॥ १०२९ ॥ साभिन्नता ॥ १०३० ॥ भूयोभूयः बहुवारं । या तइहव्याघ्रावेत्यादिका । अर्थवादात् निंदारूपार्थवादात् । सा उपनिषत् । मुक्तावपिभेदप्रतिपादनात्सतिसंपद्य सतआगम्येतिभेदाभ्यासात् अर्थवादाच्चसम्यगित्युक्तं । ततोन्यथा तत्त्वमि

ति ॥ १०३१ ॥ १०३२ ॥ १०३३ ॥ इयमुपनिषत् ॥ १०३४ ॥ तस्यतावदेवचिरंयावन्नविमोक्ष्येथसंपत्स्यतइतिश्रुतेरभिप्राय माह ॥ तावदेवेति ॥ तस्यज्ञानिनः । प्रारब्धैःकर्मभिरितिसंबंधः । विमोक्ष्येइत्यस्यपुरुषव्यत्यासात्विमोक्ष्येतेत्यर्थकथनं । अथवा विमोक्ष्ये विमोक्ष्यइत्याशांकुर्वन् यावन्नविमोक्ष्येतेतियोग्यपदाध्याहारेणान्वयः । अथेत्यस्यार्थकथनंपश्चादिति । भोगेन प्रारब्धकर्मविमोचनानंतरमित्यर्थः । प्रारब्धकर्मनाशानंतरकालीनब्रह्मसंपत्तेर्मायिमतेपिपरममोक्षत्वात्तेपरममोक्षइत्युक्तं । सा

दार्ष्टांतिकप्रकरणमेवंसर्वहिशोधने ॥ अभून्द्भेदप्रकरणंतदैक्यस्यनभूरियं ॥ १०३४ ॥
तावदेवचिरंतस्ययावन्मोक्ष्येतकर्मभिः ॥ प्रारब्धैरखिलैःपश्चात्सतिसंपद्यतेकिल
॥१०३५॥ इतिप्रारब्धनाशाचपश्चाद्भाविनियाश्रुता ॥ भिदापरममोक्षेतेकदावानास्ति
सावद ॥१०३६॥ गम्यगंतृतयान्योन्यंकिंनतत्रापिभिन्नता ॥ तन्नतामुन्नतावाक्येनिन्हु
वीतसतांमतां ॥१०३७॥ अतत्त्ववादिनामेवतच्चित्रंतत्ववादिता ॥१०३८॥ ततोवर्णा
दिनाछिन्नंपदंसंधायसाश्रुतिः ॥ चरेद्भेदार्थलाभाययाब्राह्मणजनप्रिया ॥ १०३९ ॥

जीवेश्वरभिदा ॥ १०३५ ॥१०३६॥ तत्रापि मुक्तावपि । तत्तस्मात् । तां भिन्नतां । ननिन्हुवीत नदूषयेत् । उच्चैस्स्वरकरणेपि भेददूषणंतवासाध्यमितिभावः ॥ १०३७ ॥ नतत् अतत् तस्यभावःअतत्त्वं तद्वादिनां जीवब्रह्मभिन्नत्ववादिनामित्यर्थः । तत्त स्मात् शब्दतोविरोधप्रतिभानात्चित्रमित्युक्तं ॥ १०३८ ॥ ततः युक्तियुक्तत्वात् । वर्णादिना अक्षराणामादिना अकारेण क्षत्रि



यादिवर्णानामादिनाब्राह्मणेनेतिध्वनिः । छिन्नपदं अकारच्छेदंकृत्वापरेणप्रदर्शितंतदितिपदं । संधाय वर्णादिनासंधायेतिसंबंधः । चरेत् विदुषांसंसदिसंचरेत् । अकारसंधानेसतिविद्वत्सभायोग्या तदभावेछिन्नपदवत् युक्तिबाधितायास्तस्याःविदुषांसंसदिसंचर णमेवनभवेदितिभावः । अकारेणैवस्वपदसंधानेकिंकारणमित्यतआह ॥ याब्राह्मणजनप्रियेति ॥ ब्राह्मणवद्वर्णादित्वात्अका रएवप्रीतिरितिभावः ॥ १०३९ ॥ लौकिकदृष्टांतेनाप्यतदित्येवपदच्छेदमुपपादयति ॥ किंचेति ॥ १०४०॥१०४१॥१०४२॥

किंचशब्दोनित्यइतिवाक्येघटनिदर्शने ॥ अनित्यइत्येवयथापदच्छेदंविदोविदुः
॥ १०४० ॥ एवंशकुनिसूत्राख्यस्पष्टदृष्टांतशक्तितः ॥ आत्मातत्त्वमसीत्यत्राप्य
तद्ब्रह्मेतिगम्यते ॥ १०४१ ॥ तस्माज्जीवेशभेदस्यसाधिकाभेदवागियं ॥ नह्यति
स्तब्धबुद्धेस्सगुरुर्ब्रह्मैक्यमादिशेत् ॥ १०४२ ॥ अतश्श्रुतिःकेरलानांकरवालमभू
दियं ॥ धारात्वत्पार्श्वगैवातिक्रूराकिंस्यात्तवानया ॥ १०४३ ॥

अतः उभयथापिपदच्छेदसंभवात् । इयंश्रुतिःकेरलानांकरवालमभूत् । यथाकेरलशस्त्रस्यशत्रोराभिमुख्येनधारा स्वस्याभिमुख्ये नापिधारा । अतःतमपिहन्यात् । कदाचित्स्वात्मानमपिहन्यात् । तथाइयंश्रुतिरपिपरहननायत्वयाप्रयुक्तात्वामेवहंतीतिभावः । तत्रहेतुमाह ॥ धारेति ॥ त्वत्पार्श्वगाधारैवातिक्रूरा । परोक्तयुक्तिशिलाताडनेनतत्पार्श्वेमंदीभूता । त्वत्पार्श्वेतुयुक्त्यभावादति

क्रूरा । तस्मादतदितिपदच्छेदंकृत्वात्वामेवहंतीतिभावः ॥ १०४३ ॥ अपिच बंधस्याज्ञानोपादानकत्वरूपमिथ्यात्वलाभायज्ञा नमज्ञानस्यैवनिवर्तकमित्यसंभावितांकांचिद्व्याप्तिंपरिकल्प्य तद्विरोधेन दृष्ट्वैवतंमुच्यतेनापरेणेत्यादिसावधारणतयानिरवकाशानां श्रुतीनांज्ञानाद्बंधनिवृत्तिर्भवतीतिश्रौतार्थंपरित्यज्य ज्ञानादज्ञाननिवृत्तिरेवभवति । अज्ञाननिवृत्तौचउपादानाभावाद्बंधनिवृत्ति र्भवतीतिश्रौतार्थस्यातिविरुद्धमश्रौतमेवार्थमंगीकुर्वतापरेणतत्त्वमस्यादिवाक्ये प्रत्यक्षेण द्वासुपर्णेतिश्रुत्या विरुद्धधर्माक्रांतत्वयु

किंचदृष्ट्वैवतंमुच्येतेत्याद्यागमराशिषु ॥ ज्ञानमज्ञानमात्रस्यविरोधीतिस्वकल्पितात् ॥
युक्तिमात्राचभीतेनश्रौतोर्थोयेनधिकृतः ॥ १०४४ ॥ तस्यप्रत्यक्षसहितविरुद्धगुणवत्त्व
तः ॥ महायुक्तेर्विरोधेपिमुख्येऽर्थेप्यकुतोभरः ॥ १०४५ ॥ अक्षस्ययुक्तिश्रुत्यादेरमानत्वं
यदीष्यते ॥ युक्तिमात्रामानतायांहीनताकातवोच्यतां ॥ १०४६ ॥ ॥

क्त्या उक्तविधयानवविधदृष्टांतैश्च विरुद्धे आपाततश्श्रौतार्थेमहान्भरःक्रियते । अतस्स्वप्रक्रियथैवविरुद्धःपरकीयराद्धांतइत्याह ॥ किंचेति ॥ बद्धोमुच्येतबंधनादित्यादिफलविधायकप्रबलवाक्यान्यपिस्मारयितुंलिङंतपदप्रयोगः । श्रौतार्थः ज्ञानस्यबंधवि नाशकत्वरूपः । येनमायावादिना । प्रत्यक्षसहितात् विरुद्धगुणवत्त्वात् । अतएवमहायुक्तेरित्युक्तं ॥ १०४४ ॥ १०४५ ॥ युक्ति मात्रामानतायां ज्ञानमज्ञानस्यैवनिवर्तकमितिस्वकपोलकल्पितयुक्तेरमानतायामित्यर्थः ॥ १०४६ ॥ किंचविरुद्धगुणवत्त्वरूपयु

क्तिरप्रमाणंचेत् तद्वयाभावात् । (बाष्पारोपितधूमत्वभ्रमकालएवबाष्पबाष्पैक्यसद्भावेन) । विरुद्धगुणवतोरेवैक्यमंगीक्रियतां । प्रमाणंचेत्तद्विषयभूतविरुद्धगुणयोरपिप्रामाणिकत्वावश्यंभावात्प्राणत्यागेपिब्रह्मवन्नतत्त्यागइत्युभयतःपाशारज्जुरित्याह ॥ यदीति ॥ १०४७ ॥ प्रकारांतरेणापिप्रत्यक्षप्रामाण्यस्यावश्यकत्वंप्रसाध्यतद्विरुद्धैक्यस्यैवहेयत्वमुपपादयति ॥ विरुद्धैक्यस्येति ॥ अयुक्तिःअयुक्तता । तर्हिअदृष्टमयुक्तंचेत् अर्थादृष्टमेवयुक्तमित्यस्यापिलाभात्अवश्यंअमानतावाच्या । नचेत् अक्षप्रामाण्यंनचे

यद्यक्षादेरमानत्वंविरुद्धैक्यमपीष्यतां ॥ मानत्वेतुगुणत्यागःप्राणत्यागोभवेत्तव ॥ १०४७ ॥ विरुद्धैक्यस्यचायुक्तिर्वाच्याकुत्राप्यदर्शनात् ॥ तर्ह्यक्षमानतावश्यं नचेदैक्यंविरुद्धयोः ॥ १०४८ ॥ आदित्येपुरुषोयोसौसोहमस्मीतिचश्रुतिः ॥ सयश्चायंपुरुषेस्तियश्चादित्येस्तिसर्वदा ॥ १०४९ ॥ सएकइतिविस्पष्टसमाख्याश्रुतिसख्यतः ॥ अर्थंलक्षणयाब्रूतेसुस्थंसूत्रोक्तवर्त्मना ॥ १०५० ॥ ॥

त् । अदृष्टस्याप्यंगीकर्तुंशक्यत्वाद्विरुद्धैक्यमेवस्यादित्यर्थः ॥ १०४८ ॥ योसावादित्येपुरुषस्सोहमस्मीतिवाक्यस्यार्थमाह ॥ आदित्यइति ॥ सयश्चायमित्यनेन सयश्चायंपुरुषेयश्चासावादित्येसएकइतिवाक्यंगृह्णाति । अत्रहिउभयत्राप्याधारसप्तम्याआदित्यांतर्यामिणःपुरुषांतर्यामिणश्चैक्यकथनात्विस्पष्टेत्युक्तं । अतएवास्याश्श्रुतेर्निरवकाशत्वंचेत्यपिद्रष्टव्यं । लक्षणया अहंपदस्यांतर्यामिपरतयेत्यर्थः । सूत्रोक्तवर्त्मना नवक्तुरात्मोपदेशादितिचेदध्यात्मसंबंधभूमाह्यस्मिन्निति सूत्रोक्तमार्गेण ॥ १०४९ ॥

॥ १०५० ॥ एकवाक्ये अस्मिन्नेववाक्यइत्यर्थः ॥ आदित्यइति ॥ योसावादित्यइतिसप्तम्याआदित्याश्रितपुरुषस्यैवग्रहणादि त्यर्थः । स्वस्यापि सोहमस्मीतिप्रोक्तस्यस्वस्यापि । आधारता । लक्षणयास्वांतर्यामिपुरुषंप्रत्याधारतेत्यर्थः । विपक्षेबाधकमाह ॥ किमिति ॥ अर्कपूजकः संध्यावंदनादिनाअर्कपूजकःऋषिमनुष्यादिजीवः । अर्केशः योसावादित्येपुरुषइत्युक्तार्कस्वामीकिं नैवे त्यर्थः । आदित्येपुरुषइत्युक्तादित्यांतर्यामिपुरुषस्यसोहमित्युक्तमनुष्यादिजीवस्वरूपत्वेऽर्कपूजकस्यैवार्कस्वामित्वंस्यादितिभावः

एकवाक्येपिचादित्यइत्याधारत्वकीर्तनात् ॥ स्वस्याप्याधारतैवोक्ताकिमर्केशोर्कपूजकः ॥१०५१॥ तत्स्पष्टभेदश्रुत्यक्षबाधेसातिसतांमते ॥ वृत्तित्रयेचसत्यैक्यवाक्यंस्यात्कविरुद्ध योः ॥ १०५२ ॥ किंचैकजीवब्रह्मैक्यंवाक्येनानेनसेत्स्यति ॥ सर्वैक्येकिंप्रमाणंतेश्रुत्य र्थोनकिलार्थिकः ॥ १०५३ ॥ तत्तत्पदोक्तयोरैक्येसुप्रसिद्धाविरुद्धता ॥ पदद्वयस्यलक्ष्य त्वाल्लघ्व्येकपदलक्षणा ॥ तत्संबंधात्तत्पदेनजीवोक्तौकिंगतंतव ॥ १०५४ ॥ ॥

॥ १०५१ ॥ किंचैक्याख्यमुख्यार्थस्यप्रत्यक्षादिबाधितत्वस्यावर्जनीयत्वात्मुख्यार्थबाधेचवृत्त्यंतरस्यसर्वसंमतत्वात्नक्काप्यैक्य स्यावकाशइत्याह ॥ तदिति ॥ तत्तस्मात्कारणात् ॥ १०५२ ॥ युक्त्यंतरंचाह ॥ किंचेति ॥ एकजीवः श्वेतकेतुः । अनेन तत्त्व मसीत्यनेन । सर्वैक्ये सकलजीवैक्ये । एकस्यैक्येअर्थात्सर्वस्याप्यैक्यसिद्धिरित्यतआह ॥ श्रुत्यर्थइति ॥ आर्थिकः अर्थात्सि द्धोर्थः । यश्चार्थादर्थोनसचोदनार्थइतिपूर्वाचार्यवचनादितिभावः ॥१०५३॥ किंचपररीत्यैवपरार्थेगौरवंस्वार्थेलाघवंचाह ॥ तत्त



दिति ॥ एकपदलक्षणा त्वं तत् तदधीनोसीतितत्पदमात्रलक्षणा । मायावादिनाहितत्त्वंपदयोरुभयोरपिलक्षणयाचिन्मा त्रपरतावक्तव्या । अस्माकंतुतदितिपदच्छेदेपिएकपदमात्रलक्षणांगीकारादस्मदर्थएवलाघवाद्वक्तुमुचितः परकीयार्थस्तुगौरवान्नां गीकारार्हइत्याह ॥ तत्संबंधादिति ॥ तत्पदेन तदितिपदेन ॥ १०५४ ॥ अर्थांतरंचाह ॥ पंचम्यर्थइति ॥ १०५५ ॥ त्रिदेव तैक्यप्रतिपादकतयाहरिहराद्यैक्यप्रतिपादकतयाचप्रतीतवाक्यानांअनयैवदिशाअर्थोवाच्यइत्याह ॥ किंचेति ॥ तवमते । तत्त

पंचम्यर्थेयत्तदितिपदंप्राहुर्यतोव्ययं ॥ तदित्यस्यैवतस्मादित्यर्थोवातेनकथ्यतां ॥ ऋजुष्वनेक मार्गेषुसत्सुकिंकुटिलाध्वना ॥ १०५५ ॥ किंचब्रह्मेंद्ररुद्रादिशब्दास्सर्वेपिसर्वदा ॥ तत्तद्विशि ष्टार्थपराविशिष्टैक्यंचतेमते ॥ नविद्यतेचितोरैक्यंयतोलक्षणयातव ॥ १०५६ ॥ तद्देववासु देवैक्यंवाक्यंनाख्यातितेक्वचित् ॥ अत्राप्यत्रापियत्तेनद्विदेवपदनाशनात् ॥ १०५७ ॥ ॥

स्मात् विशिष्टैक्यस्यत्वयानंगीकारात्चिन्मात्रैक्यप्रतिपादकपदाभावात् । देववासुदेवैक्यं ब्रह्मादिदेवानांवासुदेवेनैक्यं । अत्रापि लज्जाअकारि । त्रपुलज्जायामितिधातोःकर्मणिलुङ् । यद्यस्मात् । तेन देवैक्यपरतयाप्रतीयमानवाक्येन । द्विदेवपदनाशनात् द्वयो र्देवयोर्वाचकपदयोर्मुख्यार्थत्यागाख्यनाशात् । अत्रापि देवतैक्येपि । अत्रापीतिसंबंधः । देवतैक्येमयाकथितेपदद्वयमुख्यार्थत्या गःकर्तव्यइतिवाक्यस्यलज्जाभवति । तस्मादेकपदमात्रलक्षणयादेवांतर्यामिणोहरेश्चैक्यंवक्तीतिभावः । देवस्थानद्वयनाशादिति

युक्ति-
॥१५७॥

ध्वनिनाबहुजुगुप्सासूचयति ॥ १०५६ ॥ १०५७ ॥ अपिचनिष्प्रकारकचरमापरोक्षप्रतीतिजनकतयांगीकृतमहावाक्यानांब्रह्म स्वरूपमात्रपरत्वरूपाखंडार्थनिष्ठत्वंमायावादिनांसिद्धांतरहस्यं । एवंचतत्त्वमस्यादिवाक्यानामैक्यादिपरत्वांगीकारेअपसिद्धांत श्चस्यादित्याह ॥ किंचेति ॥ अवांतरवाक्यं तत्पदार्थभूतब्रह्मप्रतिपादकसत्यादिवाक्यं । त्वंपदार्थरूपजीवप्रतिपादकंचवाक्यं । महावाक्यं तत्त्वंपदार्थयोर्जीवब्रह्मणोरद्वैतप्रतिपादकतयोभयपरंवाक्यं । ते अखंडार्थवादिनस्तव । ब्रह्मरूपमात्रपरं ब्रह्मस्वरूप

किंचावांतरवाक्यंचमहावाक्यंचतेमते ॥ सर्वेलक्षणयाब्रह्मरूपमात्रपरंकिल ॥
अतस्तवप्रक्रिययाप्यैक्येमानंनकिंचन ॥ १०५८ ॥ अखंडार्थत्वसंत्यागेनाभूदैक्यंभ
वन्मते ॥ अखंडार्थपरत्वेपिनाभूदैक्यंभवन्मते ॥ १०५९ ॥ विशिष्टार्थपरत्वेपिविशे
षणबलान्नतत् ॥ अविशिष्टार्थनिष्ठत्वेसाधकाभावतोनतत् ॥ १०६० ॥ ॥

मात्रपरं । अत स्सकलमहावाक्यानांब्रह्मस्वरूपमात्रपरत्वांगीकारात् ॥ १०५८ ॥ एवंचपरस्योभयतःपाशारज्जुरित्याह ॥ अखं डार्थत्वेति ॥ अखंडार्थत्वसंत्यागे सखंडार्थत्वे । विशिष्टार्थपरत्वइतियावत् ॥ १०५९ ॥ तदेवोपपादयति ॥ विशिष्टेति ॥ अखंडार्थत्वसंत्यागेहि तत्त्वंपदयोर्विशिष्टार्थपरत्वमेवस्यात् । तस्मिंश्चविशेषणबलात्विरुद्धसर्वज्ञाल्पज्ञत्वरूपविशेषणबलात् । ॥ २७६ ॥ तदैक्यंन । अविशिष्टार्थनिष्ठत्वे ब्रह्मस्वरूपमात्रपरत्वइत्यर्थः । साधकाभावतः ऐक्यप्रतिपादकप्रमाणाभावतः ॥ १०६० ॥ तर्ह्य

मल्लिका
भेदसौ०

खंडार्थवादस्त्यज्यतइतिपक्षंप्राग्दूषितमपिदूषणांतरेणदूषयति ॥ ऐक्यस्येति ॥ तस्मा दखंडार्थवादत्यागायोगात् ॥ १०६१ ॥
अधुनाजीवेश्वरभेदेप्रमाणंदर्शयति ॥ येस्मरंतीति ॥ अनेन तर्हिनसन्नचासदुभयंनचकालजवःकिमपिनतत्रशास्त्रमपकृष्यशयी
तयदा । जनिमसतस्सतोमृतिमजात्मनियेचभिदांविपणमृतेस्मरंत्युपविशध्वनिमारुवतइतिश्रुतिगीतिकावचनंसंगृह्णाति । तत्रविप
णमृतेआत्मनिभिदांयेस्मरंतीत्यस्यार्थकथनं निरुपाधिकयोगिनइति ॥ त्वंतानुपविशेति उपविशध्वनिमारुवतइत्यस्यतात्पर्यकथनं।

ऐक्यस्यान्यस्यवावाक्याद्वैशिष्ट्यंभासतेयदि ॥ निष्प्रकारकधीरंतेशब्दादिति
गतंमतं ॥ तस्मादैक्यंनवैशक्यंवाक्यैःसाधयितुंत्वया ॥ १०६१ ॥ येस्मरंत्यात्मनि
भिदांनिरुपाधिकयोगिनः ॥ त्वंतानुपविशेत्याहविस्पष्टंश्रुतिगीतिका ॥ स्फुटत्वा
च्छ्रुतिमूलत्वात्फलवत्त्वाद्बलीयसी ॥ १०६२ ॥ उपस्थितात्स्मर्तृतयाजीवाख्यात्प्र
तियोगिनः ॥ परमात्मनिभेदोत्रप्रलयेप्रतिपाद्यते ॥ १०६३ ॥ ॥

तेषांध्वनिंवेदव्याख्यानादिध्वनिंउपविश ध्वनिंकुर्वतांतेषांहृदिसदातिष्ठेत्यर्थः । आसमंतात्रुवन्प्राणघोषंकुर्वन्मुख्यप्राणः आरु
वन् । तस्मात् तस्यप्रसादात् उपविशेतिसंबंधः । स्फुटत्वात् आत्मनिपरमात्मनिभिदामितिस्पष्टार्थत्वादित्यर्थः । फलवत्त्वात्
उपविशेतिफलश्रवणादित्यर्थः ॥ १०६२ ॥ आत्मनिभिदामितिपरमात्मनिष्ठतयाप्रतीयमानभेदस्यप्रतियोगीकइत्यतआह ॥ उप

स्थितादिति ॥ स्मरंतीत्यत्रस्मर्तृतयोपस्थितात्जीवाख्यात् जीवसमुदायाख्यात् प्रतियोगिनइतिसंबंधः । अत्रवाक्ये उपस्थित परित्यागेकारणाभावात्जीवप्रतियोगिकःपरमात्मधर्मिकएवभेदःप्रतिपाद्यतइतिभावः । अजेतिपरमात्मनस्संबुद्धिः । उपलक्षणंचै तत् । जगज्जन्ममरणहेतुतयाउपस्थितात्परमात्मनः आत्मनि स्वेषु भिदामितियोजनयाजीवधर्मिकोपिभेदोग्राह्यः । अतएवआ त्मनीतिसामान्यपदं ॥ १०६३ ॥ प्रलयत्वज्ञापकमाह ॥ अपकृष्येति ॥ अनेन तर्हिनसन्नित्यादिश्लोकार्धंगृह्णाति । शास्त्रंवे दं । पूर्वार्धपर्यालोचनयामहाप्रलयकालोयमितिज्ञायतइतिभावः । यःजीवेश्वरभेदः । अनेन जीवेश्वरभेदः पारमार्थिकसन् महा

अपकृष्यशयीतेतिप्रस्तावःप्रलयस्यहि ॥ यस्सर्वस्यलयेचास्तिसोस्त्येवपरमात्मवत्
॥ १०६४ ॥ फलंचस्मर्तृजीवेषुप्रवेशःकिलनैकता ॥ १०६५ ॥ तत्तेब्रह्मैकतानाभूद्विरुद्धे
दृग्गिरःपरं ॥ सभायामसहायस्यस्यादेकाकितयैकता ॥ १०६६ ॥ क्वशोकमोहौस्नेहोवा
भयंवायेऽज्ञसंभवाः ॥ क्वंचाखंडितविज्ञानज्ञानैश्वर्येश्वरोहरिः ॥ १०६७ ॥ ॥

प्रलयेप्युर्वरितत्वात् । ब्रह्मवदितियुक्तिमूलतयाप्यस्यवाक्यस्यबलीयस्त्वमितिज्ञापयति ॥ १०६४ ॥ तत्तस्मात् महाप्रलयकाली नस्मरणफलतयापिभगवतःजीवेषुप्रवेशस्यैवश्रवणात् ॥ १०६५ ॥ तर्ह्यैक्याशायाःकागतिरित्यतआह ॥ विरुद्धेति ॥ सर्वानुभ वविरुद्धवादिनस्तवकोपिसहायोनभविष्यतीतिएकाकित्वरूपैक्येनैवत्वदाशापूरणंकुर्वितिभावः ॥ १०६६ ॥ युक्तिगर्भभागवतवा क्यांतरेणापिजीवेश्वरभेदंसाधयन्तन्मूलयुक्तीश्चदर्शयति ॥ क्वेति ॥ अज्ञसंभवाः अज्ञेषुसंभवंतीत्यज्ञसंभवाः । अज्ञानिष्वेवशो



कमोहादीनांसंभवः । नत्वज्ञानातिदूरेनिरवधिकज्ञानैश्वर्यसंपन्नेब्रह्मचैतन्यइतिभावः । इतिहेतोः तत् जीवचैतन्यब्रह्मचैतन्या ख्यंचैतन्यद्वयं मिथोविरुद्धमेवेतिसंबंधः । एवंचनीचोच्चचितोरनयोरैक्यंकथं नकथंचित् । अज्ञानमूलंहिशोकादिकं अज्ञानंच चिन्मात्राश्रितमितितवापिमतं । एवंचानर्थहेतोरज्ञानस्यावकाशंददत्जीवचैतन्यमसमर्थत्वान्नीचं ब्रह्मचैतन्यंचतस्यतन्मूलशोका देश्चविद्रावणसमर्थत्वात्अत्युच्चं । नीचोच्चयोश्चतयोःकथमैक्यमितिभावः ॥ १०६७ ॥ १०६८ ॥ १०६९ ॥ ततश्चैतद्वाक्याद

इतिभागवतेप्रोक्त्यासदादोषोपमर्दने ॥ सुशक्तमीशचैतन्यंतदशक्तमनीदृशं ॥ १०६८ ॥
जीवचैतन्यमितितच्चैतन्यद्वयमेवहि ॥ मिथोविरुद्धंनीचोच्चचितोरैक्यंकथंवद ॥ १०६९ ॥
एवंचब्रह्मचैतन्यंनैवजीवस्याचित्क्वचित् ॥ अभयत्वादमोहत्वादशोकत्वाचकुड्यवत् ॥ १०७० ॥
किंनश्रुतंहरिर्ब्रह्मरुद्राद्युत्कृष्टचेतनः ॥ इतिनामसहस्रस्थंपुण्यनाममहात्मनः ॥ १०७१ ॥ उत्कृ
ष्टचेतनत्वोक्त्याचिन्मात्रमपिमापतेः ॥ अत्युच्चंजीवचैतन्यादित्यर्थःकिंनसिद्ध्यति ॥ १०७२ ॥
मायांव्युदस्यचिच्छक्त्याकैवल्येस्थितआत्मनि ॥ इतिभागवतोक्त्याचसमर्थान्नहरेर्हिचित् ॥ १०७३ ॥

नुमात्रयंसिद्धमित्याह ॥ एवंचेति ॥ क्वचिदपिजीवस्यचिन्नैव जीवचिदभिन्नंनैवेतियावत् । हेतौचभयाद्यत्यंताभावाधिकरणत्वंवि वक्षितं । अतोनजीवचैतन्येव्यभिचारः ॥ १०७० ॥ प्रकारांतरेणापिचैतन्ययोरेवनीचोच्चभावंसाधयति ॥ किंनश्रुतमिति ॥ १०७१ ॥ जीवचैतन्यादत्युच्चमित्यर्थइतिसंबंधः ॥ १०७२ ॥ भागवतवचनांतरेणापिभगवच्चितोतिसमर्थभूतायाउच्चतांसाध

यति ॥ मायामिति ॥ तत्तस्मात् ॥ १०७३ ॥ जीवब्रह्मचितोरप्यैक्यंकथंशक्यं ॥ १०७४ ॥ तस्माच्चैतन्ययोरेवनीचोच्चत्वेन विरुद्धत्वात् । तद्धर्ममुंडनं जीवब्रह्मचैतन्यनिष्ठसर्वज्ञत्वाल्पज्ञत्वादिधर्ममुंडनं । चितोरैक्यघटनायहिविरुद्धधर्ममुंडनं । उक्तविधयाचितोरेवनीचोच्चतयाविरुद्धत्वेनैक्यायोगेव्यर्थंधर्ममुंडनमितिभावः । तत्रदृष्टांतमाह ॥ न्यासानर्हेति ॥ १०७५ ॥ वैयर्थ्यमेवविशदयति ॥ यतश्चेति ॥ तेअर्थस्य ऐक्यरूपार्थस्य । कथंबाधिकेत्यतःपूर्वोक्तहेतुमेवस्मारयति ॥ यस्मादिति ॥ तस्मा

तत्पूर्णापूर्णयोश्शक्ताशक्तयोरुच्चनीचयोः ॥ जीवब्रह्मचितोरैक्यमपिशक्यंकथंवद ॥ १०७४ ॥ वृथामुंडनमेवेदंतस्मात्तद्धर्ममुंडनं ॥ न्यासानर्हस्यशूद्रस्ययथामूर्धजमुंडनं ॥१०७५॥ यतश्चमुंडिताव्यक्तिरपितेऽर्थस्यबाधिका ॥ यस्माच्चिन्मात्रमप्यैशंशक्तंशोकादिधूनने ॥ जैवंतुतदशक्तंचेत्युक्तंभागवतेस्फुटं ॥ १०७६ ॥ अतोनमुख्यतःकाचिच्छ्रुतिर्वक्तिजगत्त्रये ॥ तवापेक्षितमद्वैतंयत्सावक्तिनतत्त्वव ॥ १०७७ ॥ पदद्वयेपिलक्ष्यार्थस्वीकारादेकलक्षणा ॥ लघीयसीततस्सर्वाश्रुतिःपरमतानुगा ॥ १०७८ ॥ ॥

त्तद्धर्ममुंडनंव्यर्थमितिपूर्वेणान्वयः ॥ १०७६ ॥ प्रकारांतरेणापिऐक्यवाक्यंखंडयति ॥ अतइति ॥ अतस्सकलदेववाक्यानांविशिष्टार्थपरत्वात् ब्रह्मचिदेवजीवचिदितिवाक्यस्यक्वाप्यभावाच्च । मुख्यतः अभिधावृत्त्या तवापेक्षितमद्वैतं चिन्मात्राद्वैतं । सा तत्त्वमसीत्यादिश्रुतिः ॥ १०७७ ॥ यत्विशिष्टैक्यं यच्चविशिष्टपरवाक्यादेवजहदजहल्लक्षणयाचिन्मात्रैक्यमाशास्यते । तदपि

तदास्यात् । यदिचिन्मात्रयोस्स्पष्टमैक्यप्रतिपादकंवाक्यंक्वापिस्यात् । तस्यैवाभावेअप्रामाणिकतदर्थपरत्वकल्पनादपिप्रमाणिक तदधीनत्वार्थपरत्ववर्णनमेवन्याय्यः । एकपदलक्षणारूपत्वेनलघुत्वाच्चेतिभावः ॥ १०७८ ॥ अपिचधर्मिभूतपदार्थद्वयप्रतिपादक पदद्वयलक्षणातोपितद्धर्मभूतैक्यार्थकविभक्तेर्लक्षणयासादृश्यपरत्वकल्पनारूपागौणीवृत्तिरेवात्रन्याय्या योग्येतरान्वितस्वार्थाभि धायकानिपदानीतिवदतात्वयापिआपाततोऽद्वैतप्रतिपादकतयाप्रतीयमानेषु तत्त्वमसि । अहंब्रह्मास्मि । सोहमस्मि । सर्वंखल्विदं

किंचमुख्यार्थपरयोश्शब्दयोर्लक्षणातव ॥ सामानाधिकरण्यार्थमात्रस्यामुख्य
तामम ॥ १०७९ ॥ अतोगुणवतीगौणीवृत्तिरेतादृशस्थले ॥ आदरार्हाशिरश्छे
दात्करच्छेदोयतोलघुः ॥ १०८० ॥ यदन्विताभिधायीनिपदान्यन्वयबोधनं ॥
उपसर्जनतःकुर्युस्तन्मुख्योर्थःपदोदितः ॥१०८१॥ अयोग्यस्त्वन्वयोर्थोनमुख्यार्थो
नतरामसौ ॥ तद्युक्तायुक्तविन्यासंन्यासौचगुणोचितौ ॥ १०८२ ॥ ॥

ब्रह्मेत्यादिवाक्येषुस्थितानांतत्त्वमादिपदानां बाधितत्वेनायोग्यमैक्यरूपमन्वयंविहाय न्यायप्राप्ततयायोग्यं सादृश्यरूपमन्वय मादायैवयोजनाकर्तव्या । अतश्श्रुतिःकाप्यद्वैतेनवर्तते । अक्षंतुभेदपक्षपाति । शुष्कानुमातु व्यर्था । एवंचाप्रामाणिकमेवचैक्य मासीदित्याह ॥ किंचेत्यादिना ॥ यत्यस्मात् । तत्तस्मात् । युक्तायुक्तयोरन्वययोर्विन्यासंन्यासावित्यर्थः ॥ १०७९ ॥

॥ १०८० ॥ १०८१ ॥ १०८२ ॥ गौणीलक्षणयोर्भेदंस्पष्टयितुंतयोराकारंदर्शयति ॥ योग्येत्यादिना ॥ सागौणी ॥१०८३॥ यस्यांलक्षणायां । अगत्या गौणीवद्योग्यान्वयांतराभावेन मुख्य मर्थं । सालक्षणा ॥ १०८४ ॥ १०८५ ॥ यत्यस्मात् । ततत स्मात् । अयं मुख्यलक्ष्यार्थसंबंधः ॥ १०८६ ॥ तस्यतार्किकस्य ॥ १०८७ ॥ ननुगंगापदेनतीरवत्सिंहपदेनापिदेवदत्तस्यैवलक्ष



योग्यान्वयंसमादायजहतीबाधितंचतं ॥ मुख्यार्थावभिरक्षंतीवृत्तिस्साति(मही)बलीयसी॥१०८३॥
यस्यांलक्ष्यार्थनिर्दिष्टेनास्तितद्वाचकंपदं ॥ लक्षकेणैवबोध्योसौयुक्तोन्योप्यन्वयोस्तिन ॥ अगत्याज
हतीमुख्यंवृत्तिस्सातिलघीयसी ॥ १०८४ ॥ आद्यागौणीतिनिर्दिष्टाद्वितीयालक्षणाकिल ॥ विरु
द्धाकारसंपत्तीवृत्तीद्वेनात्रसंशयः ॥ १०८५ ॥ जहत्स्वार्थाऽजहत्स्वार्थेत्याहुर्यल्लक्षणाद्वयं ॥ तदाद्या
यांमुख्ययोगोप्यार्थिकोनतुशाब्दिकः ॥ वाक्यार्थोप्यन्वयस्तीरघोषयोरेवनत्वयं ॥ १०८६ ॥ लक्ष्या
र्थीनिर्विकल्पाधीर्यस्यतस्यमतेपदं ॥ मुख्यार्थयोगंमुख्यंचनवदेन्नापिलक्षयेत् ॥ १०८७ ॥ पौनरुक्त्या
त्सिंहपदंदेवदत्तंनलक्षयेत् ॥ किंतुसिंहात्मतांसिंहसादृश्यंवास्यशंसति ॥ १०८८ ॥ ॥

णयानिरूपणेकथंगौणीलक्षणयोर्भेदइत्यतआह ॥ पौनरुक्त्यादिति ॥ सिंहोदेवदत्तइतिवाक्येदेवदत्तपदेनैवदेवदत्तस्यनिरूपित त्वेनपुनःसिंहपदेनापितस्यैवनिरूपणेपुनरुक्तत्वादित्यर्थः । एवंचपदद्वयमुख्यार्थौसिंहदेवदत्तौताभ्यांपदाभ्यामभिधायमुख्यान्व



यमात्रस्यपरित्यागेगौणी । वाक्यार्थभूतमुख्यान्वयमंगीकृत्यएकपदमुख्यार्थस्यैवत्यागेनअमुख्यार्थांतरनिरूपणेलक्षणेतिकथंनभे दः । कथंवालक्षणातोनगौणीगुणवतीतिभावः ॥ १०८८ ॥ तेतव कृष्णस्नेहविनाशायभक्तिविनाशाय । तैलनाशायेतिध्वनिः । सा ऐक्यगाधा । निर्मूललतेतिसंबंधः । मूलरहिताकाचनलतागुल्मादिषुतिष्ठति । तद्रसेन अंगाभ्यक्तैलनाशोभवतीतिलोकप्र सिद्धिः । तद्वदियमपितवकृष्णस्नेहविनाशायनिर्मूललतैवेतिभावः ॥ १०८९ ॥ १०९० ॥ प्रकारांतरेणाप्यैक्यश्रुतेर्दौर्बल्यमुप

अक्षस्यपक्षपातस्तुसाक्षाद्भेदेप्रदृश्यते ॥ कामाचनानुमापेक्षेत्युक्तेश्शुष्कानुमाऽफला ॥ १०८९ ॥
तस्मात्त्वदैक्यगाधायामानंमूलंनदृश्यते ॥ कृष्णस्नेहविनाशायसानिर्मूलालतैवते ॥ १०९० ॥
पदद्वयोक्त्योरैक्येविरोधान्नास्तितेश्रुतिः ॥ ऐक्यंनमुख्यतोर्थस्याल्लक्ष्यत्वेपदयोर्द्वयोः ॥ १०९१ ॥
अमुख्यार्थंचमुख्यार्थंभेदश्रुतिशतार्दिता ॥ कथंवक्तिश्रुतिर्मुख्यामुख्ययोर्मुख्यतःफलं ॥ १०९२ ॥
नामुख्यान्नहिहर्यक्षस्याग्रेहरिणगर्जितं ॥ चिन्मात्रैक्येनकाप्यस्तिश्रुतिरित्यश्रुतंहितत् ॥१०९३॥

पादयति ॥ पदद्वयेति ॥ १०९१ ॥ अमुख्यार्थं अमुख्ययावृत्त्याऽर्थरूपमक्यं । प्राक्पदद्वयोदितविशिष्टैक्यादर्धांशत्यागेनैक्य मपिभाक्तमितिभावः । श्रुतिः तत्त्वमसीत्यादिश्रुतिः । मुख्यामुख्ययोर्मध्ये मुख्यामुख्ययोर्मुख्येसंप्रत्ययइतिवचनात् । मुख्या र्थत्वेननिरवकाशत्वेनबहुत्वेनचप्रबलाभेदश्रुतिःअमुख्यार्थत्वेनदुर्बलामैक्यश्रुतिमाभासीकरोति । ब्रह्मचित् जीवचिदभिन्नेतिमु

ख्ययावृत्त्याचितोरेवाभेदप्रतिपादिकाश्रुतिस्त्रैलोक्येपिनास्ति । अतोपिगतमद्वैतमतमितिभावः ॥ १०९२ ॥ १०९३ ॥ साहित्यमुद्रयापरमपहसति ॥ प्रवव्राजेति ॥ आम्नायाख्यमंदिरात् । शिरः श्रुतिशिरोरूपंऐक्यप्रतिपादकतयाऽभिमतंवेदांतवाक्यं। मुंडितं ऐक्यमस्तकादुच्छिद्यान्यत्रस्थापितं । बाह्येभ्यः वेदबाह्येभ्यःशून्यवादिभ्यः स्वपोषकवेदांतवाक्याभावात्शून्यवादिवचनान्येवगतिरितितत्रैवस्थिरमभूदितिभावः॥१०९४॥ भेदोभेदिभ्यांभिन्नोवाऽभिन्नोवाभिन्नाभिन्नोवेतिविकल्प्यअनवस्थान्यतरमात्र

प्रवव्राजतदद्वैतंत्वमिवाम्नायमंदिरात् ॥ शिरोमुंडितमस्माभिर्बाह्येभ्योभैक्षमाददे ॥ १०९४॥
स्वशिरःपातिवृक्षस्यच्छेदेनाधोमरिष्यति॥भेदेभिन्नादिकल्पोक्तदोषेणस्वैक्यदोषवत्॥१०९५॥
शिशोर्जातस्ययारक्षांकुरुतेजननीहिसा ॥ सर्वखंडनकारस्तुपूतनायाःकुमारकः ॥ १०९६ ॥
सर्वखंडयतोप्यस्यखंडनंरक्ष्यमेवहि ॥ आत्माचरक्ष्यस्तत्कालेभिक्षापात्रंकरेभवेत् ॥ १०९७॥

परिशेषविरोधाख्यदूषणमुक्त्वायत्खंडनकारेणभेददूषणंकृतं । तत् ऐक्यंब्रह्मणोभिन्नमभिन्नंभिन्नाभिन्नंवेतिविकल्पस्यदूषणस्यचैक्येपिसमत्वात्दुर्नीतिरित्याह ॥ स्वशिरइति ॥ स्वयमेवाधोमरिष्यतीत्यर्थः । अस्यार्थस्यखंडनकारएवनिदर्शनमितिभावेनोक्तं ॥ भेदइति ॥ आदिपदेनाभिन्नभिन्नाभिन्नयोर्ग्रहणं । कल्पोविकल्पः ॥ १०९५ ॥ पुनश्चखंडनकारमपहसति ॥ शिशोरिति॥ ॥ १०९६ ॥ युक्त्यंतरंचाह ॥ सर्वमिति ॥ खंडनं सर्वखंडनं । एवकारेणखंडनरक्षणाभावेसर्वस्योत्थानंभवतीतिसूचयति ।

तत्कालेसर्वखंडनस्यआत्मनश्चप्रमाणादिनारक्षणकाले ॥ १०९७ ॥ परन्यायैःपरोदूष्यते स्वार्थश्चसाध्यतइतिखंडनकारस्याभिमा नंखंडयति ॥ परन्यायैरिति ॥ तेन्यायाः परन्यायाः ॥ १०९८ ॥ तेन प्रमाणादिव्यवस्थामंगीकुर्वता । जितं तेनैवजितं । कथमित्यतउक्तं ॥ स्वेष्टापुष्टेरिति ॥ स्वेष्टस्यस्वाभिमतस्यसर्वखंडनस्य आत्मनश्च अपुष्टेःअसिद्धेरित्यर्थः । दुर्न्यायस्यसाधक त्वायोगात् । साधकत्वेचस्वाभीष्टवत्पराभिमतप्रमेयस्यापिसिद्धिप्रसंगादितिभावः । दुर्न्यायस्यासाधकत्वेदृष्टांतमाह ॥ किम्वि

परन्यायैःपरोदूष्यस्स्वार्थस्साध्योमतोयदि ॥ याचिताअपितेन्यायास्सन्यायावानवावद॥१०९८॥
सन्न्यायाश्चेज्जितंतेनदुर्न्यायाअपिचेज्जितं॥स्वेष्टापुष्टेःकिमुव्योमनीलिम्नासोमनीलिमा ॥ १०९९ ॥
उष्ट्रःकंटकमेवात्तितृणंगौर्दर्दुरोमृदं ॥ शिलाकणान्कपोतोत्तिस्वयंशाल्योदनप्रियः ॥ ११०० ॥
गोपुच्छग्रहणेनापिगोष्ठप्राप्तिर्भवेत्तव ॥ गोष्ठात्तुस्वगृहप्राह्यैस्वयमेवयतेतहि ॥११०१॥ ॥

ति ॥ गगननैल्यस्यैवाभासत्वात्यथातेनसोमनीलिमानभवति । तथादुर्न्यायाअपिसाधकानभवंतीत्यर्थः ॥ १०१९ ॥ किंचपर न्यायैस्स्वार्थसाधयामीत्याशामात्रं वस्तुतस्तन्नघटतइत्याह ॥ उष्ट्रइत्यादिना ॥ स्वयं खंडनकारः। परन्यायेनस्वार्थसाधयतिचे त् उष्ट्रादिवत्कंटकादिभक्षणेनैवस्वोदरंपूरयेदितिभावः ॥ ११०० ॥ किंचप्रमाणादिलक्षणव्यवस्थामात्रस्यपरकीयग्रंथच्छायया कर्तुंशक्यत्वेपिस्वाभिमतप्रमेयसिद्धौपरैःप्रमाणस्यानुदितत्वात् तदर्थंस्वेनैवप्रयतितव्यमित्यत्रदृष्टांतमाह ॥ गोपुच्छेति ॥

॥ ११०१ ॥ स्वयंशाल्योदनप्रियइत्युक्तन्यायंतदीयशास्त्रार्थेपिदर्शयति ॥ अभेदार्थइत्यादिना ॥ अस्मिन् बाधितार्थपरित्या गरूपे ॥ ११०२ ॥ तयो र्मुंडितसिंहपुरुषव्यक्त्योः । यद्याचकः येषांपरेषांयाचकः। तेपरेकइतिपूर्वेणान्वयः॥ ११०३ ॥ प्रमेयां तरेष्वपिदर्शयति ॥ मिथ्याभूतेत्यादिना ॥ ११०४ ॥ ११०५ ॥ इत्थं पूर्वोक्तप्रकारेण । न्यायस्य स्वन्यायस्य । जात्येकवच

अभेदार्थेबाधितेतुश्रुतेरन्यार्थतांपरः ॥ ब्रूतेपरस्यन्यायेस्मिंस्त्वंकस्मान्नप्रवर्तसे ॥ ११०२ ॥
विच्छिद्यसिंहपुच्छादिपुरुषस्यकरादिच ॥ तयोरैक्यंवदंतःकेपरेयद्याचकोभवान् ॥ ११०३ ॥
परन्यायैःपरोबोध्यइतिवाङ्मात्रमेवते ॥ मिथ्याभूतप्रमाणेनकोर्थसिद्धिंपरोवदेत् ॥ ११०४ ॥
ऐक्यवेदकवाक्यानांमानत्वंकःपरोवदेत् ॥ अन्येषांवेदभागानाममानत्वंचकोवदेत् ॥ शब्दा
देवापरोक्षंचकःपरोवक्तिभूतले ॥ ११०५ ॥ इत्थंन्यायस्यैवभेदान्नान्यस्यन्यायतस्तव ॥ अर्थसि
द्धिर्भवेन्मंदस्वन्यायानुसृतौचते ॥ वाच्यासर्वाव्यवस्थापितेनास्थापिमतंपरैः ॥ ११०६ ॥ ॥

नं । स्वन्यायानामित्यर्थः । स्वन्यायानुसृतौ स्वन्यायानां स्वकपोलकल्पितसाधकप्रमाणाद्यनुसृतौ । व्यवस्था प्रमाणलक्षणादि व्यवस्था । परेणहि तत्त्वावेदकत्वंप्रमाणलक्षणमुदितं शब्दरूपप्रमाणस्यचशाब्दप्रमाजनकत्वमेवलक्षणमुदितं । अतत्वावेदकप्र माणं शब्दादेवापरोक्षज्ञानं शब्दादेवनिर्विकल्पकंचवदतस्तवतानिलक्षणानिमाभूवन् । अतस्त्वयापिप्रमाणलक्षणादिकं स्वाभी



ष्टसाधकप्रमाणानिचपृथगेववक्तव्यानीतिभावः । तेन परेणापिप्रमाणादिव्यवस्थांगीकारेण । मतं प्रमाणादिव्यवस्थायाःप्रामाणिक त्वमतं ॥ ११०६ ॥ सोयंदेवदत्तइत्यत्रपदद्वयस्यस्वरूपमात्रेलक्षणेतिपरस्यपक्षः सोपिन । तद्देशकालादीनामिदानीमभावेनतत्प दमात्रेलक्षणायाःकथंचिद्वक्तुंशक्यत्वेपि एतत्पदार्थभूतैतद्देशकालसंयोगस्यवाक्यप्रयोगकालेपिविद्यमानत्वेनपररीत्याप्येतत्पदल क्षणायांकारणाभावात् । विचार्यमाणेतुपदद्वयेपिनलक्षणेत्याह ॥ सोयमिति ॥११०७॥११०८॥ तत्पदं तदितिपदं । अन्यत्

सोयमित्यादिवाक्येपिनत्यागोस्तिपदार्थयोः ॥ ११०७ ॥ प्राग्देशकालयोगस्यातीतत्वंवक्तितत्पदं ॥
इदंपदंतुवक्त्येतद्देशकालानुबंधितां ॥ ११०८ ॥ तद्देशकालयोगस्यह्यत्ययंतत्पदोदितं ॥ कस्त्यजेद
न्यदस्त्येवविशेषणपदोदितं ॥११०९॥ विशेष्यपदवाच्यस्यत्वीषत्त्यागोपिनेष्यते ॥ वाक्येस्मिन्नन्य
वाक्येतुमृद्धटस्स्वर्णमेवहि ॥ कर्णभूषणमित्याद्येनैकत्यागोपिविद्यते ॥ १११० ॥ ॥

एतद्देशकालसंबंधित्वं । इदानीमतीतोयःकाशीदेशकालसंबंधः सएवतत्पदार्थः । तथाचसोयमित्यत्र सद्युक्तप्राग्जातकाशीदेश कालसंबंधध्वंसवानेयं नत्वन्यइतिवाक्यार्थपर्यवसानंस्यात् । अन्यथाकाशीस्थस्यचास्यचैक्यासिद्धिः । देवदत्तस्वरूपमात्रस्यच अयमितिपदेनैवबोधयितुंशक्यत्वात्पदांतरैवयर्थ्यंचस्यादितिभावः ॥ ११०९ ॥ विशेष्यपदवाच्यस्य देवदत्तपदवाच्यस्येत्यर्थः । मायिनस्तुतद्ब्रह्म त्वमसीत्यत्र विशेष्यपदवाच्यब्रह्मत्वस्यापित्यागोस्ति । अतोपिनेदंतस्योदाहरणमितिभावः । अस्मिन्वाक्ये सो

यंदेवदत्तइतिवाक्ये । इत्याद्येअन्यवाक्येइतिसंबंधः । अन्यवाक्ये ऐक्यप्रतिपादकवाक्यांतरे । एकत्यागोपि एकपदवाच्यस्या पित्यागइत्यर्थः । मृत्त्वघटत्वादिविशिष्टयोरैक्यं । नत्वेकस्यापिपदवाच्यस्यत्यागोस्ति । इदमेवचतवोदाहरणं । नतुतत् । तत्रहि तत्पदवाच्यातीतदेशकालयोरिदानीमभावेनागत्यातवापिमतेस्वरूपमात्रलक्षणा । तत्त्वमसीतिवाक्येतुतत्पदंनदेशकालपरं किंतु पूर्वोक्तसत्यत्वआत्मत्वादिगुणपरामर्शि । तेषांचऐक्योक्तिदशायामपिसत्त्वेनअनुपपत्तेरभावात्किमर्थलक्षणा । विरुद्धधर्मविशि ष्टयोरैक्यानुपपत्त्यालक्षणाचेत् । कुत्रेदंदृष्टं । मृद्घटाद्यैक्यवाक्येलक्षणायाएवाभावात् । सोयमितिवाक्येचनिमित्तांतरेणैवलक्ष

योदंडीकुंडलीचासावितिदंडविशिष्टतः ॥ स्यात्कुंडलविशिष्टैक्यंकिमेकेदंडकुंडले ॥ ११११ ॥
विशेष्योपादानकस्यविशिष्टस्यहिजन्मनि ॥ विशेषणंनिमित्तंनस्तदैक्येऽस्यैकताकुतः ॥ १११२ ॥

णा नतुविशेषणयोःपरस्परविरोधात् । एकस्यैवगगनस्यद्विदेशकालवर्तित्वदर्शनात् । अतस्तवैक्यवाक्यस्यब्रह्मसदृशत्वार्थकत्वे सिंहोदेवदत्तइत्यैक्यवाक्यमेवोदाहरणंस्यात् । पदद्वयोक्तसिंहत्व देवदत्तत्वयोस्तत्रैवविरोधात् । विरुद्धगुणत्यागेनमुंडितव्यक्त्यो रैक्यकथनेतुअदृष्टकल्पनाख्यरोगस्यनकिंचिदौषधमितिभावः ॥ १११० ॥ नन्वेवंसोयमितिवाक्यस्थपदद्वयस्यापिविशिष्टपरत्वेत योश्चविशेष्यभूतदेवदत्तेनैक्येविशेषणभूतयोरतीतवर्तमानदेशकालयोरपितेनैक्यंस्यादित्यतआह ॥ योदंडीति ॥ ११११ ॥ विशिष्टैक्येपिविशेषणैक्याभावेकारणमाह ॥ विशेष्येति ॥ विशेष्योदेवदत्तः नःमते । तदैक्ये उपादानोपादेयरूपविशेष्यवि

शिष्टयोरैक्ये । अस्य निमित्तभूतदंडादेः ॥ ११११२ ॥ ननुक्कापिविशिष्टैक्यंमयानांगीक्रियते । अतोमदुक्तव्याप्तिव्यभिचारस्यने
दमुदाहरणमित्यतआह ॥ अथेति ॥ उपादानोपादेययोरसंभावितैक्यस्यपरित्यागादौद्धत्यादित्युक्तं । आपादनं विशिष्टैक्येवि
शेषणयोरप्यैक्यंस्यादित्यापादनं ॥ १११३ ॥ ननुरूपविशिष्टस्यघटेनैक्येआवयोर्मतेधर्मधर्मिणोर्भेदाभेदांगीकारात्विशेषणीभूत
रूपस्यापिघटेनैक्यमस्ति । अतइदमेवममव्याप्तेरुदाहरणंभविष्यतीतिशंकामनूद्यदूषयति ॥ अस्तीति ॥ १११४ ॥ तद्रूपविशि

अथौद्धत्याद्विशिष्टैक्यंयदिक्कापिनमन्यसे ॥ तर्हिदृष्टांतशून्यत्वाद्धतमापादनंतव ॥ १११३ ॥
अस्तिरूपविशिष्टैक्येरूपैक्यमपियद्यपि ॥ भेदाभेदमतेतच्चनतेतर्कनिदर्शनं ॥ १११४ ॥ कार्य
कारणभावाद्वाधर्मधर्मित्वतोपिवा ॥ ईदृग्विशेषणैक्यस्यप्राप्तिस्तवममापिच ॥ १११५ ॥
अप्रयोजकमेवाभूद्विशिष्टैक्यमिहावयोः ॥ औपाधिकसमावेशेव्याप्यव्यापकतानहि ॥ १११६ ॥
अतोनिदर्शनंनेदंयदिभिन्नेविशेषणे ॥ विशिष्टैक्यबलादेवस्यादैक्यमपिकुत्रचित् ॥ १११७ ॥

ष्टैक्येविशेषणीभूतरूपैक्यंकुतइत्यतआह ॥ कार्येति ॥ १११५ ॥ अप्रयोजकं रूपघटयोरैक्येउपादानोपादेयभावस्यैवप्रयोजक
त्वेनविशिष्टैक्यंप्रयोजकंनेत्यर्थः । इह रूपविशिष्टैक्यस्थले । औपाधिकसमागमे उपादानोपादेयत्वरूपैक्योपाधिसंबंधनिमित्तस
मागमे ॥ १११६ ॥ अतः अत्रविशिष्टैक्यस्याप्रयोजकत्वात् । भिन्ने कार्यकारणभावानवलंबिनि अत्यंतभिन्नेदंडकुंडलादौ ।

तत् अत्यंतभिन्नविशेषणस्थलीयविशिष्टैक्यं । नांगीकृतमित्युपलक्षणं । दंडकुंडलविशिष्टैक्येपिदंडकुंडलैक्यादर्शनेनव्यभिचार इत्यपिद्रष्टव्यं ॥ १११७ ॥ १११८ ॥ अपिचसोयमित्यत्रदृष्टांतेतर्कबलेनविशिष्टैक्यंनिराकुर्वतापरेणतत्त्वमसीत्यत्रापितेनैवतर्के णविशिष्टैक्यनिराकरणंकर्तव्यं । अन्यथादृष्टांतदार्ष्टांतिकयोर्वैषम्यप्रसंगात् । अत्रचतर्कस्येष्टापादनरूपाभासत्वमित्याह ॥ किंचेति ॥ चिन्मात्रैक्यं चिन्मात्रेणैक्यं । चिन्निष्ठविशेषणानामपिचिद्रूपत्वात्ईदृशविशिष्टैक्यमपिचिन्मात्रैक्यमेवेतिपरपरिहासा

निदर्शनंतदेवस्यात्तच्चनांगीकृतंत्वया ॥ तदानिदर्शनंनेतिसुष्टूक्तंपूर्वसूरिभिः ॥ १११८ ॥ किंचैवमपिसार्वज्ञपूर्वधर्मविशिष्टतः ॥ अज्ञतादिविशिष्टाच्चचिन्मात्रैक्यमिहोच्यतां ॥ १११९ ॥ यतोस्तिगुणगुण्यैक्यमपिजीवेहरौचनः ॥ उक्तैतद्बाधकाभावाल्लक्षणावसरोत्रन ॥ ११२० ॥ विशेषणद्वयस्यात्रयद्यप्यास्तिविरुद्धता ॥ नसादृष्टांतवाक्येमेतदेतौद्राविडांध्रकौ ॥ ११२१ ॥ ॥

र्थमुदितं ॥ १११९ ॥ अस्मिन्विशिष्टैक्येविशेषणैक्यमपिइष्टमेवेत्याशयेनोक्तं ॥ यतइति ॥ नःमते । इदंचोपलक्षणं । परेणापि धर्मधर्मिणोरैक्यांगीकारात् । उक्तैतद्बाधकाभावात् विशिष्टैक्येविशेषणैक्यमपिस्यादितिबाधकाभावादित्यर्थः । अत्र तत्त्वमसीतिवाक्ये ॥ ११२० ॥ विशेषणद्वयस्य तत्पदोक्तसार्वज्ञादिविशेषणस्य त्वंपदोक्तकिंचिज्ज्ञत्वादिविशेषणस्यचेत्यर्थः । सा विशेष



णद्वयविरुद्धता । दृष्टांतवाक्ये सोयमितिवाक्ये । एकस्यैवदेवदत्तस्यकाशीदेशकालस्थत्वस्य एतद्देशकालस्थत्वस्यचक्रमेणसंभवेनविरोधाभावात् । युगपद्देशकालद्वयवर्तित्वंचनवाक्यार्थः । वक्तुरनभिप्रेतत्वात् । मइत्युपलक्षणं । विद्वन्मात्रस्यचेतिद्रष्टव्यं । ततत्स्मात् दृष्टांतेविरोधाभावात् । दार्ष्टांतिकवाक्येतर्कस्यानवकाशात् । एतौ दृष्टांतदार्ष्टांतिकौ । द्राविडभाषांआंध्रोनजानाति । आंध्रवार्तांचद्राविडोनजानाति । तद्वदेतावप्यभूतामितिभावः ॥ ११२१ ॥ तत्तस्मात् दृष्टांतेक्रियमाणचर्चायाःदार्ष्टांतिकाननुगुणत्वात् । अयं दार्ष्टांतिकः । सादृष्टांतचर्चा । यथामहताप्रयत्नेनआपणादानीयकदलीपक्वत्वङ्मोचनेपिकंटकभक्षकस्योष्ट्रस्यनतेनप्रयोजनं । तथेयमपिचर्चादार्ष्टांतिकाननुगुणत्वाद्व्यर्थेतिभावः । ननुदंडविशिष्टकुंडलविशिष्टैक्येदंडकुंडलयोरुपलक्षण

तत्त्वेदृष्टांतचर्चेयंनदार्ष्टांतिकसिद्धये ॥ क्रमेलकोयंकदलीपक्वत्वङ्मोचनंचसा ॥ ११२२ ॥

त्वमेव नविशेषणत्वमितिचेत् । तर्हिविशिष्टैक्यस्याप्यभावात्देवदत्तोदेवदत्तइतिवत्वाक्यस्यवैयर्थ्यंस्यात् । अदंडिव्यावृत्त्याअकुंडलिव्यावृत्त्याचविशिष्टैक्यात्नवैयर्थ्यमितिचेत् । न । दंडकुंडलपदाभ्यांदंडकुंडलयोरसमर्पणेउक्तव्यावृत्त्योरप्यसंभवात् । कथंतर्हिकाकवद्देवदत्तगृहमित्यत्रकाकादीनांगृहव्यावर्तकत्वमितिचेत् तत्रापिकदाचित्काकसंबंधस्यविद्यमानत्वादेव तदसंबंधिगृहाद्व्यावृत्तिः । नतूष्णीं । अन्यथासर्वथाकाकासंबंधिनिगृहेपिकाकवदितिप्रयोगप्रसंगात् । मतुपोवैयर्थ्याच्च । एवंतर्हिकाकोपिविशेषणमेवाभूत् । नोपलक्षणमितिचेत् । सत्यं । तदसंबंधिनस्तद्व्यावर्तकत्वायोगात्तत्संबंधेचतद्विशेषणत्वापरिहारान्नमहदंतरंविशेषणोप

लक्षणयोः । कुंडलादीनांबहुकालसंबंधात्व्यावर्तकांतरमनंतर्भाव्यसाक्षाद्व्यावर्तकत्वाद्वा काकादीनामल्पकालंसंबंधात्स्वापगमेप्यु
त्तृणत्वादिव्यावर्तकांतरमंतर्भाव्यव्यावर्तकत्वाद्वाक्वापिद्विप्रकारत्वकथा । किंचवसतिसोयमित्यत्रापितत्पदेनातद्व्यावृत्तेःइदंप
देनचानिदंपदार्थव्यावृत्तेश्चावश्यकत्वेनविशिष्टैक्यस्यैवापातात्स्वरूपैक्यकथायांनेदमुदाहरणंस्यात् । ननुतत्त्वमसीत्यत्राप्य
स्तुतर्हिव्यावृत्तिविशिष्टैक्यं सार्वज्ञादिगुणविशिष्टैक्यमेवनांगीक्रियतइतिचेन्न अभाववैशिष्ट्यांगीकारेसुतरांनिर्विकल्पकत्वासं
भवात् । किंचदेवदत्तस्सोयमित्यत्रएकस्यैवदेवदत्तस्यैकदोभयदेशस्थत्वायोगात् अतीतकाशीदेशस्थत्वानुवादकतत्पदव्याव
र्त्यस्य तदाकाशीदेशावर्तिनोन्यत्वस्यैवप्राप्त्या इदानीमेतद्देशस्थत्वार्थकेदंपदव्यावर्त्यस्यचेदानीमेतद्देशातिरिक्तदेशवार्तिनोन्यत्व
स्यैवप्राप्त्या व्यावृत्तिविशिष्टैक्यस्याप्यसंभवात् । तत्त्वमसीत्यत्र सार्वज्ञादिगुणविशिष्टार्थकतत्पदेनकिंचिज्ज्ञजीवस्यैवव्यावर्ति
तत्वेनाल्पज्ञत्वादिविशिष्टार्थकत्वंपदेनचसर्वज्ञब्रह्मणएवव्यावर्तितत्वेनव्यावृत्तेश्चभेदापरपर्यायत्वेनपुनस्तयोरैक्यायोगात् । अंगी
कृत्यचेदमुदितं । वस्तुतस्त्वतद्व्यावृत्तिवैशिष्ट्यापेक्षयातत्तद्वैशिष्ट्यस्यैवलघुत्वात्यथासंभवंवाक्यार्थत्वमूह्यं । अतःसोयमितिदृष्टांत
स्यनकथंचिदपिपरमतेप्रकृतोपयोगः । प्रत्युताविरुद्धपदद्वयार्थकतयाऐक्योपयोगितद्वाक्यं विरुद्धपदद्वयार्थकतयासाक्षादैक्यवि
रोधिनस्तत्त्वमसीतिवाक्यस्यप्रतिकूलमेव । किंचविशेषणस्योपलक्षणस्यवाकिमिदंव्यावर्तकत्वंनाम । नतावद्वस्तुनिष्ठव्यावृत्तिजन
कत्वं। घटपटादिनिष्ठव्यावृत्त्याख्यभेदस्यविलक्षणतत्तत्सामग्रीभेदेनैवसंभवात् । उत्पद्यमानघटेनसहजायमानस्यभेदस्यवस्तुनिष्ठ
विशेषणस्यचसहोत्पद्यमानस्यान्योन्यंजन्यजनकभावासंभवाच्च । नापिवस्तुनिष्ठव्यावृत्तिबोधजनकत्वं विलक्षणस्वस्वसामग्र्या

बोध्यमानवस्तुतस्त्वेतरसकलासंकीर्णतयैवबोधनियमेनतत्तद्वस्तुनिष्ठव्यावृत्तिबोधेपिविशेषणाद्यनपेक्षणात् । किंतुव्यावृत्तौविप्र
तिपन्नंमंदंप्रतिलिंगतयाव्यावृत्त्यनुमापकत्वमेव । अनुभवस्यपरंप्रत्युपन्यासायोगात् । लिंगंचतत्रसदेवभवेत् । अन्यथास्वरूपा
सिद्धिप्रसंगात् । कथंतर्हिंकाकादीनामुपलक्षणत्वमितिचेत् । न । तस्यापिगृहेविद्यमानतादशायांनकाप्यनुपपत्तिः । गृहादपगमेतु
तत्कृतमुत्तृणत्वादिकमेवव्यावर्तकं । गुरूणांटीका कुरूणांक्षेत्रमित्यत्रापिगुरुकृतत्वं कुरुयुद्धयोग्यभूमित्वंचतत्तन्निष्ठमेवलिंगं ।
घटाभावइत्यत्रचाभावनिष्ठंघटप्रतियोगिकत्वमेवलिंगं । गुर्वादीनांचसाक्षात्तन्निष्ठत्वाभावेनमुख्यव्यावर्तकत्वाभावात्व्यावर्तकघ
टकतयाव्यावर्तकत्वोपचारात्उपलक्षणत्वकथा । ज्ञानस्यचभिन्नभिन्नस्वस्वसामग्रीसामर्थ्यात्व्यावृत्ततयैवजायमानस्यनघटो
व्यावर्तकः । ज्ञानग्राहकसाक्षिणैवतन्निष्ठव्यावृत्तेरपिस्वसामर्थ्येनग्रहणसंभवात्ज्ञाननिष्ठव्यावृत्तिबोधेपिनघटस्योपयोगः ।
अतीतानागतज्ञानेउभयोरप्यसंभवात् । एकस्मिन्नेवघटेभूयोभूयोजायमानज्ञानस्यतत्प्रागभावभेदात्सामग्रीभेदोस्त्येव । ज्ञानज
नकसन्निकर्षाश्रयतयाविषयस्यापिज्ञानेनियमेनोल्लेखात्विषयस्यापिव्यावर्तकत्वोपचारः । ज्ञानव्यावृत्तौविवदमानंप्रतितु घटविष
यकत्वाख्यज्ञाननिष्ठलिंगेनज्ञानांतराद्व्यावृत्तिर्बोध्यते । भ्रमेचभिन्नभिन्नदोषघटितसामग्र्याभिन्नोभिन्नोभ्रमोपिजायते । तस्मिंश्च
भ्रमेदोषसामर्थ्यादेवाविद्यमानस्यतस्यतस्यभ्रांतार्थस्यचोल्लेखनियमाद्व्यावर्तकत्वोपचारः । परंप्रतिव्यावृत्तिबोधनायतुशशविषाण
विषयकत्वंज्ञाननिष्ठमेवलिंगं । तस्यचसत्यत्वेनकारणत्वसंभवान्नकाप्यनुपपत्तिः । नहिभिन्नभिन्नांकुरजन्यकलमबीजभेदोदेवद
त्तसंबंधायत्तः । मध्येमार्गपतितबीजभेदाभावप्रसंगात् । देवदत्तस्यैवबीजेषुपरस्परंभेदाभावप्रसंगाच्च । बीजनिष्ठदेवदत्तसंबंधित्वं

यज्ञदत्तीयबीजादितोव्यावृत्तिबोधेकदाचिदुपयुज्येतापि। एवंचदंडकुंडलयोरुपलक्षणत्वोक्तावपिविशेषणत्वस्यैवोक्तत्वेनोक्ततर्कस्य व्यभिचारतादवस्थ्यं ॥ ११२२ ॥ अधुनापरोदीरिततर्कस्योक्तकुत्सितशंकानर्हव्यभिचारस्थलमाह ॥ यथाधूमेति ॥ त्यागो विशेषणयोः । लक्षणा पर्वतस्वरूपमात्रलक्षणा ॥ ११२३ ॥ तथासति विशेषणत्यागादौसति । धूमवन्ह्योर्व्याप्तिबोधनायप्रयुज्यमानेऽस्मिन्वाक्येतयोरवश्यंग्राह्यतयाविशेषणत्वात्उभयविशिष्टेनविशेष्यभूतपर्वतेनैक्याभावाच्चसुस्थःपरकीयतर्कस्यात्रव्यभिचारइतिभावः ॥ ११२४ ॥ प्रकारांतरेणदृष्टांतदार्ष्टांतिकयोर्वैषम्यंसूचयन्तत्पदोक्तगुणत्यागेवाक्यार्थत्यागएवस्यादित्याह ॥

> यथाधूमविशिष्टस्यवह्निवैशिष्ट्यवर्णने ॥ नविशेषणयोरैक्यंनत्यागोनापिलक्षणा ॥ ११२३ ॥
> तथासतिकथंव्याप्तिर्धूमवन्ह्योःप्रसिद्ध्यति ॥ व्याप्तिबोधार्थमेवैतद्वचनंसर्ववादिनां ॥११२४॥
> इदंतुतत्पदंपूर्ववाक्योक्तगुणयुक्ततां ॥ ब्रह्मणोवक्तिदेशादिव्यापकस्यनचापरं ॥ ११२५ ॥
> सत्यत्वात्मत्वैतदात्म्यपूर्वाःपूर्वपदोदिताः ॥ गुणास्त्वार्थसमास्तेषांत्यागोर्थत्यागएवते ॥ ११२६ ॥

इदंत्विति ॥ देशादिव्यापकस्य देशकालव्यापकस्य। अपरं सोयमितिवाक्यस्थतत्पदवत्अतीतदेशकालसंबंधितां । सर्वदेशसंबंधिनिब्रह्मणिअतीतदेशस्यैवायोगात् । इदानींत्यक्तोदेशोह्यतीतदेशः। सचाणोरेवघटतेनव्याप्तस्य। अतःप्रागुक्तधर्मपरामर्शकमेव तत्त्वमसीत्यत्रतदितिपदमितिभावः ॥११२५॥ पूर्वपदोदिताः। ऐतदात्म्यमिदंसर्वं तत्सत्यं सआत्मेतिवाक्यस्थैतदात्म्यादिपदोदिताइत्यर्थः । ऐतदात्म्यपदेनैक्यमेवहिपरोवक्ति। सत्यत्वात्मत्वादिकंचपराभिलषितंप्रमेयं। अतस्तत्त्यागोवाक्यार्थत्यागएवेतिभा



वः ॥ ११२६ ॥ अतः तत्पदोक्तब्रह्मगुणत्यागायोगात् । चित्रस्त्रीप्रार्थनं चित्रलिखितस्त्रीप्रार्थनं । उक्तविधयातत्त्वमसीतिवाक्यस्थतत्पदस्वरूपमात्रलक्षणायोगात्तदर्थमसाध्यदृष्टांतगवेषणंक्लीबविवाहायचित्रस्त्रीप्रार्थनवत्स्वाकौशलद्योतकमेवेत्यर्थः ॥ ११२७ ॥ अपिचसोयंदेवदत्तइतिवाक्येपिदेवदत्तपदार्थस्यायमितिपदार्थस्यचत्यागादर्शनेनतत्त्वमसीत्यत्रापितद्ब्रह्मेतिविशेष्यवाचकब्रह्मपदार्थस्यत्वमितिपदार्थस्यचत्यागेनिदर्शनाभावेनसुस्थिरत्वात् तयोश्चत्वदभिलषितैक्यघातकत्वात्कथमैक्यंवाक्यार्थ

> अतःक्लीबविवाहार्थेचित्रस्त्रीप्रार्थनंतव ॥ ११२७ ॥ विशेष्यब्रह्मशब्दार्थसार्वज्ञादिगुणांबुधेः ॥ निषेधःकुत्रदृष्टस्तेत्वंपदार्थगुणस्यच ॥ ११२८ ॥ किंचाविनाशीजीवोनुच्छित्तिधर्माश्रुतौश्रुतः ॥ नकर्मणाकनीयान्योनित्योस्यमहिमापिच ॥ ११२९ ॥ अतस्तद्गुणसंत्यागःप्राणत्यागश्श्रुतेर्भवेत् ॥ परन्यायस्तुनैवास्तिदग्धारण्यमृगोऽभवः ॥ ११३० ॥

इत्याह ॥ विशेष्येति ॥ अथकस्मादुच्यतेब्रह्मेतिबृहंतोह्यस्मिन्गुणाइतिश्रुतेस्सार्वज्ञादिगुणांबुधेरित्युक्तं ॥ ११२८ ॥ जीवगुणानांब्रह्मगुणानांचाविनाशित्वाच्चनत्यागइत्याह ॥ किंचेति ॥ अविनाशीवाअरेयमात्मानुच्छित्तिधर्मा । एषनित्योमहिमाब्राह्मणस्य। नकर्मणावर्धतेनोकनीयान् इतिश्रुतिद्वयमनेनगृह्णाति । कर्मनिमित्तकहान्यभावश्रवणात्परंब्रह्मैवायंब्राह्मणो नब्राह्मणमात्रमितियुक्तिसूचनाय यःकर्मणानोकनीयानित्युक्तं । तद्गुणसंत्यागः तयोर्जीवब्रह्मणोर्गुणसंत्यागः। सिंहोदेवदत्तः यजमानः

प्रस्तरइत्यादिविरुद्धार्थकवाक्येषु जहदजहल्लक्षणयापरैरैक्यानंगीकारात्परन्यायोनैवास्तीत्युक्तं । अतस्त्वंदग्धारण्यमृगोभवः । दग्धारण्यमृगस्यहिवनस्थतृणाभावात्स्वन्यायोनास्ति । तस्मिन्सस्यादेरभावात्परन्यायोपियथानास्ति तथातवापिस्वरीत्यागुण त्यागोपिनाभूत् । गुणत्यागेपररीतिस्तुनास्त्येव । अतस्त्वमपितादृशोभूरितिभावः ॥ ११२९ ॥ ११३० ॥ ऐक्योक्त्यानिर्गुणो

यद्यैक्योक्तिबलादेवगुणानांबाधनंतदा ॥ उत्पन्नबालमंत्रेणविरोधिग्रहनिग्रहः ॥ निगृ
हीतेचतस्मिंत्स्याब्दालस्योत्पादनंतव ॥ ११३१ ॥ सामान्यनिर्गुणोक्त्यापिनगुणोक्तेःप
राभवः ॥ यदग्नीषोमवाक्येनैवहिंसावागपोद्यते ॥ ११३२ ॥ यदितत्त्वंपदाभ्यांतेरूपमा
त्रनिरूपणं ॥ चिच्चिदित्येवचोक्तंस्यात्कस्यैक्यंतेनसाध्यते ॥ ११३३ ॥ सोयमित्यत्रचो
क्तंस्यात्प्राक्कालाद्यविवक्षणे ॥ देवदत्तोदेवदत्तोघटोघटइतिस्फुटं ॥ ११३४ ॥ एवंचप्रत्य
भिज्ञानस्वरूपस्यैवभर्जनात् ॥ स्थैर्यासिद्धिःपदार्थानांप्राप्ताचपुनरुक्तता ॥ ११३५ ॥ ॥

क्त्यावाविरुद्धगुणसंत्यागइतिशंकां गुणसौरभोक्तयुक्तिमेवसाहित्यमुद्रयास्मारयन्परिहरति ॥यदीति॥ विरोधिग्रहनिग्रहःउत्पत्ति विरोधिग्रहपरिहारइत्यर्थः । तस्मिन्विरोधिग्रहे । तवमते ॥ ११३१ ॥ ११३२ ॥ दोषांतरंचवदति ॥ यदितत्त्वंपदाभ्यामिति ॥ ११३३ ॥ ११३४ ॥ प्रत्यभिज्ञानस्वरूपस्य सोयंघटइत्यादिप्रत्यभिज्ञानस्वरूपस्य ॥ ११३५ ॥ व्यावर्तकधर्मानुक्तौव्यावृत्ते

रप्यसिद्धिरित्यत्रदृष्टांतमाह ॥ नहीति ॥ ११३६ ॥ अतः उक्तदृष्टांतबलात् । स्वेष्टार्थोन्यावृत्तिः । तत्सिद्ध्यर्थं ॥ ११३७ ॥ उक्तव्यवस्थया क्रमिकदेशकालव्यवस्थया । तत्पदस्यपूर्वदेशकालध्वंसवैशिष्ट्यव्यवस्थयावा । तत्तस्मात् ॥ ११३८ ॥ विरोधं स्फोरयितुंतत्त्वंपदाभ्यामुक्तगुणान्स्पष्टमाह ॥ सार्वज्ञेति ॥ ११३९ ॥ ११४० ॥ मिथ्यात्वात्विरुद्धगुणत्यागइतिशंकांपरिह

पदेनानुदितोधर्मोनैवव्यावर्तकोभवेत् ॥ नह्ययंघटइत्युक्तेसिद्ध्येद्रक्तघटान्यता ॥११३६॥
अतस्स्वेष्टार्थसिद्ध्यर्थंतत्तदर्थपरिग्रहे ॥ आवश्यकेरूपमात्रलक्षणाकुत्रकथ्यतां॥११३७॥
पूर्वोत्तरत्वंचैकस्यस्यादेवोक्तव्यवस्थया ॥ तत्सोयमितिवाक्यार्थऐक्यंस्यादविरोधतः
॥ ११३८ ॥ सार्वज्ञसर्वशक्तत्वपूर्णानंदत्वपूर्वकः ॥ तत्पदार्थोब्रह्मगुणोदुःखित्वाज्ञत्वपू
र्वकः ॥ ११३९ ॥ जैवोगुणस्त्वंपदार्थोयदितत्त्वंपदोदितः ॥ कथंपुनस्तयोरैक्यंस्यादत्यंत
विरुद्धयोः ॥११४०॥ असीत्यैक्यस्यधर्माणांलटोक्तावर्तमानता ॥ श्रुत्युक्तधर्मस्याध्यासे
त्वैक्याध्यासःकुतोनते ॥ ११४१ ॥ त्यजेदेकंकुलस्यार्थइतिन्यायमनुस्मर ॥ ११४२ ॥

तुंधर्माध्यासपक्षमैक्यप्रतिबंद्यादूषयति ॥ असीति ॥ ऐक्यस्यधर्माणांचवर्तमानता । त्वमेवदंडीकुंडलीचासीत्युक्तेदंडकुंडलयो रपिवर्तमानत्वलाभादितिभावः । एवंचधर्माणामैक्यस्यचसहवाप्रवृत्तिस्सहवानिवृत्तिरित्याह ॥ श्रुत्युक्तेति ॥ ११४१ ॥ विरु द्धबहुगुणानांतत्प्रतिपादकबहुश्रुतीनांचरक्षणायऐक्यत्यागएवन्याय्यइत्याह ॥ त्यजेदिति ॥ अनेन त्यजेदेकंकुलस्यार्थेग्रामस्या

र्थेकुलंत्यजेत् । ग्रामंजनपदस्यार्थआत्मार्थेपृथिवींत्यजेदितिवाक्यंसंगृह्णाति ॥ ११४२ ॥ नन्वैक्यश्रुतिबलादेवधर्माध्यासइत्य
तआह ॥ अद्यापीति ॥ ११४३ ॥ धर्माध्यासे व्यावृत्तचैनन्यद्वयासिद्ध्याजीवब्रह्मैक्यासिद्धिश्चेत्याह ॥ अध्यस्तधर्मादिति ॥
इतरस्मात् स्वाधारादन्यस्मात्शुक्त्यादेः ॥ ११४४ ॥ दोषांतरंचाह ॥ किंचेति ॥ व्याख्यातप्रायमेतत् ॥ ११४५ ॥ पुनरपि

अद्याप्यसिद्धेरैक्यस्यधर्माध्यासःकुतोहरेः ॥ सत्यस्सोअस्यमहिमेत्यस्तिहिश्रुतिरंजसा ॥ ११४३ ॥
अध्यस्तधर्माद्व्यावृत्तौभवेच्छुक्तिरशुक्तिका ॥ इतरस्माद्धिरूप्यत्वंव्यावर्तयतिधर्मिणं ॥ ११४४ ॥
किंचसर्वज्ञताल्पज्ञाद्व्यावर्तयतिधर्मिणं ॥ व्यावृत्तिर्नामभेदोतोव्याहतिश्चध्रुवातव ॥ ११४५ ॥ किंच
कल्प्यमकल्प्यंवासार्वज्ञंब्रह्मण श्रितः ॥ सार्वज्ञरहितायास्तेशुद्धायास्स्वोपलक्षितां ॥११४६॥ चितं
व्यावर्तयेन्न्यायसाम्याज्जीवचितोयथा ॥ जैवोधर्मोपितच्छून्यचिन्मात्रात्स्वोपलक्षितां ॥ ११४७ ॥
चितंव्यावर्तयेदेवततश्चिन्मात्रयोस्तव ॥ कथमैक्यमिदंवाक्यंवक्तियौक्तिकसंसदि ॥ ११४८ ॥ ॥

प्रबलंदोषांतरमाह ॥ किंचकल्प्यमिति ॥ कल्प्यमध्यस्तं । ब्रह्मणः सर्वज्ञब्रह्मचैतन्यस्य । यत्सार्वज्ञं तत्कल्प्यमकल्प्यंवाभवतु ।
तथापितेमतेसार्वज्ञरहितायाश्शुद्धचितः निर्गुणचैतन्यात् स्वोपलक्षितांचितं ब्रह्मचितं जीवचितोयथाव्यावर्तयेत् तथाव्याव
र्तयेदेव । न्यायसाम्यादित्यनेन सार्वज्ञराहित्यस्यजीवचैतन्येशुद्धचैतन्येचवर्तमानत्वसाम्येनसार्वज्ञाद्यर्थकतत्पदेनोभयव्यावृ



त्तिरपिन्याय्येतिसूचयति । जैवोधर्मःअल्पज्ञत्वादिः । ततःपदद्वयेनापिशुद्धचैतन्यस्यव्यावर्तितत्वेनतद्भिन्नयोःकिंचिज्ज्ञत्व
सर्वज्ञत्वाश्रययोश्चैतन्ययोरेवैक्यलाभात्चिन्मात्रयो र्द्वेधाक्रोडीकृतसकलचितोश्शुद्धब्रह्मचिदैक्यस्यात्राप्रतिपादनादितिभावः
॥ ११४६ ॥ ११४७ ॥ ११४८ ॥ मास्तुतर्हिपदद्वयस्यापिव्यावर्तकत्वमित्यतआह ॥ व्यावृत्तेरिति ॥ तद्वाक्यं । अतिसूक्ष्म
त्वात्प्रबलत्वाच्चअस्यदूषणस्यकिमन्येनेत्युपसंहरति ॥ अतइति ॥ अतो घटोघटइतिवत्चिदेवचिदितिसर्वसिद्धप्रमेयानुवादात्

व्यावृत्तेरनपेक्षायांचिच्चिदित्येवतद्वदेत् ॥ कानोहानिरतोभेदवादिनांतत्ववादि
नां ॥ ११४९ ॥ अतःप्रत्यक्पराग्भावादल्पसाम्यात्तयोस्सदा ॥ सादृश्यैक्यपरै
वेयंवाग्बिंबप्रतिबिंबयोः ॥११५०॥ सादृश्यैक्येपिवाकिंसहोदेवदत्तइतिस्फुटा ॥
मुखंचंद्रःपदंपद्ममित्याद्याश्चसहस्रशः ॥ ११५१ ॥ एकत्वरूपणेनस्यादुपमानोपमे
ययोः ॥ रूपकाख्योह्यलंकारोवाक्यसौंदर्यपोषकः ॥ ११५२ ॥ ॥

तत्त्वमसीतिपदच्छेदेपिमायावाद्युक्तार्थस्यायोगात् ॥ ११४९ ॥ प्रतिमुखेइदंमुखमितिवत्प्रतिबिंबेजीवेत्वंतदसीतिबिंबैक्योक्तिरे
वेयंश्रुतिरित्याह ॥ अतइति ॥ अतः मुख्यैक्यायोगात् ॥ ११५० ॥ ११५१ ॥ तत्सदृशस्यतदभिन्नतयाव्यवहारेकिंकारणमि
त्यतआह ॥ एकत्वेति ॥ हीत्यनेन एकत्वरूपणंयत्स्यादुपमानोपमेययोः रूपकंनामेतिरूपकालंकारलक्षणप्रसिद्धिंसूचयति ।

उपलक्षणंचैतत् । शौर्यधैर्यपराक्रमशत्रुसंहारापलायनसाहसादिधर्माणांलघूक्त्यालाभाचेत्यपिद्रष्टव्यं ॥ ११५२ ॥ स्वतः स्वप दाभ्यां। अन्यतः भेदश्रुत्यादितः ॥ ११५३ ॥ ऐक्यार्थेदोषांतरंचाह ॥ ईशेति ॥ स्तब्धस्यश्वेतकेतोः स्तब्धत्ववृद्धिदंगुरोःकथ नमितिसंबंधः । अनूचानमानीस्तब्धएयायेतिश्रुत्युक्तस्याहंकारेणस्तब्धस्यश्वेतकेतोःईशैक्यकथनंपुनरपिगर्वाभिवृद्धिहेतुत्वादसं गतमितिभावः । शिष्यकल्पतरोरित्यनेनशिष्यानिष्टकरणमनुचितमितिसूचयति ॥ ११५४ ॥ अस्मदर्थस्तुप्रकृतसंगतएवेत्याह

अतस्सार्वजनीनेऽर्थेसतिसर्वाविरोधिनि ॥ स्वतोन्यतोविरुद्धार्थंकोनून्मादीवदेद्बद ॥ ११५३ ॥
ईशाभेदस्यकथनंस्तब्धस्तब्धत्ववृद्धिदं ॥ प्रकृतासंगतंचस्याच्छिष्यकल्पतरोर्गुरोः ॥ ११५४ ॥
मानेनस्तब्धचित्तस्यप्रतिबिंबत्वरूपणे ॥ ईशाधीनत्वबोधाख्यावाक्यंस्यादतिसंगतं ॥ ११५५ ॥
दृष्टेऽर्थेऽयुक्तशिष्टोक्तेस्तमेवार्थंविमर्शवान् ॥ कोगृह्णीयाद्विषंभुंक्ष्वेत्युक्तेकिंविषमत्तितत्॥११५६॥
अतएवगुरुश्शिष्यस्तब्धबुद्धिंपदेपदे ॥ विचारशीलांरचयन्स्पष्टंनाचष्टकार्यवित् ॥ ११५७ ॥

॥ मानेनेति ॥ ११५५ ॥ ननुयथास्थितवाक्यार्थग्रहणेनगर्ववृद्धेःकःपरिहारइत्यतआह ॥ दृष्टइति ॥ दृष्टेऽर्थे आपाततः दृष्टेऽर्थे ।अयुक्तायाःयुक्तिबाधितायाः।शिष्टस्यआप्तस्य उक्तेरित्यर्थः ।तत् अयुक्तमापातार्थं । तत् तदेव ॥११५६॥ तर्हीशाधी नोसीतिस्पष्टंकिमितिनोक्तवानित्यतआह ॥ अतएवेति ॥ कार्यवित् स्तब्धत्वविमोचनाख्यकार्यवित् ॥ ११५७ ॥ वक्रमुद्रया

आलिख्य । नाम्नोनुलोमवर्णानांप्रतिलोम्नालेखनंकृत्वा । वर्णशिक्षायां अक्षरशिक्षाकाले ॥ ११५८ ॥ तथा ऐक्यव्यपदेशवत् । तत्र मनइशब्देनोक्ते इदमपिबोधोबोधनार्थमेवेतिभावः ॥ ११५९ ॥ श्वेतकेतोर्विमर्शप्रकारमाह ॥ अहमिति ॥ यःगुरुः । अतः मत्तोप्यधिकस्यस्वस्यब्रह्मत्वाकीर्तनात् । अस्यगुरोः । इतिहेतोः ॥ ११६० ॥ विमर्शांतराण्याह ॥ कथमित्यादिना ॥ स्वाशिष्यब्रह्मतां स्वाशिष्यभूतं प्रत्युतदेवरूपं यद्ब्रह्म तद्भावं । अहंतुशिष्यतयास्वोपासकः । ब्रह्मतुस्वस्याप्युपास्यं तदैक्यंमम

अद्यापिबुद्धिवैशद्यसिद्ध्यर्थंवक्रमुद्रया ॥ आलिख्यवर्णशिक्षायांमेधामाधावयंतिहि
॥११५८॥ बोधोबुद्ध्यैतथाप्राहमंतारंमनइत्यपि ॥ अभ्रमायप्रजाशब्दंतत्रप्रायुङ्क्षचोपरि
॥ ११५९ ॥ अहंब्रह्मेतियोनुक्त्वात्वंब्रह्मेत्याहमांगुरुः ॥ अतोनास्यप्रतीतार्थइत्यन्यार्थैक
रोन्मतिं ॥ ११६० ॥ कथंस्वाशिष्यस्यममस्वाशिष्यब्रह्मतांवदेत् ॥ कथंचदुःखिनोऽज्ञस्य
ब्रह्मत्वमपिमेधुना ॥ ११६१ ॥ प्रजामूलब्रह्मतास्यात्कथंतास्वधमस्यमे ॥ प्राणसंस्थस्य
जीवस्यप्राणाख्यब्रह्मताचन ॥ सुसौचयेनसंपन्नस्सोसुसौस्यामहंकथं ॥ ११६२ ॥ ॥

कथंब्रूयात् । ब्रूयाच्चेद्ब्रह्मोपासनवन्मदुपासनमपिकुतोनकुर्यात् । अतस्स्वोपास्यब्रह्मैक्यमपिनोक्तवान् । किंत्वस्यवाक्यस्यान्यो र्थोस्तीतिमतिंकृतवानितिभावः । दुःखिनोज्ञस्यमेइतिसंबंधः । ब्रह्मत्वं सर्वज्ञनित्यसुखित्वरूपब्रह्मत्वं । अधुनास्यात् । भाव्यैक्य स्यकथंचित्संभवेपिअसीतिलटोक्तवर्तमानैक्यंकथंस्यादितिसूचनायाधुनेत्युक्तं ॥ ११६१ ॥ तासुप्रजासु । प्राणसंस्थंमनइतिश्रुतेः

प्राणाधारस्यजीवस्य । न युक्तियुक्तान । येनेशेन । सःईशः ॥ ११६२ ॥ तत्तस्मात् । इति एवंविमृश्य ॥ ११६३ ॥ तत्र सिंहो देवदत्तइत्यादौ ॥ इयं तत्त्वमसीत्यादिरूपा । तावता सादृश्यैक्यमात्रेण ॥ ११६४ ॥ स्वनियंतुश्चब्रह्मणःसादृश्यमात्रतःकथंप्रव र्ततामितिसंबंधः ॥ ११६५ ॥ तन्नियम्यः तेनबिंबेननियम्यः । असौप्रतिबिंबः । प्रतिदृश्यते आभिमुख्येनदृश्यते ॥ ११६६ ॥

करुणापूर्णगुरुणातन्नात्रब्रह्मतोच्यते॥ममेतिनिर्ममोभूत्वापुनर्मीमांसकोभवत्॥११६३॥
अस्तिसादृश्यमात्राच्चवस्तुवस्त्वंतरात्मना॥कथ्यमानंतत्रतत्रसेयंवाक्यावतैवन॥११६४॥
प्रतीचस्स्वनियंतुश्चकथंसादृश्यमात्रतः॥ पराचीशनियम्येचमयीयंवाक्प्रवर्तताम्॥११६५॥
प्रतिबिंबंदर्पणस्थंमुखमित्येवलौकिकाः॥ वदंतितन्नियम्योसौपराक्प्रतिदृश्यते॥११६६॥
अतस्तद्विधतामेवलघूक्त्यामयिबोधयन्॥मतिंप्रचारयंश्चोचेनोचेदाचार्यताकथं ॥११६७॥
तस्मात्प्रत्यक्पराग्भावोनियामकनियम्यता॥ अशब्दोच्चारणस्येवसादृश्यंचाल्पमेवमे॥
इतिप्रबुध्यदुर्बुद्धिंत्यक्त्वाभक्तोभवत्प्रभोः ॥ ११६८ ॥ ॥ ॥

अतःब्रह्मणःबिंबस्वभावत्वात् ममचप्रतिबिंबस्वभावत्वात् । तद्विधतां प्रतिबिंबवत्बिंबभूतपरमात्मनियम्यतां । तस्मात्पराक्त्वं तदाभिमुख्यंचेत्यर्थः । लघूक्त्या त्वंतदसीतिअक्षरचतुष्टयात्मकवाक्योक्त्या । नोचेत् नियम्यत्वतदधीनत्वतत्सादृश्यपराक्त्वा ऽऽभिमुख्यरूपाणांबहूनामर्थानांलघूक्त्याकथमकुशलोनोचेत् ॥ ११६७ ॥ अशब्दोच्चारणस्येव शब्दोच्चारणरहितप्रतिमुखस्येव





यथाशब्दोच्चारणसहितमुखस्यतद्रहितप्रतिमुखस्यचनैक्यं नापिसर्वसादृश्यं तथामेसादृश्यं ब्रह्मसादृश्यं अल्पं तत्स्वातंत्र्याभावा त् । चशब्दसमुच्चितमैक्यंचअल्पं । किंचित्सादृश्यादिरूपं नतुसर्वथैक्यमित्यर्थः ॥ ११६८ ॥ अथापि युक्त्यास्वाभिप्रायस्यबोद्धुं शक्यत्वेपि । न्यदर्शयत् दृष्टांततयोक्तवान् ॥ ११६९ ॥ तत्तस्मात् उक्तयुक्तिसमुदायात् ॥ ११७० ॥ प्रागुक्तस्यातदितिपदच्छे

अथापिकृपयाशिष्यस्यायोग्यार्थप्रमादतः ॥ गतिंनिवारयंत्सूत्रशकुन्यादीन्यदर्शयत्
॥ ११६९ ॥ तदुक्तस्पष्टदृष्टांतैस्स्वयोग्यांप्रतिबिंबतां ॥ ज्ञात्वेशाधीनताबोधादस्तब्धो
भूदितिस्थितं ॥ ११७० ॥ किंचजीवब्रह्मभावोयदितस्यविवक्षितः॥ तर्ह्यहंतदितिब्रूया
त्सर्वंतदितिवावदेत् ॥ त्वंतदित्युपदेशस्तुव्यर्थस्तद्भावमानिनि ॥११७१॥ गर्विष्ठगर्वनि
र्वाणंकुर्वन्गुर्वग्रणीरसौ ॥ अतद्वस्तुत्वमित्याहेत्यस्तिशस्तागतिश्चमे ॥११७२॥ त्वंवासुदे
वोभगवानवतीर्णोजगत्पतिः ॥ इतिप्रस्तोभितोबालैर्मेनेस्वात्मानमच्युतं ॥ ११७३ ॥

दस्यातिसुलभत्वात्पुनरपितमेवस्मारयति ॥ किंचेति ॥ तद्भावमानिनि गर्वेणाहमीश्वरइतिभावनायुक्ते ॥ ११७१ ॥ शस्ता प्रशस्ता । उपक्रमोपसंहारानुगुणतयाकाठिन्याभावेनचसर्वजनमनोहरेत्यर्थः ॥ ११७२ ॥ स्पष्टभागवतोक्तिभिश्चजीवब्रह्मैक्यस्य निंदितत्वात्तद्भेदएवव्याससिद्धांतइत्याह ॥ त्वंवासुदेवइत्यादिना ॥ अत्रचश्लोकत्रयंभागवतीयं । येसोहंभावनामूलाइत्या

दितुमूलस्थभावप्रकाशनायग्रंथकारस्यैववचनं । इतिबालैःप्रस्तोभितस्स्वात्मानमच्युतंमेनेइत्यस्याभिप्रायकथनं ॥ तेबालाः वंचनं किल तज्ज्ञानमिति ॥ कत्थनंतदुपाकर्ण्येत्यस्याभिप्रायकथनं ॥ कत्थनंकिलतद्वचइति ॥ तद्वचः अहमेवाच्युतइतिवचः शु नोध्वनिसमानं । अतिहीनंवचनंकत्थनमित्युच्यते ॥ ११७३ ॥ ११७४ ॥ ११७५ ॥ ११७६ ॥ वासुदेवोहमित्यज्ञः पौंड्रकस्या

कदाचित्पौंड्रकोनामकाशीराजःप्रतापवान् ॥ वासुदेवोहमित्यज्ञोदूतंकृष्णायप्राहिणोत् ॥ ११७४॥
कत्थनंतदुपाकर्ण्यपौंड्रकस्याल्पमेधसः ॥ उच्चैरुग्रसेनाद्यास्सभ्याःप्रजहसुस्तदा ॥ ११७५ ॥ येसो
हंभावनामूलास्तेबालाःकिलसर्वशः ॥ वंचनंकिलतज्ज्ञानंकत्थनंकिलतद्वचः ॥ ११७६ ॥ अज्ञो
ल्पमेधास्सकिलयस्तत्रकृतानिश्चयः ॥ सभ्यानांनतदभ्याशयोग्यंहास्यंकिलाखिलैः ॥ ११७७ ॥
मुख्याधिकारीतद्भावेपौंड्रकाख्योसुरःकिल ॥ एवंविनिंदितंसोहंभावंकश्श्रद्दधीततत् ॥ ११७८ ॥
यदितत्वंमहदिदंकथंनिंद्यंभवेत्सतां ॥ सकृन्निंदापिनिंदैवाकिमुनिंदापदेपदे ॥ ११७९ ॥ नन्वसौदूर
मानीयशेतेमामिहसाधुवत् ॥ इतिमत्वाच्युतंमूढस्स्वपदातमताडयत् ॥ ११८० ॥ ॥

ल्पमेधसः इत्यस्याभिप्रायकथनं ॥ अज्ञोल्पमेधास्सकिलेति ॥ तत्र सोहंभावे । सभ्याःप्रजहसुरित्यस्याभिप्रायकथनं ॥ स भ्यानामिति ॥ ११७७ ॥ तद्भावे तस्यसोहंभावस्यभावनायां । तत्तस्मात् उक्तदूषकशब्दसमुदायात् ॥ ११७८ ॥ सतांनिंद्य मिति हरिणाकृततच्छिरच्छेदस्याप्युपलक्षणं ॥ ११७९ ॥ भागवतवाक्यांतरमपिपठित्वातस्याभिप्रायमाह ॥ नन्वसाविति ॥

मूढः मिथ्याज्ञानीकालयवनः । तंमुचुकुंदं ॥ ११८० ॥ तत्सादृश्ययुते तस्यकृष्णस्यसादृश्ययुते । कृष्णेनपीतांबरकिरीटादिकं मुचुकुंददेहेऽर्पितं । अतस्तस्मिन्मुचुकुंदेएवकृष्णइतिभ्रमोयवनस्यासीदितिहरिवंशप्रथांकिलेत्यनेनसूचयति । तंराजानंअच्युतं मत्वेत्यस्याभिप्रायकथनं नृपेयवनस्याच्युतमतिरभवदिति । नृपएवाच्युतइतिमतिरित्यर्थः ॥ ११८१ ॥ साधीः अच्युतधीः ।

पृथक्स्थिताच्युताज्ञानात्तत्सादृश्ययुतेनृपे ॥ यवनस्याच्युतमतिश्श्रुतिकालेऽभवत्किल ॥ ११८१ ॥ एकस्मिन्नपिजीवेस्मिन्मूढस्याच्युतधीःकिल ॥ अतस्सर्वेषुजीवेषुसाधीर्मूढतमस्यहि ॥ निनिंदशुकयोगींद्रोयांसभास्थस्स्थलेस्थले ॥११८२॥ ईश्वरोहमितिब्रूयुर्मदिरामत्तवृत्तयः ॥ दैत्याइत्याहसमुनिर्व्यक्तंभूगोलनिर्णये ॥ ११८३ ॥ यस्त्वयामंदभाग्योक्तोमदन्योजगदीश्वरः ॥ क्वासौयदिससर्वत्रस्तंभेकस्मान्नदृश्यते ॥ ११८४ ॥ स्वान्येश्वरनिषेधेनस्वस्यैवेश्वरताहृदि ॥ हिरण्यकशिपोश्चेतिस्पष्टंह्यत्रप्रतीयते ॥ ११८५ ॥ ॥

यां जीवेष्वच्युतमतिं ॥ ११८२ ॥ समुनिः शुकमुनिः । ईश्वरोहमित्यनेन यस्मिन्नुपयुक्तेपुरुषईश्वरोहंसिद्धोहमितिअयुतगजमहाबलआत्मानंमन्यमानःकत्थतेमदांधवदितिपंचमस्कंधवाक्यंसंगृह्णाति । यस्मि न्मैरेयीनामकमद्ये उपयुक्तेसतीत्यर्थः ॥११८३॥ यस्त्वयेति ॥ सप्तमस्कंधेहिरण्यकशिपुवचनं । मदन्योजगदीश्वरःक्वेतिस्वान्येश्वरनिषेधेन । उपलक्षणंचैतत् । स्वान्यमीश्व

रंनरहरिंभावयतःप्रह्लादस्यमंदभाग्येतिनिंदनाच्चेत्यपिद्रष्टव्यं । अत्रवाक्ये अत्र अच्युतोहमितिबुद्धौ ॥ ११८४ ॥ ११८५ ॥
॥ ११८६ ॥ ईश्वरोहमितिगीतावाक्यं । तेऽसुराः । इदंवचनद्वयं ॥ ११८७ ॥ ११८८ ॥ अतः ईश्वरोहमितिबुद्धेःजगदस
त्यत्वबुद्धेश्चआसुरमतत्वकथनात् ॥ ११८९ ॥ इति भागवतेगीतासुचोक्तप्रकारेण ॥ ११९० ॥ आपातप्रतीतमैक्यमर्थोनचेत्

इतिभागवतेप्रोक्तंतत्रतत्रकथांतरे ॥ अत्राधिकारिणस्सर्वेश्रूयंतेक्रूरराक्षसाः ॥११८६॥
ईश्वरोहमहंभोगीसिद्धोहंबलवान्सुखी ॥ असत्यमप्रतिष्ठंतेजगदाहुरनीश्वरं ॥११८७॥
इदंगीतासुकृष्णेनह्यासुरींपार्थमेश्शृणु॥इत्यारभ्योदितंतस्मान्मतमेतद्धिरक्षसां॥११८८॥
अतोपिजीवभेदोयंबुधैर्मान्योमुमुक्षुभिः ॥११८९॥ इत्यैक्यनिंदनाद्ग्रंथेस्पष्टंग्रंथकृतैवहि॥
क्वचिदापाततःप्राप्तंनैक्यंवाक्यार्थइष्यते ॥ ११९० ॥ अविरुद्धेतुवाक्यार्थेयथाश्रुतपरि
ग्रहः ॥ विरुद्धेसतिवाक्यार्थेवृत्तिवृत्त्यंतरेसतां ॥ ११९१ ॥ एवंचभवदद्वैतभिक्षूराक्षस
मंदिरे ॥ भैक्षार्थमागमत्तेषांनाशेचानशनोपतत् ॥ ११९२ ॥ ॥ ॥

कस्तर्हिवाक्यार्थइत्यतआह ॥ अविरुद्धइति ॥ अनेनद्वासुपर्णेत्यादिभेदश्रुतीनांप्रतीतार्थएवग्राह्यइतिचसूचयति ॥ ११९१ ॥
भागवतेगीतायांचसर्वत्रैक्यस्यासुरपक्षत्वश्रवणादैक्यमपहसति ॥ एवंचेति ॥ ११९२ ॥ इदानींद्वासुपर्णेतिश्रुतेस्सविस्तरम



र्थमाह ॥ सुपर्णाविति ॥ तयोरन्यइत्यत्रसाकांक्षान्यपदस्ययोग्यतयाशेषपूरणंब्रह्मणइति । अनश्नन्नन्यइत्यत्रचजीवादिति ।
चाकशीति अतिशयेनप्रकाशते ॥ ११९३ ॥ ११९४ ॥ ११९५ ॥ ११९६ ॥ अन्यावकाशशून्यत्वमेवविशदयति ॥ यस्मादि

सुपर्णौद्वौसहयुजौसखायौदेहपिप्पलं ॥ ब्रह्मजीवाभिधौनित्यंसस्वजातेपरावरौ ॥ ११९३ ॥
तयोर्मध्येब्रह्मणोन्योयस्तुजीवाभिधःखगः ॥ सपुण्यपापकर्मोत्थंफलमत्तिसुखासुखं ॥११९४॥
जीवादन्यस्तुयःपक्षीपरमात्माभिधोमहान्॥सोनश्नन्नभितोनित्यंचाकशीतिमहाप्रभुः॥११९५॥
इतिश्रुतिस्तयोर्भेदंस्पष्टमाहसयुक्तिकं ॥ अन्यावकाशशून्यासामान्याकेननवादिना ॥११९६॥
यस्माज्जीवेशयोर्भेदव्याप्यद्वित्वाख्ययुक्तितः ॥ प्राक्प्रसाध्यभिदांपश्चादशनानशनाख्यया ॥
विरुद्धधर्मयुक्त्याचबलीयस्यात्तयोर्भिदां ॥११९७॥ पुनःप्रसाध्यपश्चाच्चश्रुतिस्स्पष्टंद्विधर्मिणीं ॥
अन्योसावयमन्यश्चेत्याहजीवेशयोर्भिदां ॥११९८॥ तस्माद्द्विरूपयायुक्त्याश्रुत्याचोभयरूपया॥
साधयंतीतयोर्भेदंकेनमान्यानवादिना ॥ ११९९ ॥ अभ्यासश्चोपपत्तीचतात्पर्यद्योतकंत्रयं ॥
लिंगंयतोस्तितत्स्वार्थान्नैवचाल्याकथंचन ॥ १२०० ॥ ॥ ॥ ॥

त्यादिना ॥ जीवेशयोर्भिदामितिसंबंधः । तयोर्जीवेशयोः । तयोरन्यइत्यत्रब्रह्मप्रतियोगिकजीवधर्मिकभेदकथनात् अनश्नन्नन्य
इत्यत्रचजीवप्रतियोगिकेश्वरधर्मिकभेदकथनात्द्विधर्मिणीमित्युक्तं ॥ ११९७ ॥ ११९८ ॥ ११९९ ॥ अन्यः अन्यइत्येकप्रका

रासकृदुक्तिरूपोभ्यासः । तत्तस्मात् तात्पर्यद्योतकलिंगत्रयवत्त्वात् ॥१२००॥ तयाभेदश्रुत्याविरुद्धा तद्विरुद्धा । सावकाशनिरवकाशयोर्मध्येनिरवकाशंबलीयइतिन्यायादितिभावः ॥१२०१॥ गुहांप्रविष्टावात्मानौहितद्दर्शनादितिब्रह्मसूत्राधिकरणेकर्मफलभोक्तारौहृदयगुहाप्रविष्टौबुद्धिजीवावितिकापिलमतंपूर्वपक्षीकृत्य जीवात्मपरमात्मानावेवेतिमायिभिरेवसिद्धांतितत्वात्जीवपरमावेवेमौसुपर्णौनान्यावित्याह ॥ द्वौबुद्धिजीवावित्यादिना ॥ १२०२ ॥ तत्तस्मा द्बुद्धिजीवपक्षस्यत्वयैवदूषितत्वात् । तयोर्जीवे

तद्विरुद्धासावकाशाश्रुतिरैक्यंकथंवदेत् ॥ प्रबलायाविरोधेनदुर्बलार्थांतरंभजेत्
॥ १२०१ ॥ द्वौबुद्धिजीवावित्याहुस्सांख्यास्त्वत्पूर्वपक्षिणः ॥ त्वंतुजीवपरात्मानौ
द्वौहृदीतिप्रसाधयन् ॥ १२०२ ॥ तज्जीवपरमात्मानौखगौतवममापिच ॥ तद्भे
दबोधिकासेयंश्रुतिरित्यपिसंमतं ॥ १२०३ ॥ ॥ ॥

शयोर्भेदबोधिका । व्यावहारिकभेदपरेयंश्रुतिरितिवदतापरेणापिभेदप्रतिपादकत्वस्यांगीकृतत्वादितिभावः । उपलक्षणंचैतत् । आत्मानंपरमात्मानं आत्मानंचेत्येतच्छ्रुतेर्निरुक्तौ जीवात्मपरमात्मनोरेवस्पष्टंकथनाच्चेत्यपिद्रष्टव्यं । किंचपररीत्याभेदवाक्यस्यास्यबुद्धिजीवविषयतांकुर्वता स्वरीत्यैवसर्वाण्यप्यैक्यवाक्यानिजहदजहल्लक्षणयाब्रह्मविशेषणीभूताविद्याख्योपादानस्यजीवविशेषणीभूतदेहांतःकरणाद्युपादेयस्यचैक्यपराणिकुतोनक्रियंते । नागृहीतविशेषणान्यायेनापिविशेषणैक्यस्यास्यन्याय्यत्वात् । मया

पिजगत्स्रष्टुर्ब्रह्मणःकरस्थप्रकृतेर्दंडवद्विशेषणतावक्तुंशक्यतएव । उपादानोपादेययोरभेदश्चावयोस्संमतएव । उभयोरपिजडतया अविरुद्धेअबाधितेउभयवादिसंप्रतिपन्नेचास्मिन्नैक्येसतिकिमर्थमनीदृशमैक्यंपरिकल्प्यते । एवंचतवाभिलषितमैक्यंवाक्याभावा त्प्रमाणांतरस्यसुतरामभावात्वेदारण्यकंविहायारण्यमेवगच्छेत् । भेदस्तूक्तरीत्यास्वविरोधिप्रमाणस्यनिर्मूलितत्वेनद्वासुपर्णेतिश्रु तावेवलब्धावसरो भिन्नोचिंत्यःपरमोजीवसंघादित्यादिवाक्यशतानुगृहीतोवेदारण्यकएवसुखंनिवसेत् । सार्वजनीनप्रत्यक्षानुग तोनगरेवाप्रचरेत् । किंचएकादशेंद्रियपंचभूतात्मकप्रकृतिविकारविशेषस्यदेहतयावृक्षपदेनैवबुद्धेर्गृहीतत्वात्तदालिंगनकर्ताअत्ता अन्यएवभवेत् । नहिस्वयमेवस्वात्मानमालिंगति । किंचबुद्धेर्जडदेहाभिन्नतयाजीवस्यचततोत्यंतविलक्षणतयाकथमुभयोस्समा

सुखदुःखाद्यनुभवोजीवसाक्षीकिलावयोः ॥ बुद्धिस्तुघटपूर्वार्थबुद्धिर्नसुखदुःखधीः ॥ १२०४ ॥

नोयंदेहः । कथंचचेतनासाधारणधर्मस्सख्यंजडाजडयोरुभयोः । अपिचभागवतीयसमाख्यावचने अत्तुस्सुपर्णस्य एकस्यैवममां शस्यजीवस्यैवंमहामतइतिकदाचिन्मुक्तजीवतया अनत्तुश्च विद्यामयोयस्सतुनित्यमुक्तइतिनित्यमुक्तब्रह्मतयास्पष्टंनिरूपणाच्चजी वपरमावेवसुपर्णौ । अपिच भवदाचार्यकृताथर्वणोपनिषद्भाष्यएवाविद्यां शरीरद्वयरूपिणींवृक्षत्वेनपरिकल्प्यतत्त्वंपदार्थौचपक्षि त्वेनास्मान्बोधयितुंमंत्रआह । द्वा द्वौ उभौ सुपर्णा सुपर्णौ सुष्ठुपर्णौपक्षौययोस्तौसुपर्णौ । जीवस्यधर्माधर्मौपक्षौ । ईश्वरस्यावि द्यातत्संबंधावितिनिरूपणात्जीवपरमावेवसुपर्णौ ॥ १२०३ ॥ युक्त्यापिपिप्पलंकर्मफलंसुखदुःखादिकंस्वादुयथाभवतितथाअ

त्तीत्युक्तेअत्ताजीवएवभवेदित्याह ॥ सुखदुःखेति ॥ १२०४ ॥ अतः बुद्धेःसुखदुःखानुभवत्वाभावात् । पिप्पलमत्तीत्यनेनसुखदुःखानुभवएवग्राह्योनघटाद्यनुभवइत्याह ॥ यदीति ॥ यत्यस्मात्देहाख्यवृक्षफलरूपत्वात् । अतोत्ताजीवएवेतिपूर्वेणान्वयः ॥ १२०५ ॥ १२०६ ॥ परकीयमंदाशंकामाशंक्यनिषेधति ॥ सोनश्नन्निति ॥ १२०७ ॥ अस्याशंकायाः ॥ १२०८ ॥

अतोत्ताजीवएवात्रनबुद्धिर्बुद्धिमन्मते ॥ यत्पिप्पलंकर्मफलंसुखदुःखेचतेस्मृते॥१२०५॥
अदनंचतयोस्साक्षादीक्षणंनिजसाक्षिणा ॥ अनश्नन्परमात्मैवयोभितोपिप्रकाशते
॥ १२०६ ॥ सोनश्नन्पारमार्थ्येनसोत्तिचापरमार्थतः ॥ इतिशंकापिशाचींतुहंतियुक्तिनृकेसरी॥१२०७॥यएवात्तिसवानश्नंश्चेतिश्रूयतेयदि ॥ तदोत्थानंभवेदस्यनैवमाहश्रुतिस्सती ॥ १२०८ ॥ अत्त्यन्योयमनश्नंश्चतथान्यइतिसाजगौ ॥ अतस्तच्छ्रुतमन्यत्रजीवेत्वश्रुतमेवहि ॥ अभूदनशनंतेनवदनंमुद्रितंतव ॥ १२०९ ॥ ॥ ॥

साश्रुतिः । अतः अन्योसौ अन्योयमितिविविच्यकथनात् । तत् अनशनं । अन्यत्र परमात्मनि । हीत्यनेनाभिचाकशीतीत्युक्तमभितःप्रकाशमानत्वलिंगं परमात्मनएवप्रसिद्धमितिसूचयति । अतोजीवेत्वश्रुतमेवेत्युक्तं । तेन अनशनस्यजीवेऽश्रुतत्वेन ब्रह्मण्येवश्रुतत्वेनच श्रुतहान्यश्रुतग्रहाख्यदोषद्वयापातेन यद्वातद्वाजल्पतस्तववदनंमुद्रितमितिभावः ॥ १२०९ ॥ दोषांतरंचाह



॥ यदेतमिति ॥ जीवएवश्रुतस्याशनस्ययन्मिथ्यात्वं अपारमार्थ्येनाशनमितिवदतापरेणांगीकृतं यच्चान्यइत्यन्यत्रैवश्रुतस्य । अतएवजीवेअश्रुतस्यचानशनस्य पारमार्थ्येनाशनमितिवदतापरेणांगीकृतं तदितिसंबंधः । वैदिकंमन्यइतिविरोधप्रदर्शनायोक्तं । साक्षाद्वेदोक्तस्यमिथ्यात्वं तदनुक्तस्यचसत्यत्वंवदतोवैदिकत्वस्यविरुद्धत्वात् ॥ १२१० ॥ नचेत् एवमपिस्वोक्तंनमुंचसिचेत् । त्वन्न्यायेन एकस्यपारमार्थ्यं अपरस्यापारमार्थ्यमितिविरुद्धयोरेकत्रघटनाख्यन्यायेन अपरमार्थतोमातृत्वब्राह्मणत्वादिकं परमा

यदेतच्छ्रुतमिथ्यात्वमश्रुतस्यचसत्यता ॥ वदेत्तद्वैदिकंमन्यस्त्वदन्यःकस्सभ्रांतरे ॥ १२१० ॥
नचेच्छंकापिशाचीयंव्याहतिप्रमदाकुलं॥हन्यादन्यायवाक्साचत्वन्न्यायेननकिंशुभा॥१२११॥
किंचानश्नन्नितिपदमशनाभाववाचकं ॥ अश्नन्नित्यशनंवक्तिकथमेकत्रतेवद ॥ १२१२ ॥ भावाभावविरोधस्यनचेच्छांतिर्भविष्यति ॥ ततश्चभावरूपंतेनैवाज्ञानंप्रसिद्ध्यति ॥ १२१३ ॥
अभावाज्ञानवादोहिभावाभावविरोधतः ॥ निवार्यतेत्वयातस्याभावेसौकेनवार्यते ॥१२१४॥

र्थतोवंध्यात्वाब्राह्मणत्वमितिकल्पनयाव्याहतिमात्रोच्छेदप्रसंगः ॥ १२११ ॥ दोषांतरंचाह ॥ किंचेति ॥ ते अनशनाशने ॥ १२१२ ॥ नचेत् अनशनाशने भिन्नभिन्नस्थले नचेत् । अस्तुभावाभावयोर्विरोधशांतिः । तथापिममकाहानिरित्यतआह ॥ ततश्चेति ॥ ततः भावाभावविरोधाभावेन प्रतियोगिज्ञानेसत्येवज्ञानाभावस्यापिवक्तुंशक्यत्वात् । तेमते ॥ १२१३ ॥ भावाभावविरोधतः प्रतियोगिज्ञानस्य तदभावस्यचैकत्रविरोधात् । तस्य भावाभावविरोधस्य भावरूपाज्ञानमतेप्रतियोगिज्ञानेसत्येव

भावरूपंतदज्ञानंवक्तुंशक्यते । भावयोर्विरोधाभावात् । अभावरूपमज्ञानंतुनवक्तुंशक्यं । भावाभावयोरेकत्रविरोधादितिहिपर स्यमतं । तद्गतमितिभावः ॥ १२१४ ॥ अनिष्टांतरंचाह ॥ जगच्चेति ॥ तयोः जगद्भावाभावयोः ॥ १२१५ ॥ अतः पूर्वोक्त बाधकद्वयात् । अभावेनसहस्थित्या स्वात्यंताभावसामानाधिकरण्येनेत्यर्थः । अतः भावाभावविरोधस्यावश्यकत्वात् ॥१२१६॥ एवंचपरस्योभयतःपाशारज्जुरेवेत्याह ॥ विरोधइति ॥ सा मिथ्यात्वाशा ॥ १२१७ ॥ कथमित्यतआह ॥ भावाभावेति ॥

जगच्चब्रह्मणिसदासदेवस्यादखंडितं ॥ तदभावाख्यबाधोपिस्यात्तयोरविरोधतः ॥ १२१५ ॥ भावा भावविरोधोतोवाच्यस्सर्वात्मनात्वया ॥ अभावेनसहस्थित्यामिथ्यात्वाशाप्यतोगता ॥ १२१६ ॥ विरोधेप्यविरोधेपिततस्साघटतेनते ॥१२१७॥ भावाभावविरोधेहिस्वोक्तमिथ्यात्ववाग्गता ॥ स्वा भावेनसहस्थित्यायतोमिथ्यात्वमुच्यते॥१२१८॥ अविरोधेजगत्सत्स्याद्भावाज्ञानंचभर्जितं ॥१२१९॥ तथापिलोकतोभीत्याभावाज्ञानरिरिक्षया ॥ विरोधएवश्लाघ्यस्तेयोयोग्योबुधसंसदि ॥ १२२० ॥

कस्मान्मिथ्यात्ववाग्गतेत्यतआह ॥ स्वाभावेनेति ॥ ततोगतेतिपूर्वेणान्वयः ॥ १२१८ ॥ अविरोधेपिमिथ्यात्वाशागमनप्रका रमाह ॥ अविरोधइति ॥ जगदभावाख्याभावेपिजगतोभावसंभवात्जगत्सत्स्यात् । अतोपिमिथ्यात्वाशागतेतिभावः । रज्ज्वं तरंचाह ॥ भावेति ॥ १२१९ ॥ तथापि पक्षद्वयेदोषप्रसंगेपि । विरोधएव भावाभावविरोधएव ॥ १२२० ॥ अतः भावाभा

वविरोधस्यैवश्लाघ्यत्वात् ॥ १२२१ ॥ दोषांतरंचाह ॥ यथास्थितेति ॥ १२२२ ॥ लाघवात् एकस्यभावस्यैवचाध्याहारेणल
घुत्वादित्यर्थः ॥ १२२३ ॥ तदेवपदंसूचयन्फलितमाह ॥ ततश्चेति ॥ ततः अध्याहारात् । अनेन पारमार्थ्येनेतिपदस्याध्या
हारस्सूचितोभवति । तौ धर्मौ अशनानशनरूपौ । तयोर्धर्मिणोः । उभयत्रापिपारमार्थ्येनेतिपदाध्याहारेद्वयोरपिविरुद्धधर्मयो

अतोधर्मद्वयस्यास्यभिद्येतेधर्मिणावपि ॥ १२२१ ॥ यथास्थितपदस्यार्थायोगेध्याहारइष्य
ते ॥ जीवेशयोर्द्वयोस्सत्त्वादर्थोयुक्ततरोभवत् ॥ अतोध्याहारएवैषदोषाध्याहारएवते
॥ १२२२ ॥ यद्येवमपितेप्रीतिरध्याहारेमहीयसी ॥ तदाध्याहरभावार्थपदमेकंहिलाघ
वात् ॥ १२२३ ॥ ततश्चपारमार्थ्येनतौधर्मौधर्मिणोर्द्वयोः ॥ धर्मभूतौतयोर्भेदंस्थिरीकुरु
तएवहि ॥ १२२४ ॥ मुक्तोपिब्रह्मणासाकंसर्वान्कामान्किलाश्नुते ॥ पारमार्थ्यंतदशने
युक्तंनापरमार्थता ॥१२२५॥ अतोजीवेशयोर्भेदश्श्रुत्यर्थस्सुतरामभूत् ॥ श्रुतेःप्रच्यावनं
तस्माच्छ्रुतप्रच्यावनंतव ॥ १२२६ ॥ ॥ ॥ ॥

स्स्थिरत्वात्भेदस्यापिस्थैर्यमितिभावः ॥१२२४॥ अशनेपराध्याहृतपदस्यदूषणांतरंचाह ॥ मुक्तइति ॥ किलेत्यनेन सोश्नुतेसर्वा
न्कामानितिश्रुतिंसूचयति । तत्तस्मात् अशनस्यमुक्तिकालीनत्वात् ॥१२२५॥ एवंचात्ताजीवएवाभूत् । नतुबुद्धिरित्याह ॥ अत

युक्ति- ॥ १७६ ॥

मल्लिका भेदसौ०

इति ॥ अशनस्यमुक्तिकालीनत्वात्बुद्धेश्वपरमतेमुक्तावभावात्जीवएवात्तेतिजीवेशयोरेवायंश्रुत्युक्तोभेदो नबुद्धिजीवयोरितिभावः । प्रच्यावनं जीवेशयोरन्यत्रापकर्षणं । तस्मा द्बुद्धेरत्तृत्वकथनात् । श्रुतप्रच्यावनं मोक्षपरवेदांतवाक्यश्रवणस्यैवप्रच्यावनं ॥ १२२६ ॥ अतः यथाश्रुतस्यानर्थरूपत्वात् । अध्याहारेप्यनर्थोक्तेः ॥ १२२७ ॥ प्रबलंदोषांतरंचाह ॥कथमिति॥ द्विता द्वावितिद्विवचनमित्यर्थः । एवंकल्पने पारमार्थ्यापारमार्थ्याभ्यांजीवस्यैवाशनानशनेइतिकल्पने । कुतोनघटतइत्यतआह

अतोयथाश्रुतश्रुत्यातवानर्थस्स्थिरोभवत् ॥ अध्याहारेतुसोनर्थोह्यनिवर्त्योभवेत्तव ॥ १२२७ ॥ कथंद्वितैकदैकत्रवृथैवमपिकल्पने ॥ किमेकस्मिन्नपिघटेधर्मद्वित्वाद्वितोच्यते ॥ १२२८ ॥ किंतुरूपरसादीनांबहुत्वेद्वित्वएवच ॥ रसवान्रूपवांश्चैकोघटइत्येवकीर्त्यते ॥ १२२९ ॥ नचेत्सौंदर्यधैर्याभ्यांभार्येद्वेभवतस्तव ॥ अतः पुनर्विवाहार्थमपुत्रस्यवृथाश्रमः ॥ १२३० ॥ ॥ ॥

॥ किमेकस्मिन्निति ॥ रूपरसाख्यधर्मभेदेपिएकस्मिन्घटेद्वावितिप्रयोगादर्शनात्यथाकथंचित्जीवस्यैवग्रहणेद्विवचनायोगात् । नहिदंडकुंडलभेदेप्येकस्मिन्नेवदेवदत्तेद्वाविमौदंडकुंडलिनावितिप्रयोगोपिदृश्यतइतिभावः ॥ १२२८ ॥ कथंतर्हिप्रयोगइत्यतआह ॥ किंत्विति ॥ १२२९ ॥ विपक्षेबाधकंवदन्परपक्षमपहसति ॥ नचेदिति ॥ नचेत् धर्मद्वित्वेप्येकस्यैकतानचेत् । द्वेभ

॥ ३९५ ॥

वतः एकैवभार्याद्वेभवतइत्यर्थः ॥ १२३० ॥ आत्मानमन्यंचसवेदविद्वानपिप्पलादोनतुपिप्पलादः । योऽविद्ययांधस्सतुनित्यबद्धोविद्यामयोयस्सतुनित्यमुक्तइत्येतच्छ्रुतिसमाख्यारूपभागवतवचनाल्लब्धमर्थमाह॥ विद्यामयइत्यादिना॥ अत्ति अनश्नन्नित्यनेना विद्यामयत्वंबद्धत्वंजीवस्य विद्यामयत्वंनित्यमुक्तत्वंचभगवतस्सूचितं । तदेवस्मृत्यास्पष्टीकृतमितिज्ञातव्यं । अनुमा जीवे

विद्यामयोनित्यमुक्तोवेदात्मानंकिलप्रभुः ॥ पिप्पलादंस्वतोन्यंसवेदाविद्यांधचक्षुषं ॥ १२३१ ॥ इतिभागवतोक्तिस्सायतोवक्तिततोनुमा ॥ विमतोजीवपरयोर्भेदोयंपरमार्थसत् ॥१२३२॥ संसारोन्मुक्तचैतन्योल्लेख्यत्वान्मौक्तसौख्यवत् ॥ इतिजीवब्रह्मभेदंसाधयत्यागमानुगा ॥ १२३३ ॥ तर्कंचकर्कशंसावाग्वैलक्षण्यमलक्षयत् ॥ यत्रत्वस्येतिवाक्यस्याप्यापातार्थमपाकरोत् ॥ १२३४ ॥ तस्माद्द्वित्वाख्ययुक्तेश्च भोगाभोगाख्ययुक्तितः॥अन्यत्वश्रुतितश्चाभूदन्योन्याभाववागियं ॥ १२३५ ॥

शयोःपारमार्थिकभेदानुमा । आगमानुगाअनुमतेतिसंबंधः ॥ १२३१ ॥ १२३२ ॥ १२३३ ॥ वैलक्षण्यं अत्तृत्वानत्तृत्वाविद्याधत्वविद्यामयत्वबद्धत्वमुक्तत्वाख्यविरुद्धलक्षणभरितत्वं । आपातार्थः सर्वथाज्ञानशून्यत्वार्थः । आत्मानमन्यंचसवेदेतिमुक्तस्य स्वपरज्ञानकथनात् । विज्ञातारमरेकेनविजानीयादित्यादिश्रुतेःस्वपरज्ञानाभावोनार्थइतिसिद्धमितिभावः ॥१२३४॥ १२३५ ॥

स्थानभेदेनमतिभेदेनवाजीवेश्वरयोर्भेदोक्तिरियमस्तु । स्वरूपभेदःकिमर्थंवाच्यइतिशंकायामत्यैक्यस्थानैक्यप्रतिपादकपदाभ्यां निवारितत्वात्स्वरूपभेदपरैवेयंश्रुतिरित्याह ॥ नकेवलमिति ॥ १२३६ ॥ सुपर्णपदस्यचेतनवाचकत्वात्बुद्धिजीवाविमाविति शंकापिश्रुत्यैवनिराकृत्येत्याह ॥ तौचेतनाविति ॥ घटपटयोर्भेदइवनजीवेश्वरयोर्भेदमात्रमत्राभिप्रेतं किंतुहरेःप्रभुत्वंचाभिप्रेतमित्याह ॥ स्वतइति ॥ अशनादिकमनपेक्ष्यस्वाभाविकसामर्थ्येनेत्यर्थः । उपलक्षणंचैतत् । समाख्यास्मृतौविद्यामयत्वनित्य

नकेवलंस्थानबुद्धिभेदमात्रेणभिन्नता॥ किंतुस्वरूपभेदोयमितिसाधयितुंश्रुतिः॥
सखायौसयुजौचेतिपदद्वयमुदाहरत् ॥ १२३६॥ तौचेतनौस्थिरीकर्तुंसुपर्णाविल्य
रूरुपत् ॥ स्वतोभिकाशनोक्त्यातत्रैकमकरोत्प्रभुं ॥१२३७॥ यदिमौद्वौचसंयो
गात्सयुजावितिशब्दितौ ॥ अतोंतेयद्धिसायुज्यंतच्चयोगात्मकंजगौ ॥१२३८॥
अतश्शंकापिशाचीःसाश्रुतिरेवन्यवारयत् ॥ १२३९ ॥ ॥ ॥

मुक्तत्वकथनाच्चेत्यपिद्रष्टव्यं ॥ १२३७ ॥ एकदेहेउभयोःप्रविष्टत्वेनसयुजाविातिसायुज्यवाचकपदप्रयोगात्मुक्तावपिसायुज्यमीदृशमेव नस्वरूपैक्यमितिलब्धमित्याह ॥ यदिमाविति ॥ योगात्मकं परस्परसंयोगात्मकं ॥ १२३८ ॥ अतः समाख्यासमेतत्वात् हेतुगर्भविशेषणभरितत्वाच्च । शंकापिशाचीः मुक्तौज्ञानाभावव्यावहारिकभेदपरत्वादिशंकापिशाचीः ॥ १२३९ ॥ एकं

अनशनं भावि। एकंअशनंचभवद्वर्तमानं । लड्द्वयं अनश्नन्निति शात्रंतपदस्यापिलडर्थत्वात् लड्द्वयमित्युक्तं । सोश्नुतइतिमुक्तस्याप्यत्तृतोक्तेश्चएकंवर्तमानमित्याशानिरस्ता । तेनपरस्यशंकामात्रस्यानवकाशान्नैराश्यमेवसुखं । नैराश्यंपरमंसुखमितिभागवतवाक्यमपिमायिनांपरिहासार्थमेवप्रवृत्तमितिध्वनिंसूचयितुंतदेववाक्यमुदाहृतं ॥ १२४० ॥ भाव्यनशनमपेक्ष्येदानीमनश्नन्नितिप्रयोगोनोचितइत्यत्रदृष्टांतमाह ॥ स्यादिति ॥ १२४१ ॥ अपिचास्यवाक्यस्यबुद्धिजीवविषयत्वकल्पन मवस्थाभेदेनजीवमात्र

एकंभाविभवच्चैकमित्याशांहंतिलड्द्वयं ॥ मुक्तस्याप्यवृतोक्तेश्चनैराश्यंपरमंसुखं ॥ १२४० ॥
स्याद्रक्तिमेतिश्यामत्वदशायामपिकिंघटः ॥ रक्तइत्युच्यतेसद्भिस्ततोप्येतदपार्थकं ॥ १२४१ ॥
किंचैक्यवाक्यप्राबल्येवृथैवंक्लिष्टकल्पना ॥ श्रौतस्यैवात्मभेदस्यतद्बलाद्बाधसंभवात् ॥ १२४२ ॥
दौर्बल्येचैक्यवाक्यस्यवृथैवंक्लिष्टकल्पना ॥ ऋजोर्यथाश्रुतार्थस्यत्यागेहेतोरभावतः ॥ १२४३ ॥
व्यावहारिकभेदंतेकावावक्तिश्रुतिस्तयोः ॥ वाक्यस्यास्यकुसृष्ट्यैवम(न्यार्थी)न्यथाकरणेवद ॥ १२४४ ॥

विषयत्वकल्पनंचप्रकारद्वयेनापिमायावादिनांव्यर्थमित्याह ॥ किंचेति ॥ ऐक्यवाक्यस्यप्राबल्येसाक्षाज्जीवेश्वरभेदपरत्वेप्यस्याश्श्रुतेर्बाधितुंशक्यत्वात्क्लिष्टकल्पनाव्यर्था ॥ १२४२ ॥ ऐक्यश्रुतेर्दौर्बल्येबाधकाभावेनयथाश्रुतार्थस्यैवांगीकर्तुंशक्यत्वात्क्लिष्टकल्पनावैयर्थ्यमेवेतिभावः ॥ १२४३ ॥ क्लिष्टकल्पनायांबाधकांतरंचाह ॥ व्यावहारिकेति ॥ तयोर्जीवपरमयोः । अस्याश्श्रु

तेर्बुद्धिजीवपरत्वेयथाकथंचिज्जीवमात्रपरत्वेचांगीकृतेस्वग्रंथेऽस्याश्श्रुतेर्व्यावहारिकजीवेश्वरभेदपरत्वांगीकारविरोधश्चेतिभावः ॥ १२४४ ॥ पुनरपिविरोधद्वयमाह ॥ सिद्धेति ॥ वादाभावेऽनुवादायोगात् श्रुतौसवथाजीवेश्वरभेदाकथनेउपासनार्थंभेदोक्तिरितिपरिहारायोगाच्चेतिभावः ॥ १२४५ ॥ अमृतमथनकथयाचभगवतएवानशनं जीवदेहेष्वाविष्टतयापृथगेववर्तनंचसंभावि

> सिद्धभेदानुवादश्चकस्मिन्वाक्येप्रकथ्यते ॥ भेदोपास्तेश्चकिंमूलमतश्चायंवृथाश्रमः ॥ १२४५ ॥ परप्रयोजनार्थंहिपरमात्माप्रवर्तते ॥ सुरांसुधांचदुस्साध्यांकिंसंसाध्यस्वयंपपौ ॥ असुरांश्चसुरांश्चैवयथायोग्यमपाययत् ॥ १२४६ ॥ सहिसर्वंजगदिदंव्याप्यनारायणस्स्थितः ॥ तत्रैवदेवदैत्यादिष्वावेशस्यप्रकीर्तनात् ॥ १२४७ ॥ सोनश्नन्देहिनांदेहेष्वश्नंश्चान्यस्तथैवहि ॥ प्रेरकप्रेर्यरूपौतौकथंनद्वौतनौतनौ ॥ १२४८ ॥ ईश्वरस्सर्वभूतानांहृद्देशेऽर्जुनतिष्ठति ॥ भ्रामयन्सर्वभूतानियंत्रारूढानिमायया ॥ १२४९ ॥ ॥

तमित्याह ॥ परप्रयोजनेति ॥ १२४६ ॥ तत्रैवअमृतमथनएव । तथाऽसुरानाविशदासुरेणरूपेणतेषांबलवीर्यमीरयन् । उद्दीपयन्देवगणांश्चविष्णुर्दैवेननागेंद्रमथापरेणेतिश्लोकेनकीर्तनात् व्याप्यनारायणस्स्थितइतिसंबंधः । अंतर्बहिश्चतत्सर्वंव्याप्यनारायणस्स्थितइतिश्रुतिंचसूचयितुमेवंसाध्यनिर्देशः ॥ १२४७ ॥ १२४८ ॥ गीतावाक्येनापिहरेर्देहिदेहेषुस्थितिंदुःखाशनहेतुभूतकर्माभावेनकर्मफलस्पृहाभावेनअनशनंचसंभावयति ॥ ईश्वरइत्यादिना ॥ १२४९ ॥ १२५० ॥ हरेर्दुःखमूलपापलेपाभावेयुक्तिंवदन्श्रुतेश्चसूचनायश्रौतपदेनफलितमाह ॥ अंतइति ॥ अनेन नकर्मणालिप्यतेपापकेन नकर्मणावर्धतेनोकनीयानितिश्रुतिद्वयंसूचयति ॥ १२५१ ॥ उक्तार्थेस्मृतिंचसूचयति ॥ योसक्तइति ॥ अनेन द्रष्टुर्नदृश्यस्यगुणैर्विषज्यतेतस्मैनमोसक्तविविक्तसा



> नमांकर्माणिलिंपंतिनमेकर्मफलेस्पृहा ॥ इतिगीतासुहरिणागीतांगाधामनुस्मर ॥ १२५० ॥
> अंतेसंहृत्ययोनेकान्विप्रर्षिविबुधादिकान् ॥ नलिप्यतेपापकेनकनीयान्नसकर्मणा ॥ १२५१ ॥
> योसक्तस्सन्विविक्तश्चसाक्षीकिलनृणांहृदि ॥ सपापमूलदुःखानिनैवभुङ्क्तइतिस्मृतेः ॥ १२५२ ॥
> श्रुतेश्चयुक्तितश्चेशस्सिद्धोविद्वज्जनप्रियः ॥ यश्चस्वकृतपापौघैर्नरकाननुगच्छति ॥ १२५३ ॥
> आधिनाव्याधिनादेहेप्यनीशःक्लेशभाक्सदा ॥ उभावश्नदनश्नंतौकथंनेमौतनौतनौ ॥ १२५४ ॥
> उद्गतेसतिजीवाख्यचैतन्यांशेकलेबरात् ॥ देहव्यापितदाप्यन्यचैतन्यंकिलतेमते ॥ १२५५ ॥

क्षिणेइतिभागवतवाक्यंगृह्णाति । उत्तरार्धेनच नवैसआत्मात्मवतामधीश्वरोभुङ्क्तेहिदुःखंभगवान्वासुदेवइतिवाक्यंगृह्णाति । स्मृतेः गीताभागवतरूपस्मृतेः श्रुतेः प्राक्सूचितायाः युक्तितः प्रागुक्तयुक्तेः । सिद्धः अनश्नन्सिद्धः । श्रुतिस्मृत्युक्तजीवस्वभावदर्शनेसतिअत्ताचजीवएवेत्याह ॥ यश्चेति ॥ इमौजीवपरमौ ॥ १२५२ ॥ १२५३ ॥ १२५४ ॥ पररीत्यापिजीवदेहेचैतन्यद्व

यंसाधयति ॥ उद्धृतइति ॥ १२५५ ॥ नचेत् चैतन्यांशोनचेत् । तदधिष्ठानं ॥ १२५६ ॥ तत्तस्मात् अश्नदश्नतोश्चिदंश योरावश्यकत्वात् ॥ १२५७ ॥ एवंजीवेशयोरेवैतच्छ्रुतिप्रतिपाद्यत्वंसंसाध्यश्रौतपदमहिम्नाइयमेवश्रुतिस्सकलमाध्वराद्धांतरह स्यसाधिकेत्याह ॥ श्रावयंतीति ॥ द्वयो र्जीवेशयोर्भिदामितिसंबंधः । तस्याःभिदायाः । आदिपदेनौपाधिकत्वादिकंगृह्यते । कपोलक्लृप्तं स्वकपोलक्लृप्तं ।अश्रौतं श्रुतौकुत्राप्यनुदितं। इदंचधिक्कारेहेतुगर्भविशेषणद्वयं । जीवेश्वरभेदव्यावहारिकत्वादेश्श्रुतौ कुत्राप्यप्रतिपादितत्वात् केवलंस्वकपोलकल्पनामात्रस्यविदुषांसंसदिउपन्यासानर्हत्वादितिभावः । विशेषणैः सयुजौसखायौस

नचेदनारोपितोसौदेहस्स्यात्पतितोभुवि ॥ नाधिष्ठानंविनाध्यासोनचैतन्यंविनाचतत् ॥ १२५६ ॥
एवंचाश्नदनश्नंतौचिदंशौद्वौयतोबलात् ॥ तच्छ्रुतिस्तत्परैवास्तुकिमर्थाक्लिष्टकल्पना ॥ १२५७ ॥
श्रावयंतीभिदांतस्याव्यावहारिकतादिकं ॥ कपोलक्लृप्तमश्रौतंधिक्कृत्यैवश्रुतिर्द्वयोः ॥ १२५८ ॥ ॥

मानंवृक्षंपरिषस्वजाते । अनश्नन्नन्योअभिचाकशीतीतिविशेषणैः । क्रियापदस्यापिविशेष्यगुणप्रतिपादकत्वेन विशिनष्टिविशेष्य मितिव्युत्पत्त्याविशेषणत्वमस्त्येवेतिभावः । सायुज्यसख्यसादृश्यस्वातंत्र्यादि प्रबोध्येतिसंबंधः । आदिपदेन नित्यमुक्तत्वादि कंगृह्यते । अभितस्सर्वतइतिव्युत्पत्त्याव्याप्त्यर्थकाभीत्युपसर्गेणव्याप्तिंचप्रबोध्य ऐक्यगिरांगतिं भगवतस्सगुणत्वंचसंसाध्य । ऐक्यवाक्यानां स्थानैक्यमत्यैक्यसादृश्यैक्यव्याप्त्यैक्यपरत्वाख्यगतेः श्रौतपदमहिम्नाप्रदर्शितत्वात् सकलजीवदेहगतत्वसखि

त्वादिभगवद्गुणानामपिप्रदर्शितत्वादितिभावः । लिटा सस्वजातेइतिदेहालिंगनस्यातीतत्वप्रतिपादकलिटा । मिथ्याश्रुतेः मिथ्या त्वप्रतिपादकश्रुतेः । गतिं अनित्यत्वेनैवमिथ्यात्वोक्तिरितिगतिं । लटा अत्तिअनश्नन्निितिअशनादीनांवर्तमानत्वप्रतिपादकलटा तद्बाधकं त्रिकालासत्त्वरूपमिथ्यात्वबाधकं माध्वराद्धांतंउद्दधे । उक्तविधयाभेदजगत्सत्यत्वसगुणत्वानांसाधनात् अभेदमिथ्या त्वनिर्गुणत्वानांबाधनाच्चइयमेकैवश्रुतिः सकलमध्वमतरहस्यसाधिकेतिभावः ॥ १२५८ ॥ १२५९ ॥ १२६० ॥ स्वकपोलक

सायुज्यसख्यसादृश्यस्वातंत्र्यादिविशेषणैः ॥ उपसर्गेणचव्याप्तिंप्रबोध्यैक्यगिरांगतिं ॥ १२५९ ॥
सगुणत्वंचसंसाध्यलिटामिथ्याश्रुतेर्गतिं ॥ लटातद्बाधकंचोक्त्वामाध्वराद्धांतमुद्दधे ॥१२६०॥ व्या
वहारिकभेदस्यसाधिकाभेदवाग्यदि ॥ तवैक्यवाक्यंकिंनस्यात्तादृगर्थपरंतदा ॥ १२६१ ॥ नचेत्प्र
त्यक्षसाहित्यबाधाभ्यांकिंविधीयतां ॥ मृतस्यप्रेतकर्मस्याज्जीवतस्तुकथंवद ॥ १२६२ ॥ ॥

ल्पनामात्रमूलत्वेनपरिहृतामपिश्रुतेर्व्यावहारिकभेदपरत्वशंकां ऐक्यप्रतिबंद्याचपरिहरति ॥ व्यावहारिकेति ॥ तादृगर्थपरं व्यावहारिकैक्यपरं ॥ १२६१ ॥ ऐक्यस्यैवव्यावहारिकत्वमुचितमित्याह ॥ नचेदिति ॥ नचेत् ऐक्यस्यैवव्यावहारिकत्वंनचे त् । प्रत्यक्षस्यसाहित्यंबाधश्च ताभ्यांप्रत्यक्षबाधादैक्यस्यैवव्यावहारिकत्वमुचितं नतुभेदस्य । तस्यश्रुतिप्रत्यक्षाख्यप्रमाणद्वय सिद्धस्यपारमार्थ्यमेवोचितमितिभावः । तत्रदृष्टांतमाह ॥ मृतस्येति ॥ प्रत्यक्षबाधितत्वादैक्यंमृतं तत्साधितत्वाद्भेदोजीवन्नि

तिभावः ॥ १२६२ ॥ ननुभेदस्यब्रह्मप्रमान्याबाध्यत्वेसतिब्रह्मप्रमैकबाध्यत्वाद्व्यावहारिकत्वमुचितं । ऐक्यस्यतुब्रह्मप्रमायामप्य
बाध्यस्यकथंव्यावहारिकत्वमितिचेत् । न । यदापश्यःपश्यतेरुग्मवर्णंकर्तारमीशंपुरुषंब्रह्मयोनिमितिश्रुतौकर्तृतयाईशतयाचब्र
ह्मणोदर्शनोक्तेः कार्यभूतादनीशाच्चजीवाद्ब्रह्मणिभेदस्यैवप्रतीयमानत्वेनतस्यबाधाभावात् । प्रत्युतएतादृशदर्शनेऐक्यस्यैवबाध
दर्शनाच्च । पररीत्यैवदूषणांतरंचाह ॥ यदीति ॥ अधुना संसारदशायां ॥ १२६३ ॥ १२६४ ॥ ननुसंसारदशायामेवबाध्य

यदिब्रह्मप्रमामात्रबाध्योभेदस्ततःपुरा ॥ व्यवहारपदंप्राप्तोव्यावहारिकइष्यते ॥ १२६३ ॥
तर्हिनाहंसर्ववेत्तानसर्वेशोहमित्यपि ॥ प्रत्यक्षबाधादधुनास्यादैक्यंप्रातिभासिकं ॥ १२६४ ॥
ब्रह्मप्रमान्यबाध्यंयत्तद्धितेप्रातिभासिकं ॥ नचेद्रज्जुभुजंगाद्यंकथंस्यात्प्रातिभासिकं॥१२६५॥
रज्जुप्रत्यक्षवद्भेदप्रत्यक्षंकिंनबाधकं ॥ १२६६ ॥ अतोवृश्चिकतोभीत्यापलायनपरस्यते ॥ महो
रगबिलेस्थूलेपातोजातोविचारय ॥ यद्भेदसाम्यतोभीतस्यासीदैक्येतिनीचता ॥ १२६७ ॥

त्वेप्यैक्यस्यकुतःप्रातिभासिकत्वमित्यतआह ॥ ब्रह्मप्रमान्येति ॥ तेमते एतदेवविपक्षेबाधकप्रदर्शनेनोपपादयति ॥ नचेदिति
॥ १२६५ ॥ भेदप्रत्यक्षस्याबाधकत्वशंकामपिप्रतिबंद्यैवपरिहरति ॥ रज्ज्वति ॥ १२६६ ॥ एवंचवृश्चिकभयात्पलायमानस्या
शीविषमुखेनिपातइतिलौकिकाभाणकंत्वमेवानुकरोषीत्याह ॥ अतइति ॥ भेदैक्ययोस्साम्याद्भीतस्यपरस्यस्वाभिमतैक्येप्राति



भासिकत्वाख्यातिनीचदशाप्राप्तेरित्यर्थः ॥ १२६७ ॥ एवंचव्यावहारिकभेदपरात्भेदप्रमाणात्प्रातिभासिकार्थकंतवैक्यप्रमाण
मेवदुर्बलमासीदित्याह ॥ व्यावहारिकेति ॥ १२६८ ॥ व्यावहारिकत्वपक्षेदोषांतरंचाह ॥ व्यावहारिकतायामिति ॥
नचेत् बाधाभावोनचेत्अतिविगर्हितंतवमतमासीदित्यर्थः ॥ १२६९ ॥ कथमित्यतआह ॥ अतत्वेति ॥ यत्यस्मात् । इदं

व्यावहारिकमानंहिप्रातिभासिकमानतः ॥ बलवत्तेमतेतस्मादैक्यंस्याद्धिबहिष्कृतं
॥ १२६८ ॥ व्यावहारिकतायांचबाधाभावोयदीष्यते ॥ सिद्धंसमीहितंतर्हिनचेदतिवि
गर्हितं ॥ १२६९ ॥ अतत्वावेदकत्वास्यायच्छ्रुतेर्मानतागता ॥ इदंचबौद्धराद्धांतवार्धिम
ध्यप्रवेशनं ॥१२७०॥ उभयोर्मानतासिद्ध्यैयोयतेतसवैदिकः ॥ अतोमुख्यामुख्यवृत्त्या
वयंगुप्त्यैयतेमहि ॥ नचेद्भेदघ्नएवासौगवोरेकघ्नगोघ्नवत् ॥१२७१॥ यद्यमानत्वमेकस्यावक्तुं
युक्तंश्रुतावपि ॥ तर्हिमीमांसकाचार्याःपुर्याःकार्यास्त्वयाबहिः ॥१२७२॥ पौरुषेयेषुपुरुष
विप्रलिप्सादिकारणात् ॥ युक्ताद्धिविधताबुद्धायुक्ताविवनसाश्रुतौ ॥ १२७३ ॥ ॥

श्रुतेरमानत्वप्रापणं ॥ १२७० ॥ उभयोर्वैदिकवाक्ययोः । गुप्त्यै वाक्यद्वयरक्षणाय । नचेत् वाक्यद्वयरक्षकोनचेत् । गवोः
गोद्वयस्यमध्ये ॥ १२७१ ॥ श्रुत्योःपरस्परविरोधेएकस्याअप्रामाण्यंवदतोदोषांतरंचाह ॥ यदीति ॥ तर्ह्यविरुद्धार्थकथनरूप
मीमांसावैयर्थ्यमितिभावः ॥ १२७२ ॥ पुराणयोर्मिथोविरोधेएकाप्रामाण्यवदिदमपिकुतोनस्यादित्यतआह ॥पौरुषेयेष्विति॥

युक्ति-
॥१८१॥

आदिपदेन भ्रमप्रमादादिकंगृह्यते । सा द्विविधता ॥ १२७३ ॥ तदेवोपपादयति ॥ विप्रलिप्सेति ॥ यत्यस्मात् । तत् पुरुषाभावात् ॥ १२७४ ॥ ऐक्यश्रुतिबाधात्भेदश्रुतेर्बाधितार्थत्वमितिचेत्तर्ह्यन्योन्याश्रयइत्याह ॥ किंचेति ॥ साभेदश्रुतिः । सा व्यावहारिकवाक् बाधितार्थकवक्चेत् । तच्छ्रुतिः त्वदभिमताश्रुतिः तवश्रुतिः तवापेक्षितैक्यश्रुतिः । ऐक्यश्रुतेःप्राबल्येनबा

विप्रलिप्साप्रमादश्चभ्रमश्चस्याद्धिपुंसुयत् ॥ अपौरुषेयवचनेमुख्यामुख्यार्थतैवतत्
॥ १२७४ ॥ किंचत्वच्छ्रुतिबाधात्साव्यावहारिकवाग्भवेत् ॥ व्यावहारिकवाक्चेत्सात्व
च्छ्रुतिस्स्यात्तवश्रुतिः ॥१२७५॥ व्यावहारिकताचेयंनयुक्तायात्वयोदिता ॥ १२७६ ॥
ब्रह्मज्ञानेतरज्ञानाबाध्यत्वेसतितद्धिया ॥ यद्बाध्यंतस्यभावोहिव्यावहारिकतातव
॥१२७७॥ यतोसत्त्वास्थिरत्वादिब्रह्मणःप्रमयैवहि ॥ ब्रह्मण्यारोपितंबाध्यंतच्चतेप्रातिभा
सिकं ॥१२७८॥ प्रमापदप्रवेशेपिनोक्तदोषप्रतिक्रिया ॥प्रमायथार्थधीरेवंनोचेद्व्यर्थंविशेषणं ॥१२७९॥

धकत्वसिद्धौभेदश्रुतेर्व्यावहारिकार्थपरत्वसिद्धिः । तत्सिद्धौचतत्त्वावेदकतयाऐक्यश्रुतेस्ततोपिप्रबलतयाबाधकत्वसिद्धिरित्यन्योन्याश्रयइतिभावः ॥ १२७५ ॥ व्यावहारिकतामेवविकल्प्यदूषयति ॥ व्यावहारिकतेति ॥ १२७६ ॥ तद्धिया ब्रह्मज्ञानेन ॥ १२७७ ॥ असत्त्वास्थिरत्वादिकं तेमते ॥ १२७८ ॥ प्रमापदप्रवेशे ज्ञानपदस्थानेप्रमापदप्रवेशइत्यर्थः । उक्तदोषः ब्रह्मण्या

मल्लिका
भेदसौ०

रोपितासत्त्वादावतिव्याप्तिः । तस्यप्रतिक्रिया परिहारः । ननुवेदांतजन्यब्रह्मज्ञानमेवप्रमा । इदंतुज्ञानंनप्रमा । अतोनोक्तदोष इत्यतआह ॥ प्रमेति ॥ नोचेत् यथार्थज्ञानंप्रमानोचेत् । निर्विकल्पकज्ञानमेवप्रमाचेदित्यर्थः । ब्रह्मप्रमेतरशुक्तिप्रमयाऽबाध्ये सर्वबाधकतयांगीकृतचरमप्रमयाचाबाध्येशुक्तिरजतादावतिव्याप्तिपरिहारायहितद्विशेषणं । शुक्तिज्ञानादेरप्रमात्वेतस्यापिब्रह्मप्र मान्यप्रमयाऽबाध्यत्वस्यैवसत्त्वेनातिव्याप्तिपरिहारकत्वायोगात्व्यर्थंविशेषणं । मध्येप्रमापदस्यपरित्यागेब्रह्मप्रमान्येनमुद्गरादि नाबाध्येघटादावव्याप्तिः । ननुचाभावमात्रंनबाधः किंत्वत्यंताभावएवेतिचेन्न । तस्यापिस्वतस्सिद्धत्वेनप्रमाप्रयोज्यत्वायोगात् ।

देहात्मैक्यंनभोनैल्यंप्रातिभासिकमेवते ॥ ब्रह्मप्रमान्याबाध्यंचबाध्यंचरमतद्धिया ॥१२८०॥
नियमेनेतरज्ञानाबाध्येतद्बाधयोग्यता ॥ कथंस्यान्नहितत्तस्ययोग्यंयन्नकदाचन ॥ १२८१ ॥
ब्रह्मप्रमान्याबाध्यत्वेसतितज्ज्ञानबाध्यता ॥ कथमुक्तेष्वतिव्याप्त्याव्यावहारिकितावद ॥ १२८२ ॥

तदुल्लेखस्यचतवमतेनिष्प्रकारकप्रमायाअसंभवात् । नचपुनःप्रमानुत्पादोबाधः । जीवन्मुक्तानामपिभिक्षाटनादिभ्रमदर्शनेनपुन रसंभवात् । शुक्तिज्ञानस्याप्रमात्वे बाध्यबाधकभावस्यैवायोगेनब्रह्मप्रमान्याबाध्यत्वस्यशुक्तिरजतादावपिसत्त्वेनपुनर्विशेषणवैय र्थ्यं निर्विकल्पकज्ञानस्यबाधकत्वायोगेनासंभवश्चेत्यपिद्रष्टव्यं ॥ १२७९ ॥ पररीत्यैवस्थलांतरेअतिव्याप्तिमाह ॥ देहात्मैक्य मिति ॥ तेमते । तद्धिया ब्रह्मधिया ॥ १२८० ॥ तद्बाधयोग्यता इतरज्ञानबाधयोग्यता । यत् कदाचन कदापिनभवति ।

तत्तस्ययोग्यंनहीतियोजना । कदापिफलनिष्पत्त्यभावेयवांकुरस्यकलमांकुरजनकत्वयोग्यत्ववत्योग्यतायाएवायोगादितिभावः ॥ १२८१ ॥ १२८२ ॥ उक्तेषुदेहात्मैक्यादिषुव्यावहारिकत्वलक्षणस्यातिव्याप्तिमसंभवंसूचयन्भेदादेरबाध्यतांस्थिरीकरोति ॥ किंचेति ॥ साव्यावहारिकता ॥ १२८३ ॥ १२८४ ॥ निर्विकल्पकस्यसाधकबाधकत्वायोगादितिभावः ॥ १२८५ ॥ अतः

किंचब्रह्मप्रमान्याबाध्यत्वमात्रंनसोचिता ॥ ब्रह्मणोबाध्यतापत्तेस्तत्प्रमाबाध्यतापिच ॥१२८३॥ बाधश्चनास्तिताबोधोनाप्रतीतिस्तुकेवला ॥ असतोबाध्यतापत्तेरपसिद्धांततोपिच ॥१२८४॥ सर्वप्रकारशून्यैवनिर्विकल्पकधीस्तव ॥ ब्रह्मप्रमातयाकस्यसाधनंबाधनंवद ॥१२८५॥ अतोभेदाख्यरत्नस्यजगत्कल्पद्रुमस्यच ॥ पारमार्थिकतापन्नाबाधाभावाद्धिसर्वदा ॥ त्वद्रीत्यैव नमद्रीत्याचित्रातेशास्त्रकर्तृता ॥१२८६॥ निष्प्रकारकधीर्यातेभेदाभेदप्रमानसा ॥ तत्वंकिलतथाप्येकमतत्वमपरंकिल ॥ १२८७ ॥ यदिबाधस्तेननाशस्तदादंडादिनाश्यता ॥ दृष्टाघटादौयत्तस्मान्नस्युस्तेव्यावहारिकाः ॥ १२८८ ॥ ॥

निर्विकल्पकस्यबाधकत्वायोगात् । तेस्ववचनविरोधमजानतस्तव ॥ १२८६ ॥ प्रकारांतरेणापिपरप्रक्रियामपहसि ॥ निष्प्रकारकेति ॥ १२८७ ॥ पक्षांतरमाशंक्यदूषयति ॥ यदीति ॥ तेनज्ञानेन आदिपदेनमुद्गरोगृह्यते । यत्यस्मात् । तेघटादयः



॥ १२८८ ॥ दोषांतरंचाह ॥ उपादानेति ॥ हीत्यनेन ज्ञानमज्ञानस्यैवनाशकमितिपरप्रसिद्धिंसूचयति । तत्तस्मात् अज्ञानोपादानकत्वाभावात् ॥ १२८९ ॥ ज्ञाननाश्यत्वमात्रंव्यावहारिकत्वं ब्रह्मज्ञाननाश्यत्वंवा ब्रह्मज्ञानेतरज्ञाननाश्यत्वेसतिब्रह्मज्ञाननाश्यत्वंवेतिविकल्पंमनसिनिधाय क्रमेणदूषयति ॥ अज्ञानोपादानकेति ॥ अतः प्रातिभासिकेतिव्याप्तेः ॥ १२९० ॥ तत् शुक्तिज्ञानं । तवमते ॥ १२९१ ॥ किंचज्ञानान्नाशेनापिमिथ्यात्वंवदतापरेणाज्ञानकार्यत्वएवभरोदातव्यः । नाशमात्रस्यमिथ्या

उपादानाज्ञाननाशद्वाराज्ञानंहिनाशकं ॥ अनादेरस्यभेदस्यतन्नस्याज्ज्ञाननाश्यता ॥ १२८९ ॥
अज्ञानोपादानकेतेरूप्यादौप्रातिभासिके ॥ अस्त्येवज्ञाननाशत्वमतोप्येतदलक्षणं ॥ १२९० ॥
शुक्त्यवच्छिन्नचिज्ज्ञानंब्रह्मज्ञानंचतत्तव ॥ १२९१॥ ज्ञानान्नाशेपिमिथ्यात्वेहेतुरज्ञानकार्यता ॥
साचास्तिशुक्तिरूप्यादौनास्तिभेदाद्यनादिषु ॥ १२९२ ॥ ब्रह्मज्ञानेतरज्ञाननाश्यत्वस्यप्रवेशने॥
घटादिवृत्तिनाश्येषुतूलाज्ञानेषुलक्षणं ॥ अव्यापकंस्यात्तद्योगेमूलस्यापसृतौभवेत् ॥ १२९३ ॥

त्वासाधकत्वात् । तत्रशुक्तिरजतादावतिव्याप्तं अव्याप्तंचभेदाद्यनित्यपदार्थेष्वित्याह ॥ ज्ञानादिति ॥ १२९२ ॥ तूलाज्ञानेषु घटाद्यवच्छिन्नचैतन्यावरकाज्ञानेषु । लक्षणं व्यावहारिकत्वलक्षणं । अव्यापकं विशेषणाभावात् । तद्योगे अज्ञानयोगे । मूलस्यमूलाज्ञानस्य । ज्ञानात्तूलाज्ञाननाशपक्षेतूलाज्ञानेष्वव्याप्तिः । मूलाज्ञानापसरणपक्षेज्ञाननाश्येतत्संयोगेऽव्याप्तिरित्यर्थः ।

उक्तविशेषणदानेनशुक्तिज्ञाननाश्यरूप्यादावतिव्याप्तिपरिहारेपिघटवृत्तिनाश्येतूलाज्ञाने मूलाज्ञानसंयोगेवाऽव्याप्तिरपरिहार्येति भावः ॥ १२९३ ॥ प्रकारांतरेणसमुदितलक्षणस्यापिस्थलांतरेऽव्याप्तिमाह ॥ किंचेति ॥ आत्माश्रयपरिहारायज्ञाननाश्याज्ञानस्यमध्येप्रवेशेत्रिक्षणावस्थायिज्ञानस्याज्ञाननाशदशायांस्वतएवनाशेनाज्ञाननाशप्रणाश्यापिज्ञाननाश्यत्वाभावेनपुनरव्याप्तिः । अतएवध्रुवेत्युक्तं ॥१२९४॥ एवंचोभयतःपाशारज्जुरित्याह ॥ बाध्यत्वइति ॥ ज्ञानबाध्यत्वइत्यर्थः । नाश्यत्वे ज्ञाननाश्यत्वे।

किंचब्रह्मज्ञाननाश्यंब्रह्मज्ञानंतवापिन ॥ आत्माश्रयादतस्तत्रैवाव्याप्तिरभवद्ध्रु
वा ॥ १२९४ ॥ बाध्यत्वेनिर्विकल्पाधीर्नजगद्धीषयेन्मम ॥ नाश्यत्वेस्वाविनाश्या
धीर्नजगद्धीषयेन्मम ॥ १२९५ ॥ किंचप्रारब्धकर्माणिब्रह्मज्ञानादनंतरं ॥ स्था
यीनिभोगक्षय्याणितेष्वव्याप्तिर्द्विधाप्यभूत् ॥ १२९६ ॥ अर्थक्रियाकारिते
वव्यावहारिकतायदि ॥ शशश्रृंगमभूत्तत्वंपरमार्थतरंतदा ॥ १२९७ ॥ ॥

जगदंतःपातिज्ञानस्यैवोर्वरितत्वादितिभावः ॥ १२९५ ॥ स्थलांतरेविशेषणाभावाद्विशेष्याभावाच्चप्राप्तामव्याप्तिमाह ॥ किंच प्रारब्धेति ॥ भोगक्षय्याणि सुखदुःखानुभवरूपभोगनाश्यानि । तेषु ब्रह्मज्ञानानाश्येषु । ब्रह्मज्ञानेतरसुखदुःखज्ञाननाश्येषु । द्विधा उक्तविधयाप्रकारद्वयेन ॥ १२९६ ॥ प्रकारांतरेणव्यावहारिकत्वलक्षणमनूद्यदूषयति ॥ अर्थक्रियेति ॥ अर्थक्रियाका

रित्वरूपव्यावहारिकत्वशंकाया अप्यभावात्परमार्थतरमित्युक्तं ॥ १२९७ ॥ तवमते । जगतोनिमित्तत्वात् उपादानत्वाद्वाअंततो धिष्ठानतयाजगद्भ्रमहेतुत्वाद्वातवव्यावहारिकत्वलक्षणमिदंब्रह्मण्यतिव्याप्तं । अर्थक्रियाशून्यत्वरूपंपारमार्थिकत्वलक्षणंचशश शृंगेऽतिव्याप्तमितिभावः ॥ १२९८ ॥ मुक्तिदंब्रह्म ॥ १२९९ ॥ प्रातिभासिकेऽतिव्याप्तिमाह ॥ भयेति ॥ इदं अर्थक्रिया कारित्वं ॥ १३०० ॥ अस्य अर्थज्ञानयोरुभयोरप्यध्यासंवदतोमायिनः ॥ १३०१ ॥ किंचअर्थक्रियाकारित्वस्यातत्वापरपर्याय

उपादानंनिमित्तंवाभ्रमाधिष्ठानमेववा ॥ ब्रह्मत्वपरमार्थत्वादुपेक्ष्यमभवत्तव ॥ १२९८ ॥ मुक्ते श्चसाधकोमुक्तोमुक्तिदंचाभवन्मृषा ॥ १२९९ ॥ भयकंपादिहेतुत्वंरज्जुसर्पस्यतेमते ॥ स्वाप्नस्य चास्तितेनेदंव्यावहारिकताकथं ॥ १३०० ॥ प्रातिभासिकएवार्थोज्ञानंचप्रातिभासिकं ॥ इति योवक्तिकिंनास्यप्रातिभासिकमर्थकृत् ॥१३०१॥ अतत्वमभवत्तेऽन्नंतृणंतत्वमभूदहो ॥१३०२॥ समर्थायांप्रवृत्तौतुप्रामाण्यंहीयतेकिल ॥ असमर्थप्रवृत्तौतुप्रामाण्यमुपचीयते ॥ १३०३ ॥ ॥

व्यावहारिकत्वप्रयोजकत्वेतवार्थक्रियाकारिअन्नं रासभस्यैवतत्वं । तस्यतेनार्थाभावात् । तवतुअतत्वमेव । तृप्तिरूपार्थक्रियाका रित्वात् । तत्वंतुतव रासभस्यार्थक्रियाकारितयातस्यातत्वभूतंतृणमेव । ततस्तवार्थाभावादित्यापतितं अतस्त्वमेवपशुत्वयोग्यो सीत्याह ॥ अतत्वमिति ॥ १३०२ ॥ दोषांतरंचाह ॥ समर्थायामिति ॥ अर्थक्रियाकारित्वस्यमिथ्यात्वप्रयोजकत्वेनोक्तेस्त

दभावस्यचपारमार्थ्योपयोगित्वोक्तेरितिभावः । इदंचनविदुषांसंमतमितिज्ञेयं ॥ १३०३ ॥ दोषांतरंचाह ॥ इयमिति ॥ दाय वेदिभिः आदायवेदिभिः । यत्‌यस्मात्‌ भेदस्यार्थक्रियाकारित्वंवदन्‌परस्यभेदवादिनःमोक्षाद्यर्थक्रियावत्त्वेनसार्थक्यमाह । ऐक्य स्यार्थक्रियाकारित्वाभावंवदन्स्वस्यवैयर्थ्यमाह । सःवादी । तत्तस्मात्‌नवार्येतिपूर्वेणान्वयः । एवंवदतस्स्वव्याहतिरितिभावः ॥ १३०४ ॥ किंचैवंवदतोबौद्धमतप्रवेशापत्तिरित्याह ॥ सत्त्वइति ॥ तेन अर्थक्रियाकारित्वाख्यसत्त्वेन यत्सत्तत्क्षणिकमिति

इयंहिशास्त्रमर्यादानवार्यादायवेदिभिः ॥ यत्सार्थक्यंपरस्याहवैयर्थ्यंस्वस्यसस्वयं ॥ १३०४ ॥
सत्त्वमर्थक्रियाकृत्त्वंतेनचक्षणिकंजगत्‌ ॥ योवक्तितेनतेसख्यंमहदासीद्भवांतरे ॥ अर्थक्रिया
कारिसर्वंयस्त्वंमिथ्येतिकत्थसे ॥ १३०५ ॥ एतादृशंचमिथ्यात्वंभेदस्यास्तुसदामम ॥ मुक्ति
चसत्यस्संदध्याद्यएवंव्यावहारिकः ॥ १३०६ ॥ महातत्वंतवैक्यंचनभेदस्यविरोधकृत्‌ ॥ अतो
यमप्रतिद्वंद्वोद्वंद्वंसर्वत्रसाधयेत्‌ ॥ १३०७ ॥ ॥ ॥

वदन्बौद्धः । भवांतरेजन्मांतरे । यस्त्वंकत्थसे । तस्यतवतेनसख्यमासीदितिपूर्वेणान्वयः । इदंतवमतंबौद्धमतंचैकप्रकारमेवाभूदि तिभावः ॥ १३०५ ॥ एतादृशंचव्यावहारिकत्वंत्वदभिलषितबाध्यत्वविरोधितयाऽस्मदभिमतसत्त्वसंपादकतयाचनानिष्टमित्या ह ॥ एतादृशमिति ॥ यः व्यावहारिकोभेदः ॥ १३०६ ॥ प्रकारांतरेणापिममैवानुकूलमभूदित्याह ॥ महातत्वमिति ॥



तत्वस्यत्वयाऽर्थक्रियाकारित्वानंगीकारादितिभावः । अतः ऐक्यस्याकिंचित्करत्वात्‌ । अयंभेदः । द्वंद्वं द्वितां । सर्वत्र जीवेश्व रजडेषु ॥ १३०७ ॥ पक्षांतरमप्यनूद्यदूषयति ॥ नापीति ॥ अनादौभेदइतिसंबंधः । पूर्ववदव्याप्तत्वादतिव्याप्तत्वाच्चेतिभा वः ॥ १३०८ ॥ लोकप्रसिद्धव्यवहारयोग्यत्वंचव्यावहारिकत्वंनेत्याह ॥ नहीति ॥ सा व्यावहारिकता ॥ १३०९ ॥ कुतइ

नाप्यविद्याकार्यतातेव्यावहारिकतोचिता ॥ अविद्यायामभावेनभेदेऽनादावभावतः ॥ सत्त्वा
च्चरज्जुसर्पादिप्रातिभासिकराशिषु ॥ १३०८ ॥ नहिहानमुपादानमभिलापोपिवातव ॥ व्यव
हारोमतस्तस्मात्तदर्हत्वंचसानते ॥ १३०९ ॥ याब्रह्मण्यभिलापार्हेसदादेयेमुमुक्षुभिः ॥ हेये
चशुक्तिरूप्यादौजगतीवप्रदृश्यते ॥१३१०॥ उभयत्रह्यतिव्याप्ताकथंमध्यस्यसादृशा ॥१३११॥
व्यावहारिकतोक्तिस्तद्व्यवहारज्ञसंसदि ॥ नभाति प्रांकणकथानहिभातिरणांकणे ॥१३१२॥
प्रत्यक्षश्रुतियुक्तीनांविरोधादैक्यमेवते॥ स्याद्व्यावहारिकं सिंहदेवदत्तादिकैक्यवत्‌ ॥१३१३॥

त्यतआह ॥ याब्रह्मणीति ॥ आदेये उपादेये ॥ १३१० ॥ उभयत्र पारमार्थिकेप्रातिभासिकेच । सा लोकसिद्धव्यवहारार्ह ता । मध्यस्य तयोर्मध्यपतितस्यजगतःकथंदशेतिसंबंधः ॥ १३११ ॥ व्यावहारिकत्वखंडनमुपसंहरति ॥ व्यावहारिकतो क्तिरिति ॥ त न्निर्वंकुमशक्यत्वात्‌ । तत्रदृष्टांतमाह ॥ प्रांकणेति॥१३१२॥ प्रमाणांतरसंवादवतोभेदस्यनव्यावहारिकत्वं किंतु

तद्विरुद्धैक्यस्यैवतदुचितमित्याह ॥ प्रत्यक्षेति ॥ प्रकारांतरेणापिव्यावहारिकतामाह ॥ सिंहेति ॥ नचे ल्लोकसिद्धरीत्याव्या वहारिकैक्यंनोच्यतेचेत् । तदैक्यं ॥ १३१३ ॥ १३१४ ॥ १३१५ ॥ तत्तस्मात् प्रमाणत्रयसिद्धत्वेनव्यावहारिकत्वानर्हत्वात् । उद्धतेः निरासात् । त्रिधा श्रुत्यादिप्रमाणसिद्धत्वात्श्रुतेर्मतिभेदाद्यर्थांतरेनेतुमशक्यत्वात् विरोध्यैक्यस्याप्रामाणिकत्वेननिरा

साद्दश्यैक्यपरत्वेस्यादेववाव्यावहारिकं ॥ नचेत्पूर्वोक्तमार्गेणस्यात्तद्धिप्रातिभासिकं ॥१३१४॥
भेदस्तुश्रुतियुक्तिभ्यांप्रत्यक्षेणचसाधितः॥ ब्रह्मवत्पारमार्थ्यार्हःकथंस्याद्व्यावहारिकः ॥१३१५॥
भेदस्तन्मतिभेदादेर्विरोध्यैक्यस्यचोद्धृतेः ॥ त्रिधापिपरमार्थोभूद्योत्युच्चब्रह्मधर्मिकः ॥१३१६॥
एवमाविद्यकंभेदमथवौपाधिकंवदन् ॥ प्रष्टव्योयद्यविद्याद्यैःकृतत्वंतस्यकीर्त्यते ॥ १३१७ ॥
तदातवापसिद्धांतष्षडस्माकमनादयः ॥ इत्याहुःकिलतेपूर्वेतस्माज्जीवेशयोर्भिदा ॥ अना
दिस्तेततस्तस्याःकृतत्वोक्तिरविद्यया ॥ १३१८ ॥ ॥ ॥

साच्च । योभेदइतिसंबंधः ॥ १३१६ ॥ भेदस्याविद्यकत्वमौपाधिकत्वंचयत्परोवक्ति तदपिकिमविद्यादिनाकृतत्वं ज्ञापितत्वं अविद्यमानस्यज्ञापितत्वं संबंधमात्रं अविद्यानाशनाश्यत्वंवे तिविकल्पंमनसिनिधायक्रमेणदूषयति ॥ एवमित्यादिना ॥ तस्य भेदस्य। ततःअनादित्वात् । तस्याःभिदायाः । अविद्यया पूर्वोक्तराज्ञानेनकृतत्वोक्तिरितिसंबंधः ॥१३१७॥ १३१८ ॥ तच्चऐक्यं

च । देहाद्युपाधिभिर्ज्ञापितंकिंन । आदिपदेनांतःकरणादिकमुच्यते । औपाधिकत्वपक्षेप्रतिबंदीग्रहणायेदमुदितं ॥ १३१९ ॥
ऐक्यज्ञानस्याविद्याकार्यत्वेहेतुमाह ॥ अविद्येति ॥ एवंसति सर्वस्यकार्यस्याविद्याकार्यत्वेसति । एतत् अज्ञानं । अंतरा विना

यदितज्ज्ञापितत्वाच्चभेदेदोषःप्रभाष्यते ॥ तदैक्यमपिदोषिस्यात्तच्चमानसवेदने ॥ आज्ञा
नाज्ज्ञापितंकिंनकिंवादेहाद्युपाधिभिः ॥१३१९॥ अविद्याकार्यमखिलंकार्यंकिलभवन्म
ते ॥ एवंसत्यैक्यधीरंतेकिंतेहंतैतदंतरा॥१३२०॥अविद्यमानंभातीतिवादोनादौकथंवद॥
बंधेप्याविद्यकत्वंतद्धतेनिर्निबंधनं ॥ १३२१ ॥ अतस्तत्संबंधमात्राद्यद्यवद्यंनिगद्यते ॥
तर्ह्यैक्यस्याप्यवद्यंस्यात्तदज्ञानावृतंहिते ॥ १३२२ ॥ यतोब्रह्मचितोप्यस्तितत्संसर्गोपव
र्गतः ॥ पुराततस्सापिभेदस्समैवासीन्मतेतव ॥ १३२३ ॥ अज्ञाननाशाद्भेदस्यनाशेब्र
ह्मापिनश्यतु ॥ १३२४ ॥ यद्यज्ञानानुपादानंब्रह्मतन्नाशनाशिन ॥ तर्ह्यनादिविभेदोयं
कुतस्तन्नाशनाशवान् ॥ १३२५ ॥ ॥ ॥

॥ १३२० ॥ अनादौभेदे । अन्यथाऐक्यस्याप्यविद्यमानत्वप्रसंगादितिभावः । तत्तस्मात् अनादेराविद्यकत्वायोगात् । तेमते
॥ १३२१ ॥ १३२२ ॥ तत्संसर्गः अविद्यासंसर्गः । साब्रह्मचित् ॥ १३२३ ॥ १३२४ ॥ तन्नाशनाशि अज्ञाननाशान्नाशि

॥ १३२५ ॥ तत्तस्मात् अनादित्वात् । भेद्यःनिराकार्यः ॥ १३२६ ॥ मोक्षकालेश्रूयमाणत्वाच्चनभेदस्यव्यावहारिकत्वादिकमि
त्याह ॥ किंचेति ॥ भिनत्ति पंचभेदयुक्तंकरोति ॥ १३२७ ॥ यत्यस्मात् । तत्तस्मात् । अद्वैतवादिनः पराचार्यस्य । व्रणं
नबाधते सहशब्दोबाधतइतिस्वमरणकालेसंकराचार्येणकथितमितिप्रथा । अतइदमुक्तं ॥ १३२८ ॥ त न्मुक्तौविद्यमानत्वात्

तद्ब्रह्मसमसामर्थ्योंभेदोभेद्योनकेनाचित् ॥ १३२६ ॥ किंचमायानिवृत्तौचस्मर्यतेश्रूयते
चया ॥ सांभिदानपरैर्भेद्याभिनत्तिनिखिलंजगत् ॥ १३२७ ॥ यद्ब्रह्मणासहेत्युक्तंमु
क्तौतन्नासतीभिदा ॥ व्रणादप्यधिकोबाधस्सहोक्त्याऽद्वैतवादिनः ॥ १३२८ ॥ अपि
स्वरूपनिष्पत्तौसमीपप्राप्तिरुच्यते॥परंज्योतिरितिश्रुत्यातत्त्यागाद्दाकथंभिदा ॥१३२९॥
पूर्वोक्तब्रह्मसूत्राणिभेदमाघोषयंतिहि ॥ अभेदोक्तीस्तिरस्कृत्यकुतस्तस्यह्यसत्यता ॥
अतोभेदश्रुतेरग्रेकस्यस्यात्प्रत्यवस्थितिः॥१३३०॥ अनादिवेदवाक्येषुपरापरकथावृथा ॥
निषेधविधिवार्ताद्धादग्धाग्नीषोमपावके ॥ १३३१ ॥ ॥ ॥

॥ १३२९ ॥ तस्य निर्णयसूत्रनिर्णीतस्य ॥ १३३० ॥ भेदवाक्यस्यपूर्वत्वेनदौर्बल्यं । अभेदवाक्यस्यपरत्वेनप्राबल्यंपरोवक्ति
तदपिनयुक्तमित्याह ॥ अनादीति ॥ अपरंपूर्वं । विधितोनिषेधस्यप्राबल्यंपरोवक्ति । तच्चनयुक्तमित्याह ॥ निषेधेति ॥ नहिं



स्यादितिनिषेधवाक्येसत्यपि अग्नीषोमीयंपशुमालभेतेतिविधिवाक्यबलात्अग्नीषोमपावकस्यजाज्वल्यमानस्यप्रत्यक्षतोदर्शनात्
पावकेदग्धेत्युक्तं । अनादिषुवेदवाक्येषुपूर्वापरविभागएवनघटतइत्युक्तं । अधुनापरस्मात्पूर्वबाधोनयुक्तइत्याह ॥परस्मादिति॥
॥ १३३२ ॥ तेमते । निषेधस्यबाधकत्वेदोषांतरंचाह ॥ निषेधादिति ॥ १३३३ ॥ परंपरिहसन्पक्षद्वयस्यापिव्यभिचारमाह

परस्मात्पूर्वबाधश्चेत्स्मृत्यास्याच्छ्रुतिबाधनं ॥ परस्माज्जगतःपूर्वब्रह्मबाधश्चतेभवेत्
॥ १३३२ ॥ निषेधाद्विधिबाधश्चेद्बौद्धोक्त्याधर्मबाधनं ॥ तथाशून्यत्वकथयाब्रह्मबाध्यं
भवेत्तव ॥ १३३३ ॥ परयाभार्ययाकार्यनिषेधपरयातव ॥ पतिस्त्वंगृहकृत्यानांविधा
ताहंतबाध्यसे ॥ १३३४ ॥ किंचपूर्वंनिषेध्यंचतादात्म्यमभवत्तव ॥ भेदःपरोनिषेधो
मेयोन्योन्याभावरूपकः ॥ १३३५ ॥ अतस्त्वन्न्यायएवायंचित्रंमत्कार्यसाधकः ॥ यद्ब
लादैक्यवाक्यानांबाधिकाभेदवागभूत् ॥ १३३६ ॥ अतोनिरवकाशंयत्तदेवबलवत्तरं॥
दुर्बलंसावकाशंस्यादितिसर्वमनोरमं ॥ १३३७ ॥ ॥ ॥

॥ परयेति ॥ कार्यनिषेधपरया गृहकृत्यंकर्तव्यमित्युक्तेनशक्यतइतिप्रतिवक्र्येत्यर्थः ॥१३३४॥ अपिचायंन्यायस्तवैवानिष्टइत्या
ह ॥ किंचेति ॥ यःभेदः ॥१३३५॥ यद्बलात् यस्यन्यायस्यबलात् ॥१३३६॥१३३७॥ मानांतरसिद्धभेदस्यानुवादकतयाभेदश्रु

तेर्नभेदेतात्पर्यमितिशंकांप्रतिबंद्यापरिहरति ॥ यदीति ॥ अन्यतःमानांतरात् । तत्सत्त्वंब्रह्मसत्त्वं ॥ १३३८ ॥ १३३९ ॥ अतोपिउक्तन्यायादपि ॥ १३४० ॥ दोषांतरंचाह ॥ यदीति ॥ साभेदश्रुतिः । भीमसेनगदा भीमसेनगदावदभेद्यइत्यर्थः । ईश्वरधर्मिकभेदस्यप्रत्यक्षासिद्धत्वेनअनुवादकत्वशंकायाअपितत्राभावादितिभावः । नन्वीश्वरधर्मिकोभेदश्श्रुत्यानोक्तइत्यतआह

यद्यन्यतःसिद्धभेदस्यानुवादेनमेश्रुतिः॥ नभेदसाधिकातर्हिस्वप्रकाशत्वशक्तितः ॥ १३३८ ॥
सिद्धस्यब्रह्मसत्त्वस्याप्यनुवादपराश्रुतिः॥ अस्तिब्रह्मेत्यादिरूपानतत्सत्त्वंप्रसाधयेत् ॥१३३९॥
असिद्धबोधकंशून्यवाक्यंस्यादैक्यवाक्यवत् ॥ अतोपिब्रह्मभेदोयंब्रह्मसंमितएवहि ॥१३४०॥
यदिप्रत्यक्षसिद्धस्यसाभेदस्यानुवादिनी ॥ तर्हीशधर्मिकोभेदोभीमसेनगदाभवत् ॥ यतोन्यपदयुग्मेनभेदौद्वावप्युदीरितौ ॥ १३४१ ॥ अथप्रत्यक्षसिद्धस्यजीवभेदस्यचश्रुतिः॥ कुतोनुवादंकुरुतेतूष्णींवादूषणायवा ॥ १३४२ ॥ आद्येद्विर्बद्धभेदोसौसुबद्धोभून्नसंशयः ॥ नचेत्स्वोक्तार्थनिर्णीत्यैशासनानुस्मृतिर्वृथा ॥ १३४३ ॥ मानस्यमानसंवादेप्रामाण्यावधृतिःकिल ॥ चित्रसत्वौषधेनाभूत्काचच्छेदेक्षिणतीक्ष्णता ॥ अतोतिबलवद्वैरात्स्यादैक्यस्यपलायनं ॥ १३४४ ॥

॥ यतइति ॥ द्वौ ईश्वरधर्मिकजीवधर्मिकौ ॥ १३४१ ॥ कुतइत्युक्तप्रश्नंविशदयति ॥ तूष्णींवेति ॥ १३४२ ॥ पक्षद्वयंचदूषयति ॥ आद्यइत्यादिना ॥ नचे न्मानांतरसंवादोदार्ढ्यायनचेत् । शासनं शिलाशासनं ॥ १३४३ ॥ मानांतरसंवादेनभे

दस्यबलवत्त्वात् ॥ १३४४ ॥ द्वितीये दूषणार्थमनुवादइतिपक्षे । तत् यदर्थमनुवादः तत् । तदा ऐक्यवाक्यस्यदूषणत्वे ॥ १३४५ ॥ अन्योन्याश्रयमेवदर्शयति ॥ दूषणेति ॥ निरंकुशा विरोधिभेदश्रुत्याख्यांकुशरहिता । तांभेदश्रुतिं ॥ १३४६ ॥ अस्याःऐक्यश्रुतेः । साभेदश्रुतिः ॥ १३४७ ॥ तथाचभिक्षामास्तु श्वानंगृहाणेत्याभाणकमनुकरोषीत्याह ॥ श्वानमिति ॥

द्वितीयेदूषणंकिंतदैक्यवाक्यंयदीष्यते ॥ तदान्योन्याश्रयोदोषोवैर्याश्लेषोपमस्तव ॥१३४५॥ दूषणार्थानुवादित्वेसिद्धभेदपरश्रुतेः ॥ निरंकुशैक्यवागैक्यमुक्त्वातांदूषयेत्स्वयं॥१३४६॥सिद्धेऽस्यादूषकत्वेचदूषणार्थानुवादिनी॥सास्यादितिनकस्यस्यादन्योन्याश्रयदूषणं ॥१३४७॥ श्वानंगृहाणभिक्षामेमास्त्वित्याभाणकंस्मर ॥ यदन्योन्याश्रयशुना दंष्ट्रापरशुनार्दिते ॥ दूरेभ्रूहूषणार्थानुवादित्वान्नस्यभोजनं ॥१३४८॥ दृढप्रत्यक्षवैरेपिश्रुतिरैक्यंकथंवदेत् ॥ अबाधितोहिवाक्यार्थोयोग्यतावश्यकीनर्किं ॥१३४९॥ यदाप्रत्यक्षबाधायाप्यैक्यवाक्यंव्रजेत्तव ॥ तदाबलवती भेदश्रुतिर्हन्याद्विपृष्ठतः ॥ १३५० ॥

अर्दितेत्वयि ॥ १३४८ ॥ किंचप्रत्यक्षबाधाचऐक्यश्रुतिर्नस्वार्थपरा । अतोपिनभेदश्रुतिदूषणायालमित्याह ॥ दृढेति ॥ योग्यता अर्थाबाधरूपयोग्यता ॥ १३४९ ॥ ऐक्यश्रुत्यैवप्रत्यक्षस्यापिबाधइतिचेत् । तत्राह ॥ यदेति ॥ बलवती प्रत्यक्षसहायव

त्वेनबलवती ॥ १३५० ॥ ततः प्रत्यक्षबाधकरणात् । तांऐक्यश्रुतिं । सः भेदग्राही बलवत्तरः ॥ १३५१ ॥ तस्मा च्छ्रुत्यायु द्धेप्रत्यक्षेणताडनात् प्रत्यक्षेणयुद्धेचश्रुत्याताडनादित्यर्थः । यथाउभाभ्यांप्रबलभटाभ्यायुद्धकारिभटस्य एकंप्रतिप्रत्यवस्थानेअ परोहन्यात् । अपरंप्रतिचप्रत्यवस्थानेपुनस्सएवहन्यात् । तथातवैक्यवाक्यस्यापिप्रबलप्रमाणद्वयविरोधेनस्वार्थासाधकत्वरूपसंक

अथभेदश्रुतिंरोद्धुंयदानिवर्तृतेततः ॥ तदातांपृष्ठतोहन्यात्ससाक्षीबलवत्तरः॥१३५१॥
तस्मादुभाभ्यांयुद्धेनक्लिश्येदैक्यश्रुतिस्तव ॥ अतस्तांक्लेशनाशायशीघ्रमर्थांतरेनय
॥१३५२॥ किंचप्रत्यक्षबाधायनालंवाक्यशतान्यपि ॥ अन्योन्याश्रयदोषेणतथादोषांत
रेणच ॥ १३५३ ॥ प्रत्यक्षबाधेवाक्यंतदैक्यंवक्तिह्यबाधितं ॥ वाक्येनैवाक्षबाधेचकथंना
न्योन्यसंश्रयः ॥१३५४॥ वाक्येनैवयदाक्षस्यदृढस्यापिप्रबाधनं ॥ गंगायांघोषइतिवाक्कु
र्याद्घोषवतींनदीं ॥ साक्षाद्बाधेनतत्त्यागेगतमैक्यंभवत्करात् ॥१३५५॥ ॥

टमागतमितिभावः । अतः उक्तरीत्याप्रमाणद्वयविरोधेनस्वमुख्यार्थकथनसामर्थ्याभावात् ॥ १३५२ ॥ ऐक्यश्रुतेःप्रत्यक्षबाधक त्वेपूर्ववदन्योन्याश्रयंलक्षणावृत्तेरुच्छेदंचदोषमाह ॥ किंचेति ॥ १३५३ ॥ १३५४ ॥ घोषानर्हत्वप्रत्यक्षस्यगंगायांघोषइत्याप्त वाक्येनैवबाधितुंशक्यत्वात्ऐक्यवाक्यात्प्रत्यक्षबाधितमैक्यमिव गंगायांघोषइतिवाक्यात्प्रत्यक्षबाधितमपिघोषाधारत्वंप्रवाहस्यै



वसिद्ध्येदितिवाक्येनैवप्रत्यक्षबाधनेलक्षणावृत्तेरुच्छेदएवस्यादितिभावः ॥ १३५५ ॥ एतदेवंसगृह्याह ॥ त्यजवेति ॥ वाक्यस्यै वप्रत्यक्षबाधकत्वेउक्तरीत्यावाक्यबलादेवघोषाधारत्वस्यैवप्रवाहेवक्तुंशक्यत्वेनलक्षणावृत्तिंत्यजवा लक्षणावृत्तिरक्षणायप्रत्यक्षस्यै ववाक्यबाधकत्वमंगीकृत्यबाधितमुख्यार्थत्यागेनवाक्यस्यार्थांतरेप्रापणे तद्वदैक्यवाक्यस्यापिप्रत्यक्षबाधितंमुख्यैक्यंपरित्यज्या मुख्यलोकसिद्धसादृश्यैक्यरूपार्थांतरेऽवश्यंप्रापणीयत्वात्तत्वविन्मतंभजवा । एकत्रप्रत्यक्षबाधेनवाक्यमर्थांतरेनीत्वा न्यायसाम्ये पिपुनरेकत्रननयसिचेत्अर्धजरतीयकारिणंत्वांपंडिताहसेयुः । अतोन्यत्रदेशांतरेव्रजवा । देशांतरगमनेहास्यार्धजरतीयकथनेचा

त्यजवालक्षणावृत्तिंभजवातत्वविन्मतं ॥ व्रजवान्यत्रवाणीमुत्सृज्यवाबुधसंसदि ॥ १३५६ ॥
दृढभेदश्रुतेर्वैराद्दृढप्रत्यक्षवैरतः ॥ नाभेदमागमोवक्तिजीवस्यपरमस्यच ॥ १३५७ ॥ ॥

लसश्चेत्बुधसंसदिवाणीमुत्सृजवेतियोजना । अनुप्रासश्शब्दालंकारः । उभयतःपाशारज्जुरर्थालंकारः । वक्तुराप्तत्वनिश्चयेसति हितद्वाक्येऽप्रामाण्यासंभवेनमुख्यार्थबाधेऽबाधितमर्थांतरंवदंति । अन्यथाआकाशेघोषइतिवत्गंगायांघोषइतिवाक्यमप्युन्मत्त प्रलपितमेवेतिब्रूयुः । एवंचनिश्चितप्रामाण्यतयाप्रबलस्यैववाक्यस्यबाधकंप्रत्यक्षंश्रुतेरपिकथंनबाधकमितिभावः । यजमानप्रस्त रादिभेदविषयप्रत्यक्षेणैवतदभेदश्रुतीनांबह्वीनामपिबाधदर्शनात्श्रुतित्वेनापिनकश्चिद्विशेषः ॥ १३५६ ॥ उक्तमर्थमुपसंहरन्सर्व त्रप्रत्यक्षेणैवश्रौतार्थबाधनेऽज्ञप्रत्यक्षेणभगवतस्स्वातंत्र्यादिकमपिबाध्यंस्यादित्यतोविवेकंचदर्शयति ॥ दृढेति ॥ १३५७॥ अतः

गंगायांघोषइत्यादौलौकिकेऽर्थेप्रत्यक्षस्यैवप्राबल्यदर्शनात् । स्तंभेपिशाचतादात्म्याभाववत्स्वस्मिन्नीश्वरतादात्म्याभावस्यचप्रत्य
क्षयोग्यत्वेनयोग्येचस्वार्थेआगमादपिप्रत्यक्षस्यैवप्रबलत्वं । लोकमोहनायान्याननुसरति गुरुमुखात्पठतिचकृष्णे माययानिगूहित
स्वातंत्र्यसार्वज्ञादेरस्मदादिप्रत्यक्षायोग्यत्वात्नतत्रप्रत्यक्षस्यबाधकतेतिभावः ॥ १३५८ ॥ प्रकारांतरेणापिप्रत्यक्षानुवादत्वपक्षं
दूषयति ॥ अक्षसिद्धेति ॥ नचेत् अनुवादेपियाथार्थ्यस्यहानिश्चेत् । स्मृतिः मन्वादिस्मृतिः । स्मृतिकर्तृणांमन्वादीनांव्यपे

अतःप्रत्यक्षयोग्यार्थेप्रत्यक्षंबलवत्सदा ॥ अतींद्रियार्थमात्रेतुप्रबलावागिंतिस्थितं ॥ १३५८ ॥
अक्षसिद्धानुवादेपिकाहानिरितिचिंत्यते ॥ याथार्थ्यमेवमानत्वंतस्यहानिर्नकाचन ॥ नचे
त्स्मृतिरमानंस्यात्स्मृतिकर्तृव्यपेक्षया ॥१३५९॥ एकस्यामानमन्यस्यकथंमानंभवेद्वद ॥ प्रमात्व
मप्रमात्वंचनह्येकत्रैवधर्मिणि ॥१३६०॥ अनपेक्षितमेकस्यपरस्यान्नत्वमानता ॥ परबोधनका
लेतुतस्यापितदपेक्षितं ॥ १३६१ ॥ प्रत्यक्षसिद्धभेदस्याप्यपलापेकृतोद्यमं ॥ परंबोधयितुंभेद
वादीवादोप्यपेक्षते ॥ अक्षसिद्धानुवादात्तन्नदोषःकोपिदृश्यते ॥ १३६२ ॥ ॥

क्षया । स्वसाक्षिणार्थमुपलभ्यहिवाक्यंरचयंति । अतस्तासांप्रत्यक्षसिद्धानुवादरूपत्वात्अप्रामाण्यंस्यादितिभावः ॥ १३५९ ॥
ननुस्मृतिकर्तृणामप्रमाणमपिअन्येषांप्रमाणंभविष्यतीत्यतआह ॥ एकस्येति ॥ एकस्य प्रत्यक्षेणभेदसिद्धिमतःपुरुषस्य ॥१३६०॥
तस्यापि भेदसिद्धिमतोपि । तत्वचनं ॥ १३६१ ॥ अपेक्षाप्रकारमेवाह ॥ प्रत्यक्षेति ॥ परं प्रतिवादिनं । अदः भेदबोधकश्रु

तिवचनं । यथाभेदवादीतंप्रत्यनुमानादिनाकथायांभेदंसाधयति तथावचनेनापिआग्रहमोचनायभेदोबोध्यतेचेत्कथमनपेक्ष्यत्व मितिभावः । तत्तस्मात् उक्तविधयासार्थक्यात् ॥ १३६२ ॥ दूषणेनैवेत्येवकारेणाक्षसिद्धेर्दूष्यत्वेहेतुतांव्यवच्छिनत्ति । तदेवो पपादयति ॥ अक्षेत्ति ॥ यतःप्रत्यक्षासिद्धमपिशून्यत्वंकेवलदूषणेनैवदूष्यते । अतोक्षसिद्धिरप्रयोजिकेत्यर्थः ॥ १३६३ ॥ ननु तर्हिदूषणेनैवभेदोदूष्योस्त्वित्यतआह ॥ दूषणमिति ॥ सर्वज्ञासर्वज्ञयोर्भेदस्ययौक्तत्वेनवाक्यातिरिक्तदूषणंकिंचिदपिनास्ति ।

दूषणार्थानुवादेतुदूषणेनैवदूष्यता ॥ अक्षसिद्ध्यानदोषोभूत्किंशून्यत्वंनदूष्यते ॥ १३६३ ॥
दूषणंनैवभेदेस्तिभेदंतत्साधयेच्छ्रुतिः ॥ अक्षासिनाछिन्नपदायद्ब्रम्हाभूत्परश्रुतिः ॥ १३६४ ॥
अपिचामानतस्सिद्धिर्दूषणेनाप्यपेक्ष्यते ॥ दृढमानेनसिद्धिस्तुभवेद्दूषणदूषणं ॥ १३६५ ॥ दूष
णेनैवमानस्यामानत्वेऽन्योन्यसंश्रयः ॥ अतोक्षसिद्ध्यादोषोक्तिरदोषज्ञत्वसाधिका ॥१३६६॥

वाक्यंचप्रत्यक्षबाधितस्वार्थपरंनेत्युक्तं । अतएवनैवेत्यवधारणं । एतदेवदर्शयति ॥ अक्षासिनेति ॥ छिन्नपदा अतत्त्वमसी तिपदच्छेदवती ॥ १३६४ ॥ किमर्थंतर्ह्यनूद्यदूषयंतीत्यतआह ॥ अपिचेति ॥ अमानतः वादिवाक्यप्रत्यक्षाभासादिना। दूष णदूषणं दूषणस्यैवस्वयंदूषणंभवतीत्यर्थः । नहिनिर्दोषप्रत्यक्षेणनिश्चितोघटःकेनापिवादिनानेतिनिषिध्यपटीकर्तुंशक्यतइतिभावः ॥ १३६५ ॥ अत उभयथाप्यक्षसिद्धेर्दोषादर्शनात् । अदोषज्ञत्वं अपंडितत्वंतस्यसाधिकेत्यर्थः ॥ १३६६ ॥ किंच निवृत्ततर्षै

रुपगीयमानाद्भवौषधाच्छ्रोत्रमनोभिरामात् । कउत्तमश्लोकगुणानुवादात्पुमान्विरज्येतविनातिमुग्धात् इतिभागवतेऽपरोक्षज्ञानिप्रत्यक्षसिद्धभगवद्गुणानामनुवादस्यमहाप्रमाणतयोक्तत्वाच्चनानुवादोदूषणमित्याह ॥ विरज्यतेति ॥ १३६७ ॥ एते निवृत्ततर्षैरित्यादिविशेषणैरुक्ताः । निवृत्तस्तर्षोविषयतृष्णायेभ्यस्तेनिवृत्ततर्षाःतैः । अतिमुग्धात् मिथ्याज्ञानिनः ॥१३६८॥१३६९॥

विरज्येतोत्तमश्लोकगुणानामनुवादतः ॥ कइत्यादिव्यासवाक्यान्यनुवादंस्तुवंतिहि ॥१३६७॥ निवृत्ततर्षप्रेयस्त्वंभवस्यौषधतातथा ॥ मनश्श्रोत्रप्रियत्वंचमिथ्याज्ञान्यतिदूरता ॥१३६८॥ महामानत्वएवैतेयुज्येरन्धर्मराशयः ॥ अमानत्वेतुभज्येरन्निितिमन्यामहेवयं ॥ १३६९ ॥ अतःप्रमाणसंवादादनुवादोमहत्तरं ॥ मानमित्येवजानीहिनलुनीहि सतांमतं ॥ १३७० ॥ स्यादेकैकमतेशंकासर्वस्याभिमतेतुन ॥ अन्नंहिकस्यवानान्नंप्रत्यक्षं मानमेवतत् ॥ १३७१ ॥ अतोनादिमतप्राप्ततदैक्यस्यानुवादनं ॥ तद्धैकआहुरसदेवेदमग्रइतिश्रुतौ ॥ ब्रह्मासत्त्वानुवादाभंदोषार्हमितिशोभते ॥ १३७२ ॥ ॥

अतः शुकव्यासादिभिस्स्तुतत्वात् ॥ १३७० ॥ एकैकवादिनांशुष्कयुक्त्यादिनाभिमतेऽर्थेतत्तत्प्रतिवादिनांविवाददर्शनात् सर्वप्रत्यक्षेणान्नतयासिद्धेऽन्ने कस्यापिविवादादर्शनात्प्रत्यक्षमेवप्रबलप्रमाणमित्याह ॥ स्यादिति ॥ १३७१ ॥ अतः प्रमाणप्राप्तानुवादस्यदोषानर्हत्वात् । अनादिमतं प्रवाहतोनादिमायावाद्यादिमतं । दोषार्हंदूषणार्हं । प्रमाणाप्राप्तत्वेनदूषयितुंशक्यमिति





भावः ॥ १३७२ ॥ नचेत् प्रमाणानुवादोप्यदोषोनचेत् । उत्तरवाक्यस्यानुवादकत्वेपिपूर्ववाक्यस्यकथमनुवादकत्वमित्यतउक्तं ॥ सुंदोपसुंदवदिति ॥ यथासमबलौसुंदोपसुंदौमिथःकलहंकुर्वाते तथाऽनादितयापूर्वोत्तरविभागायोगात्समबलंवाक्यद्वयमन्योन्यमनुवादंकृत्वादूषणार्हंकरोतीतिभावः । तत् ऐक्यस्याप्यनुवादेनदूष्यत्वापातात् । नचवाच्यंप्रत्यक्षप्राप्तस्यैवानुवादोदोषोनवाक्यप्राप्तस्येति । तद्धैकआहुरसदेवेदमग्रआसीदितिवाक्यप्राप्तस्यापि कथमसतस्सज्जायेतेतिदूषणदर्शनात् । किंचमानांतर

दोषानर्हाक्षसिद्धस्यत्वनुवादोपिवादवत् ॥ नचेद्बहुमहावाक्याशास्यमैक्यंपरस्परं ॥ अनुवक्तिभिदाश्रुत्याभेत्तुंसुंदोपसुंदवत् ॥ १३७३ ॥ इत्यैक्यमपिशोच्यंस्यात्तन्मानांतरसिद्धता ॥ दार्ढ्यायैवेतिवक्तव्यंसर्वैरपिविवेकिभिः ॥१३७४॥ सर्वार्थान्स्वतएवाहप्रलयेपिसतीश्रुतिः ॥ सृष्टौतदुदितानर्थान्सर्वैवेदानुसारतः ॥ १३७५ ॥ अनुमिन्वंतिपश्यंतिवदंतिचततस्ततः ॥ अतोन्यदनुवादिस्याच्छ्रुतिस्त्वन्यानपेक्षिणी ॥ १३७६ ॥ ॥

प्राप्तस्यमानांतरेणापिप्रमापनेसंवादेनप्रामाण्यंदृढीक्रियते । एकवाक्येनोक्तस्यार्थस्यपुनर्वाक्यांतरेणकथनेवैयर्थ्यस्यपौनरुक्त्याख्यशब्ददोषस्यचापातेनमहादोषत्वाच्च । प्रमाणसमुदायरूपत्वेनादोषत्वंउभयत्रापिसमं ॥ १३७३ ॥ १३७४ ॥ यच्चश्रुतेरनुवादकत्वमुक्तं । तदपिनयुक्तियुक्तमित्याह ॥ सर्वार्थानिति ॥ स्वतः प्रमाणांतरमनपेक्ष्यस्वशक्त्यैव । अपौरुषेयत्वादितिभावः । सर्व

युक्ति-
॥ १९१ ॥

ज्ञेश्वरप्रत्यक्षसिद्धत्वमात्रेणानुवादित्वेऐक्यश्रुतेरप्यनुवादित्वंस्यादितिचोद्यं । अत श्श्रुतेरेवपूर्वप्रमाणत्वात् ॥१३७५॥१३७६॥ यत्यस्मात् ॥ १३७७ ॥ भेदश्रुतेरनुवादित्वाभावेयुक्त्यंतरंचाह ॥ एकइति ॥ यत्यस्मात् । तद्धैकआहुरिति स्वप्नमायासरूपेतिसृष्टिरन्यैर्विकल्पितेत्यादौदूष्यानुवादे । तत्तस्मात् दूष्यानुवादत्वेऽन्यप्रोक्तत्वज्ञापकपदस्यसर्वत्रदर्शनात् । स्वोक्तं तादृशपदं विनास्वमततयैवोक्तं । युक्त्यंतरंचाह ॥ दूष्यमिति ॥ यस्मात्तद्धैकआहुरसदेवेदमग्रआसीत्कथमसतस्सज्जायेतेतिवाक्ये स्वप्न

किंचानुवक्तियन्नित्यंनानित्यमनुवर्तते ॥ १३७७ ॥ येकेन्यइतिवासान्यप्रोक्ततामपियत्स्फुटं ॥
दूष्यानुवादेवदतितत्स्वोक्तंननिषेधति ॥ १३७८ ॥ इतिमन्यामहे दूष्यंदूषणंचैकवाक्यगं ॥
करोति शाखांतरगातच्छाखांतरवर्तिनां ॥ नदूषणाययततेवाक्यानामितिमेमतिः ॥ १३७९ ॥
तस्मादृक्संहितावाक्येसयुक्तिकमुदीरितं ॥ कुतस्सादूषयेत्स्वार्थेसूक्तेस्मिन्नास्तिदूषणं ॥ १३८० ॥

मायासरूपेतिसृष्टिरन्यैर्विकल्पिता । देवस्यैषस्वभावोयमाप्तकामस्यकास्पृहेतिवाक्येच दूष्यंदूषणंचैकवाक्यगंकरोति । यस्मिन्स्थलेदूष्यमनुवदतितत्रैवदूषणमपिस्पष्टंवदति । अन्यथा सिद्धांतत्वभ्रांत्यापादकतयास्वस्यविप्रलंभकत्वप्रसंगात् । तत्तस्मात् । शाखांतरगा सामशाखोपनिषदिविद्यमानातत्त्वमसीत्यादिका । शाखांतरवर्तिनां आथर्वणोपनिषदिऋक्संहितावामनसूक्तेचविद्यमानानांवाक्यानां द्वासुपर्णेत्यादिवाक्यानां ॥ १३७८ ॥ १३७९ ॥ तस्मा च्छाखांतरोक्तस्यशाखांतरेदूषणायोगात् । स्वार्थे

मल्लिका
भेदसौ०

॥ ४१० ॥

अन्यइत्याद्यन्योक्तित्वज्ञापकंविनैवोक्तमर्थं । दूष्यस्थलएवदूषणंचनात्रास्तीत्याह ॥ सूक्तइति ॥ १३८० ॥ युक्त्यंतरंचाह ॥ सूक्तंचेदमिति ॥ १३८१ ॥ भेदवाक्यस्यादूष्यत्वेकैमुत्यमाह ॥ उदितइति ॥ उदितेजुहोति अनुदितेजुहोतीतिस्पष्टंविरुद्धापिवाङ्नदूष्यते । किंतुशाखाभेदेनसमाधीयते । तद्वद्द्वासुपर्णा नद्वासुपर्णेतिवाक्यद्वयाभावात्अविरुद्धा स्पष्टंविरोधरहिता ॥ १३८२ ॥ साहित्यमुद्रयोपसंहरति ॥ अतइति ॥ उक्तविधयाबहुयुक्तिभरितत्वादित्यर्थः । यथावीरभटाग्रेद्वावेवस्थातुंशक्तौ

सूक्तंचेदंतदैवस्यात्तत्वमेववदेद्यदि ॥ अतत्वकथकंसूक्तमितिचव्याहृतंवचः ॥१३८१॥ उदितेऽनुदितेहोमविधात्र्यपिनदूष्यते ॥ अविरुद्धात्वियंवाणीकुतोवादूष्यतांव्रजेत् ॥१३८२॥ अतो भेदश्रुतेरग्रेकएकःप्रतितिष्ठति ॥ विरुद्धधर्मौनीचोच्चौजीवेशौद्वाविमौविना ॥ १३८३ ॥ अनुवादादिरूपोयमित्याकारास्तिनश्रुतिः ॥ त्वद्वाक्येनममाश्वासःकल्पनाबीजमुच्यतां ॥१३८४॥ ऐक्योक्तेरन्यथायोगात्परंकल्प्यमिदंत्वया ॥ सात्वद्यापिरणोद्योगादव्यावृत्तपदद्वया ॥१३८५॥

नत्वेकः । एवमस्याश्श्रुतेरग्रेजीवेशयोर्द्वयोरेवचेतनतयाप्रबलयोस्स्थितिर्युक्ता । नतुपरोक्तकुयुक्त्याएकस्यजीवस्य नापिदुर्बलयोर्बुद्धिजीवयोर्वेतिभावः ॥ १३८३ ॥ प्रकारांतरेणापिअनुवादकत्वव्यावहारिकत्वादिपक्षंदूषयति ॥ अनुवादेति ॥ अनुवादरूपः आदिपदेनव्यावहारिकभेदप्रतिपादकरूपइतिगृह्यते । अयं भेदप्रतिपादकश्रुतिसमुदायः । तद्वाक्ये तवप्रतिवादिनः अनुवादरूपेयंश्रुतिरितिस्वकपोलकल्पितवाक्ये ॥ १३८४ ॥ पराभिप्रायमुद्धाव्यदूषयति ॥ ऐक्योक्तेरित्यादिना ॥ सा ऐक्यश्रुतिः ।

अव्यावृत्तपदद्वया अव्यावृत्तं वाग्युद्धमध्यएवस्थितं पदद्वयंतत्त्वमितिपदद्वयं यस्यास्सातथोक्ता। पादविन्यासद्वयवतीतिध्वनिः। अतदितिपदच्छेदस्यसंभवेनस्वानुकूलपदएवसंदेहः। ऐक्यप्रतिपादनंदूरापास्तमितिभावः। उपलक्षणंचैतत्। उक्तरीत्यानिरवकाश भेदश्रुतेरन्यथानुपपत्त्याऐक्यश्रुतेरेवकुतोनव्यावहारिकैक्यपरताकल्प्या। अतोनेदंकल्पनाबीजमित्यपिद्रष्टव्यं॥१३८५॥१३८६॥ उपसंहरति ॥ अतइति ॥ अतः व्यावहारिकत्वादिकल्पनाबीजाभावात्। स्वपदतः वाक्यस्थितपदात्प्रत्यक्षादिप्रमाणांतराच्च

वृत्त्यंतरेक्षिप्तपदामानत्रयभयार्दिता ॥ मुख्यार्थेनाकरोच्छूद्रामग्र्यासेचनवागिव ॥ १३८६ ॥
अतोयथाश्रुतोवाक्यस्यार्थोवाच्योमनीषिभिः॥ अविरुद्धस्स्वपरतस्तथामानांतरादपि॥१३८७॥
अविद्यमानोभेदोयंयद्युपास्त्यर्थमुच्यते ॥ तर्हित्र्यक्षस्सहस्राक्षस्सहस्राक्षस्त्रिलोचनः॥१३८८॥
कुतोनकीर्त्यतेध्यातुंतस्मायद्वस्तुयादृशं ॥ तत्तथैववदेद्वेदोध्यातुंवाद्रष्टुमेववा ॥ १३८९ ॥ ॥

अविरुद्धोयोवाक्यस्यार्थः सयथाश्रुतएववाच्यः। विरुद्धस्तुनयथाश्रुतएववाच्यः। किंतुवाक्यस्यवृत्त्यंतरमंगीकृत्याविरुद्धोयथा भवतितथैववाच्यः। अप्रामाण्यापादकानुवादकत्वव्यावहारिकत्वादिकंतुनकुत्रापिश्रुतिवाक्येवाच्यमितिभावः ॥ १३८७ ॥ यच्चासंभावनाविपरीतभावनानिवृत्त्यर्थंमननोपासनेइतिवदन्परःपुनरविद्यमानस्यैवोपासनांवक्ति। तच्चनकेवलमुक्तविधयास्वमत विरुद्धं किंतुयुक्तिश्रुतिस्मृतिविरुद्धंचेत्याह ॥ अविद्यमानइति ॥ तस्मात् तत्तद्रूपवैपरीत्येनतेषांतेषांध्यानाकथनात्। द्रष्टुमे



वेतिवदताऽतत्त्वोपासनयातत्वदर्शनंचविरुद्धमितिसूचयति ॥ १३८८ ॥ १३८९ ॥ अनृतं ध्यानार्थमविद्यमानं। परेषामनृत कीर्तननिवारयन्वेदस्स्वयंकथमनृतंकीर्तयेदितिभावः ॥ १३९० ॥ ततः व्यत्यासेनाकथनात्। साश्रुतिः ॥ १३९१ ॥ उभयत्र तत्त्वमसीत्यादौद्वासुपर्णेत्यादौच ॥ १३९२ ॥ साकल्पना। तत् प्रमाणबाधितमैक्यं। अविद्यमानस्यैवोपासनमितिमतेऐक्यस्यै

सत्यंवदेतियोन्यस्याप्यसत्योक्तिंनिवारयेत् ॥ सवेदस्सर्वमर्यादारक्षकोनानृतंवदेत्
॥ १३९० ॥ योयोदेवोययाकृत्यायेनलिंगेनयैर्गुणैः ॥ वर्ततेश्रुतिरप्येषातंतंब्रूतेतथातथा॥
नव्यत्यासात्क्वचिद्वक्तितस्सत्यव्रतैवसा ॥ १३९१ ॥ किंचोपास्त्यैभिदोक्तिश्चेदैक्यो
क्तिश्चकथंनते ॥ उपासीतेतितुपदंनोभयत्रापिदृश्यते ॥ १३९२ ॥ कल्पनाचेत्कसानस्या
द्वस्तुतस्त्वैक्यमेवते ॥ सर्वप्रत्यक्षतोबाधादुपास्यंस्यादसिद्धितत् ॥१३९३॥ अनृतात्पात
कंवक्तियोवेदोनसकुत्रचित्॥ वदेदनृतमन्यार्थमितिमन्यामहेवयं ॥ १३९४ ॥ नचेन्मो
हार्थमनृतंवेदोवक्तीतिवादिनः ॥ बौद्धाद्याःकेनदूष्यंतेभ्रूष्यंतेवाश्रुतेर्गुणाः ॥ १३९५ ॥

वोपास्यत्वंन्याय्यं। सर्वानुभवबाधितत्वेनतस्यैवाविद्यमानत्वात्। नतुभेदस्येतिभावः ॥ १३९३ ॥ किंचनानृतात्पातकंपरमित्य नृतस्यमहापापरूपत्वंवदन्वेदःकथमनृतंवदेदित्याह ॥ अनृतादिति ॥ १३९४ ॥ नचेत् अनृतमवदन्नचेत् वेदस्याप्यनृतप्रतिपा

दकत्वमस्त्विवतिचेत्यर्थः । गुणाः प्रामाण्यादयः ॥ १३९५ ॥ ननुनेदंयदिदमुपासतइतिश्रुतिःस्वयमेवोपास्यमानंअविद्यमानं वदति । अतःश्रुत्याकथितमपिकथंनानृतमित्यतआह ॥ श्रुतेरिति ॥ तत् नेदंयदिदमुपासतइतिवाक्यं ॥ १३९६ ॥ अतः अनुकूलार्थतयायोजयितुंशक्यत्वेनसावकाशत्वात् । प्रागुक्तश्रुतियुक्तीनांनिरवकाशत्वाद्वा । श्रुतेर्गुप्त्यै श्रुतिप्रामाण्यरक्षायै ।

श्रुतेरनृततांक्वापिवदतीतिवचस्तुयत् ॥ श्रुतिप्रामाण्यरक्षायैतदन्यार्थंवदेद्बुधः ॥ १३९६ ॥
अतोनेदंयदिदमित्यादिवाक्यंनबाधकं ॥ वाच्योन्योर्थश्श्रुतेर्गुप्त्यैत्वयापिचमयापिच ॥१३९७॥
उपासनार्थंधनवान्किमनुश्रियतेत्वया ॥ अधनोवानरःकश्चित्स्वानुभूतिंविचारय ॥ १३९८ ॥
विषनिर्हरणेशक्तोध्यातव्योगरुडस्त्वया ॥ सर्पदष्टेनकिमुतकाकोलूकादिपक्षिणः ॥ १३९९ ॥
विघ्नध्वंसायविघ्नेशोविद्याप्त्यैशारदात्वया ॥ मृत्युंजयोमृत्युजित्यैकुतस्संसेव्यतेवद ॥१४००॥
अविद्यमानस्सवितासंध्योपास्त्यैकिमीर्यते ॥ स्वामानतांस्वयंकर्तुंकिमुन्मत्तवचश्श्रुतिः ॥ १४०१ ॥

उपास्यमानस्याविद्यमानत्वेउपासनापादोक्तसकलश्रुतीनामप्रामाण्यप्रसंगात्इदमेववाक्यमन्यथायोजनीयमितिभावः ॥१३९७॥ बहुधास्वानुभवविरुद्धंचाविद्यमानस्योपासनमित्याह ॥ उपासनार्थमिति ॥ अविद्यमानोपासनेनफलप्राप्तिश्चेत्धनप्राप्त्यर्थम धनस्यसेवैवकर्तव्येतिभावः॥ १३९८ ॥ १३९९ ॥ १४०० ॥ स्वामानतां। वेदामानतां स्वयं नेदंयदिदमित्यादिरूपा ॥१४०१॥

सत्यंवदेतिवाक्यतात्पर्यविरोधाच्चनेदंयदिदमितिवाक्यंनस्वार्थपरमित्याह ॥ सत्यमिति॥ सा नेदंयदिदमित्यादिरूपा॥१४०२॥ ब्रह्मसूत्रविरुद्धंचाविद्यमानोपासनमित्याह॥यन्नप्रतीकइति ॥ यत्यस्मात् ॥१४०३॥ यतः सआत्मा परमात्मा प्रतीकं वागादि प्राणांतप्रतिमा नैव ततः प्रतीकस्यात्मत्वाभावात्।आत्मत्वभावना परमात्मत्वभावना।तत्रप्रतीके॥१४०४॥तस्मा त्प्रतीकेऽविद्यमा

सत्यंवदेतियावाणीवक्तिधर्मानुशासनं ॥ असत्यंकिलसावक्तिध्यातुंसर्वत्रसर्वदा
॥ १४०२॥ यन्नप्रतीकेनहिसइत्थंसूत्रकृतैवहि ॥ अविद्यमानस्योपास्तिर्नकाप्यस्ती
तिसाधितं ॥ १४०३ ॥ यतःप्रतीकंनैवात्माततआत्मत्वभावना ॥ नतत्रेतिहिसू
त्रार्थस्तवापिचममापिच ॥ १४०४ ॥ तस्माद्विद्यमानस्यभेदस्योत्कीर्तनंश्रुतौ ॥
उपासनार्थमितियन्मतंतच्चविगर्हितं ॥ १४०५ ॥ स्थूलोपास्तावरुंधत्यास्ताराप्या
रात्स्थितेक्ष्यतां ॥ भेदोपास्त्यात्वभेदस्यविरुद्धस्यकथंदृशिः ॥ १४०६ ॥ ॥

नात्मत्वोपासनस्य नेतिनिषेधेनविद्यमानोपासनस्यैवसूत्रतात्पर्यसिद्धत्वात् ॥ १४०५ ॥ ननुस्थूलारुंधतीन्यायेनशाखाग्रचंद्रन्या येनचाविद्यमानस्याप्युपासनं विद्यमानप्राप्त्युपायभूतंदृष्टमितिचेत् । अत्रप्रष्टव्यं । किंस्थूलतारायाएवारुंधतीत्वोपासनात्सूक्ष्म तारारूपारुंधतीप्राप्तिर्दृष्टा । शाखाग्रस्यैवचंद्रत्वोपास्त्याचचंद्रत्वप्राप्तिर्दृष्टेतिमन्यसे उतसूक्ष्मतारायास्स्थूलतारासमीपस्थत्वात्

सम्यग्दृश्यमानस्थूलतारांप्राक्प्रदर्श्य क्रमेणसूक्ष्मतारामपिदर्शयंति। चंद्रस्यशाखाग्राभिमुख्येनसूक्ष्मतयास्थितत्वात्द्वारीभूतंस्थूलं शाखाग्रंप्राक्प्रदर्श्य पश्चात्तमपिदर्शयंतीतिब्रूषे। नाद्यः। दृष्टांतासिद्धेः।नहिस्थूलतारामेवारुंधतीत्वेनकोप्युपदिशति। नवाशाखा ग्रमेवचंद्रत्वेन । तथासतितावतैवचरितार्थतयापुनस्सूक्ष्मतारादिदर्शनोत्कंठायाएवकुंठितत्वात्तद्दर्शनप्रसक्तेरेवाभावप्रसंगात् । किं तुमंत्रिदर्शनस्यराजदर्शनानुकूलत्ववत्एतद्दर्शनस्यापिदर्शनानुकूलत्वादेषप्रागिदमुपदिशंति । उपासतेच । अतोनेदमविद्यमानो पासनस्यनिदर्शनं । अस्तुवाकथंचिदयंदृष्टांत स्तथापितवदार्ष्टांतिकाननुगुणएव । त्वयासगुणेनिर्गुणत्वोपासनस्य भेदेऽभेदत्वो पासनस्यचाप्यनंगीकारात् । अंगीकारेचाभेदस्यैवोपास्यत्वप्रसंगेनत्वदभिलषितासिद्धेश्च । द्वितीयेपिनेमौदृष्टांतौतवानुगुणौ । स्थू

सोपासनैवतांस्थूलांकिमण्वीकृत्यदर्शयेत् ॥ किंवाभिन्नकटाहस्याप्यभेदोभेदचिंतया ॥ १४०७ ॥

लतारायाःशाखाग्रस्यचसूक्ष्मताराद्यविरुद्धत्वेन प्रत्युतपूर्वोक्तदृष्टांतेनतद्दर्शनानुकूलत्वाच्चयुक्तंतदुपासनं । तवतुसगुणस्यनिर्गुण विरोधित्वेन भेदस्यचाभेदविरोधित्वेन कथमेतदुपासनेनतत्प्राप्तिः । नह्यंधकारदर्शनेनप्रदीपप्राप्तिःक्वापिदृष्टा। किंतुप्रदीपानु कूलवन्ह्युपासनेनैव । अतस्तवादृष्टकल्पनमपहार्यमेवेत्याह ॥ स्थूलेति ॥ आरात्समीपे । उपलक्षणंचेदमविरुद्धाचेत्यपिग्राह्यं ॥ १४०६ ॥ विरुद्धोपास्त्यातद्विरुद्धफलाप्तौदृष्टांतद्वयमाह ॥ सेति ॥ सा स्थूलतारोपासना। तांतारां । स्थूलत्वोपासनयासैव ताराऽण्वीभवतिचेत्सगुणत्वोपास्त्यातदेवसगुणंनिर्गुणीभवतीत्यस्येदंनिदर्शनंस्यात् । नचतदस्ति । एवंभिन्नकटाहस्थभेदस्यैवपौ



नःपुन्येनचिंतयाभागद्वयस्यैकीभावाख्याभेदोयदिस्यात् तदाभेदोपास्त्याअभेदप्राप्तिःसंभाव्येतापि ।नैतदपिदृष्टं । अतोविरुद्धो पास्त्यातद्विरुद्धफलप्राप्तिरसंभावितैवेतिभावः ॥ १४०७ ॥ किंचमनुष्यस्येंद्रत्वोपासनवत्नीचस्योत्कर्षप्राप्तौमिथ्याभूतत्वेप्युपा स्यइतिब्रह्मदृष्टिरुत्कर्षादित्यत्रभवद्भाष्यकृतैवभाषितं । एवंचनीचजीवस्योच्चब्रह्मत्वप्रापकमैक्यमेवमिथ्याभूतत्वेप्युपास्यंस्यात् । नीचजीवस्यसुतरांनीचत्वप्रापकजीवब्रह्मभेदस्यकथंमिथ्याभूतस्याप्युपास्तिरित्याह॥ उत्कर्षइति । उत्कर्षस्स्याच्चेदित्यर्थः । तादृ

उत्कर्षश्चेदुपास्यस्यान्मिथ्यार्थोपिमतेतव ॥ नीचजीवोचताहेतुस्तादृगैक्यंननोभिदा ॥ १४०८ ॥ अविद्यमानभेदस्यनोपासा तेन शोभते ॥ अविद्यमानमेवैक्यमुपास्यंस्यात्सु खेनते ॥ १४०९ ॥ यदिध्यानायमिथ्यार्थंप्रथयेत्प्रथिताश्रुतिः ॥ तदादृष्टैवैतवैक्यंचमि थ्यार्थंनकुतोवदेत् ॥ १४१० ॥ घटवृत्त्येवतद्वृत्त्याप्यविद्यानाशइष्यतां ॥ मिथ्यार्थदृ ष्ट्याप्यानंदःकिंनतात्कालिकोनृणां ॥ अतस्तयापिमुक्तिस्स्याद्यथाप्रागुक्तयादृशिः ॥ १४११ ॥

क् उत्कर्षप्रापकं ।नोस्माकंभिदा न । तादृशीनेत्यर्थः । अतःकथंमिथ्याभूतस्याप्युपास्तिरितिभावः ॥ १४०८ ॥१४०९॥ किंच ध्यानायाविद्यमानभेदोक्तौदर्शनायाप्यविद्यमानमेवैक्यमैक्यश्रुत्याकथ्यतां। द्विधाकल्पनायांगुरुत्वात् ।कार्यकारणयोर्द्वैरूप्यस्या युक्तत्वादद्वितीयश्रुतेःपक्षपाताभावाच्च । घटवृत्त्याऽज्ञाननिवृत्त्यंगीकारात्। मिथ्याभूतरजतदृष्ट्यापितात्कालिकानंददर्शनाच्च ।

द्विविधमुक्तेश्चमिथ्याभूतैक्यदर्शनेनापिसंभवात् । एवमप्येकस्यसत्यत्वेवक्तव्येजगद्रक्षकतयानिर्वैरस्यभेदस्यैवतदस्तु । उपास्यतयाप्रथमोपस्थितत्वेनलाघवाच्च। नत्वैक्यस्येत्याह ॥ यदीति ॥ तद्वृत्त्या ऐक्यापरोक्षज्ञानेन । तया मिथ्याभूतैक्यस्यदृष्ट्या। प्रागुक्तयामिथ्याभूतभेदोपास्त्या । दृशिः ऐक्यापरोक्षज्ञानं । मिथ्यार्थदर्शनस्यमोक्षासाधकत्वेन्यायसाम्यादेतदपिनस्यादितिभावः ॥१४१०॥ १४११ ॥ १४१२ ॥ किंचसर्वमस्मीत्युपासीततद्व्रतमितिछांदोग्योपनिषदि ऐक्यस्यैवोपास्यतयाकथनात् उपास्यतयो

द्वयोरेकस्यसत्यत्वेनिर्वैरस्यास्तुलाघवात् ॥ अभेदस्तेजगद्धंतिभेदस्सर्वंचरक्षति॥१४१२॥
सर्वमस्मीत्युपासीतेत्यैक्योपास्तिस्तवश्रुता ॥ भेदर्क्कनस्तथानाहत्वन्नयस्त्वांनिहंत्यहो
॥ १४१३ ॥ किंचोपास्यायदिभिदातदासिद्धंसमीहितं ॥ तंयथोपासतेदेवंतथैवभवती
तिहि ॥ १४१४ ॥ श्रुत्यामुक्तावुपास्यस्ययत्सत्त्वमवधार्यते ॥ तस्मादुपास्योभेदोयंमुक्तौ
चासीन्निराकुलः ॥ अतएवमृषोपास्तिर्नचकास्तिश्रुतेर्मते ॥ १४१५ ॥ ॥

क्तस्यमिथ्यात्वमितित्वदुक्तन्यायेनैवतवैक्यंमिथ्याभूत् ।नतुभेदः । भेदर्चिताद्दशपदाभावादित्याह ॥ सर्वमिति ॥ भेदर्क् भेदप्रतिपादिकाऋक् । तथा उपासीतेति ॥ १४१३ ॥ अपिच तंयथायथोपासतेतथैवभवतीतिश्रुतौउपास्यावस्थायाः तथैव भवतीतिफलभूतमुक्तावप्यवधारणात्त्वदुक्तन्यायेनैवभेदस्यमुक्तिकालीनत्वप्राप्त्यामदभीष्टसिद्धि रर्थादनयैवश्रुत्यामिथ्याभूतोपासनस्यनिवारितत्वात्त्वदभीष्टासिद्धिश्चेत्याह ॥ किंचेति ॥१४१४ ॥ १४१५ ॥ ततः उपास्यस्यैवमुक्तिकालीनत्वश्रवणात् ।

नैर्गुण्यमित्युपलक्षणमैक्यंचेत्यपिग्राह्यं । अनुपास्यमितिहेतुगर्भविशेषणं । तथैवभवतिनत्वन्यथेत्यवधारणबलेनानुपास्याकारस्य मुक्तावसंभवादनुपास्यत्वस्यपरेणांगीकाराच्चेतिभावः ॥ १४१६ ॥ भगवतोजननादिदोषराहित्यंचैतच्छ्रुतिबलादेवसिद्धमित्याह ॥ मुक्तौचेति ॥ अतः निर्दोषतयोपासितस्यैवहरेर्नैर्दोष्यप्रापकत्वस्याप्येतच्छ्रुतिसिद्धत्वात् ॥ १४१७ ॥ तस्मा न्निर्दोषस्यैवोपा

ततोनुपास्यंनैर्गुण्यंनकदापिभवेन्नृणां ॥ सगुणंतुसदोपास्यस्वयंचसगुणोभवेत् ॥१४१६॥ मुक्तौ
चस्वस्यनैर्दोष्यंयदवश्यमपेक्षितं ॥ अतोऽज्ञानक्लेशनाशजन्माद्यंनस्मरेद्धरौ ॥ इतिसिद्धंत
तोऽवद्यशून्योप्यासीद्रमापतिः ॥१४१७॥ अनुपास्यमतत्वंचकुतोवक्तिश्रुतिःक्वचित् ॥ तस्मा
दापाततोदोषश्रुतिवद्भातियाश्रुतिः ॥ साप्युपास्यगुणार्थैवनदोषार्थेतिचागतं ॥१४१८॥ उपा
स्त्यनर्हमैक्यंतेनमोक्षेनापिसंसृतौ ॥ उपास्त्यभावान्मुक्तौननेदानीमावृतत्वतः ॥ १४१९ ॥
तस्मादुपास्यंसगुणंब्रह्मैवासीद्धिनिर्मलं ॥मुक्तिदत्वाद्धिमुक्तिश्चतस्यासादृश्यमित्यपि ॥१४२०॥
तथैवेतिवदंतीसाश्रुतिराहततोपिमे ॥ भिदैवमुस्थाब्रह्मैक्यंपदाहतमभूत्तव ॥ १४२१ ॥ ॥

स्यत्वात् । अनुपास्यस्यमोक्षैकफलश्रुतौकथनायोगाच्च ॥ १४१८ ॥ इदानींसंसारे । आवृतत्वतः अज्ञानावृतत्वात् ॥ १४१९ ॥ ततः मुक्तावपिसादृश्यविधानात् । पदाहतं तथैवेतिपदेननिराकृतं । उपास्यादन्याकारस्यमुक्तौतेनपदेननिराकरणात् ॥१४२०॥

॥ १४२१ ॥ अनयैवश्रुत्यामुक्तावुपास्योपासकभावस्यापिसिद्धिरित्याह ॥ उपास्येति ॥ तंयथायथोपासतेतथैवभवतीतिश्रुत्या सांसारिकोपासनावस्थासदृशसर्वावस्थायाअपि सदृशार्थक तथैवेतिपदेनमुक्तौविधानात् ध्यानांगप्राकृतदेहसदृशाप्राकृतदेहस्य प्राकृतानंदपुलकसदृशाप्राकृतानंदपुलकादेः प्राकृतोपासनासदृशाप्राकृतोपासनस्य प्राकृततत्कृतत्वसदृशाप्राकृततत्कृतत्वस्यच मुक्तजीवेषुसिद्धेः । सर्ववेदांतप्रत्ययंचोदनाद्यविशेषात् इतिसूत्रात्सर्वश्रुत्यर्थोपासकब्रह्मणस्तथैवेतिश्रुतेर्मुक्तावप्यर्थात्प्राकृतोपास नयोपास्यत्ववदप्राकृतोपासनयापिभगवतउपास्यत्वसिद्धिश्चेतिभावः । एवंचप्राकृतदेहस्यापिमुक्तौप्रसक्तिरितिशंकागर्भस्त्रावेणैवग

उपास्योपासकत्वस्यमुक्तावप्यनुवर्तनं ॥ तथैवेतिहिसर्वस्याप्यवधृत्याश्रुतिर्जगौ ॥ १४२२ ॥
यतस्सारूप्यमोक्षोयंसर्वोपास्तिकृतांश्रुतः॥ अतस्सालोक्यसामीप्यसायुज्येषुचसध्रुवः ॥१४२३॥
श्रुतिरेषाबलवतीसर्वश्रुत्युक्तसंपदं ॥ स्वज्ञातिरक्षणोद्युक्तानापहर्तुंविमुंचति ॥ १४२४ ॥ ॥

ता ॥ १४२२ ॥ प्रमेयांतरंचसिद्धमित्याह ॥ यतइति ॥ अयं एतच्छ्रुत्युक्तः । सारूप्यमोक्षः उपास्त्यनुसारेणस्वस्याप्याकार गुणादिसादृश्यरूपफलश्रवणात् । सर्वोपास्तिकृतां सर्वेषामुपास्तिकृतामधिकारिणांयतश्श्रुतः । उपास्तिर्हिमुमुक्षूणांसर्वेषामपेक्षिता एवंचैतच्छ्रुत्यैवसर्वेषांसारूप्यमोक्षोपिश्रुतइत्यर्थः । अंतइत्युत्तरेणान्वयः । सः सारूप्यमोक्षः ॥ १४२३ ॥ बलवती फलरूपता त्पर्यलिंगवत्त्वात्प्रबला । सर्ववेदांतप्रत्ययंचोदनाद्यविशेषादितिसूत्रात्सर्वश्रुत्यर्थोपासकब्रह्मणस्तथैवेतिश्रुतेर्मुक्तावपिसर्वश्रुत्यर्थो



पासकत्वावश्यंभावस्यापिसिद्धेःसर्वश्रुत्युक्तसंपदमित्युक्तं । अपहर्तुं अविद्यमानत्वोक्त्यानिराकर्तुं । उपासितगुणसदृशगुणानांमुक्ते षुश्रवणादुपास्येसुतरांतत्सिद्धिः । तत्वज्ञानस्यैवमौक्तफलहेतुत्वादितिभावः ॥ १४२४ ॥ तर्हि नेदंयदिदमुपासतइतिश्रुतेःकोर्थ इत्यतआह ॥ उपासतइति ॥ उपास्यमानप्रतिमा ध्यानार्थरचितामनोमयीभगवत्प्रतिमा । बाह्याचसुवर्णादिरचिताकृष्णरामा दिभगवत्प्रतिमा । अर्चादिनोपास्यमाना साक्षाद्भगवतःअपरोक्षज्ञानात्पूर्वंद्रष्टुमशक्यत्वात्स्वबिंबमूर्तेःप्रतिमामेवमनसाविरचय्य

उपासतेहियदिदंनेदंब्रह्मेतितुश्रुतिः ॥ उपास्यमानप्रतिमानैवब्रह्मेतिशंसति ॥ १४२५ ॥ ब्रह्मणस्स
न्निधानाचतदुपास्तिर्दिदृक्षतां ॥ राजद्वारोपास्तितोपिराज्ञस्स्याङ्घ्रिप्रसन्नता॥१४२६॥उपासतेसदाभो
गैर्नरायदुदरंभराः ॥ जीवरूपमिदंब्रह्मनेत्यर्थंचाहसाश्रुतिः ॥१४२७॥ तवत्वतिविरुद्धस्योपास्त्यैवस्या
त्कथंफलं ॥ महाविरुद्धमन्नर्थीकिमंबुमथनंचरेत् ॥ किंवाशुक्तेरुपास्त्यैवरूप्यप्राप्त्याधनीभवान् ॥१४२८॥

ध्यायंति ॥ १४२५ ॥ तत्प्रतिमारूपंब्रह्मसन्निधानवदेवनतुसाक्षाद्ब्रह्मेत्यर्थः । अन्योपास्त्याऽन्यप्रतीतौदृष्टांतमाह ॥ राजद्वारे ति ॥ १४२६ ॥ जीवब्रह्मणोर्भेदप्रतिपादकत्वात् इयंश्रुतिरस्माकमेवानुकूला । नतवेतिभावेनश्रुतेरर्थांतरमाह ॥ उपासत इति ॥ भोगैः यत्जीवचैतन्यं उपासतेसेवंते तर्पयंतीत्यर्थः । इदं जीवरूपंजीवचैतन्यं ॥ १४२७ ॥ भेदोपास्त्यादिनाअभेदा दिप्राप्तिः विरुद्धत्वान्नभवतीत्येतदृष्टांतेनोपपादयति ॥ तवत्त्विति ॥ फलं विरुद्धफलं । भेदोपास्त्याऽभेदप्राप्तिरित्यर्थः । महा

विरुद्धमंबुमथनमितिसंबंधः । अंबुमथनेनाग्निप्राप्तेरदर्शनात् विरुद्धोपास्त्यातद्विरुद्धफलंक्कापिनभवतीतिभावः । निदर्शनांतरम
प्याह ॥ किंवेति ॥१४२८॥ त्वदृष्टांतेनैवाविद्यमानैक्यस्योपास्यत्वमागतं नतुभेदस्येत्याह ॥ किंचेति ॥ स्थूला तारा ॥१४२९॥
सगुणोपास्त्यानिर्गुणप्राप्तौचनायंदृष्टांतोभूदित्याह ॥ स्थूलभास्वरेति ॥ १४३० ॥ सा स्थूलतारोपासनेनसूक्ष्मताराप्राप्तिः ।

किंचशाखाग्रचंद्रैक्यंध्यातव्यंकिलतेमते ॥ स्थूलैवारुंधतीत्वेनध्येयासूक्ष्मत्वसिद्धये ॥ एवंचै
क्यमुपास्यंवाभेदोवाभूद्विचारय ॥ १४२९ ॥ स्थूलभास्वरतारायाध्यानेसूक्ष्माल्पभास्वरा ॥
तारैवदृश्यते व्योम नीरूपंनहिदृश्यते ॥ १४३० ॥ एवंचसगुणोपास्त्यानिर्गुणेक्षोपमानसा ॥
यद्ध्येयस्सगुणोत्रापिप्राप्योपिसगुणोयतः ॥१४३१॥ अस्माकंतुमनोरूपप्रतिमास्थूलभास्वरा ॥
उपास्यमानास्वांतस्स्थांज्ञानानंदमयप्रभां॥१४३२॥ अतिसूक्ष्मांहरेर्मूर्त्तिंदर्शयेदितिवादिनां ॥
तवोपमैवानुपमाबलमासीद्विवेचने ॥ १४३३ ॥ अरणीस्थानलप्राप्तिररण्योर्मथनेयथा ॥ तथा
नुकूलान्यसेवाप्यन्यप्राप्त्यैभवेन्मम ॥ तुहिनानुस्मृतिःकिंस्याद्दहनप्राप्तयेवद ॥१४३४॥ ॥

यत्यस्मात् । अत्र स्थूलारुंधतीदृष्टांते ॥ १४३१ ॥ अतस्त्वदृष्टांतोप्यस्माकमेवानुकूलइत्याह ॥ अस्माकमिति ॥ ज्ञानानंद
मयीप्रभायस्यास्सातां । अप्राकृतकांतिमतीमित्यर्थः । अनुपमाअसदृशी तवोपमैवबलमासीदितिसंबंधः ॥ १४३२ ॥ १४३३ ॥
अनुकूलान्यप्राप्त्यातदनुगुणाफलप्राप्तिर्दृष्टा । नतुविरुद्धोपास्त्यातद्विरुद्धफलप्राप्तिरित्यत्रमंदानामपिबोधायपुनरपिदृष्टांतावाह

॥ अरणीस्थेति ॥ १४३४ ॥ किंचयथागुरोश्चरणसेवापिदेहाधिष्ठातृगुरुसेवैव तथाहरिप्रतिमासेवापिप्रतिमासन्निहितहरिसेवैव।
अतोपिनकुचोद्यावकाशइत्याह ॥ गुरोरिति ॥ १४३५॥ सएव आत्मैव ॥ १४३६ ॥ हियस्मात्। तत्र साधिष्ठानभगवदुपा
सने। अमुख्यतःउपास्यं यदधिष्ठानं। त दधिष्ठानं। तं ईश्वरं ।एवंचयदधिष्ठानंअमुख्यतयोपासते इदंब्रह्मन। किंतुतदेव

गुरोश्चरणकैंकर्यंगुरुकैंकर्यमेवयत् ॥ अतस्तत्प्रतिमाध्यानमपितद्ध्यानमेवनः ॥ १४३५ ॥
एवंचात्मैवसेव्योभूद्ध्यातव्योभूत्सएवहि ॥ श्रुतयस्स्मृतयस्तस्मादुपास्यंप्राहुरीश्वरं
॥१४३६ ॥ अधिष्ठानतयातत्रह्युपास्यंयदमुख्यतः ॥ नतद्ब्रह्मेतिचप्राहुर्मुख्योपास्यंचतं
जगुः ॥ १४३७ ॥ वस्तुतस्सूक्ष्मतारायास्समीपस्थेतिलौकिकाः ॥ स्थूलांतारांदर्शयं
तितद्भावंतत्रकोवदेत् ॥ १४३८ ॥ शाखाग्रदेशेनेंदोश्चस्यादादेशोविवेकिनां ॥ शाखा
ग्रैक्यंतुकोवक्तिमिथ्योपास्तिःकृतेस्तितत् ॥ १४३९ ॥ ॥ ॥

मुख्योपास्याधिष्ठातृभगवच्चैतन्यमेवत्वंब्रह्मविद्धीतिश्रुतेरर्थस्संपन्नः ॥ १४३७ ॥ किंचस्थूलतारायाअरुंधतीत्वेन शाखाग्रस्यच
चंद्रत्वेनोपास्तौ मिथ्योपासनमाशास्येतापि सैवनास्तीत्याह ॥वस्तुतइति॥ तद्भावः सूक्ष्मतारात्वं। तत्र स्थूलतारायां॥१४३८॥
तत्तस्मात् । इंद्रचंद्रेतियंकंचिद्राजानंस्तुवंतोपिगौण्याइंद्रादिवदैश्वर्यसंपत्तिमेवाभिप्रयंति । इंद्राद्यैक्यंतुमनसापिनस्मरंति।

अतोमिथ्योपास्तौनकिंचिन्निदर्शनं ॥ १४३९ ॥ अपिचइदमुपास्यं ब्रह्मनेतिश्रुतिःउपास्यस्यब्रह्मणोन्यत्वरूपमब्रह्मत्वमेवाह। नतुमिथ्यात्वं। एवंचैतच्छ्रुतिबलान्नोपास्यस्यमिथ्यात्वसिद्धिः। किंतुतवविवेकस्यैवमिथ्यात्वसिद्धिरित्याह॥ किंचेति ॥ उपास्ये त्वयोपास्यतयोक्ते। अघटः घटादन्यः॥ १४४० ॥ तन्नास्तिता उपास्यनास्तिता ॥ १४४१ ॥ नचेत् उपास्यब्रह्मणोन्यत्वंनचेत्। अन्यत्वोक्त्याउपास्यस्यमिथ्यात्वमेवोच्यतेचेदित्यर्थः । तद्विदितादन्यदेवेत्यनेन अन्यदेवतद्विदितादथोअविदितादितिवाक्यंगृ

किंचैवमप्युपास्येस्मिन्भेदेस्याद्ब्रह्मणोन्यता ॥मिथ्यात्वंतुकुतोहेतोरघटोनास्तिकिंपटः॥१४४०॥
उपासतेतुयदिदंनेदंब्रह्मेतितुश्रुतिः ॥ यदुपास्यंनतद्ब्रह्मेत्याहतन्नास्तिताकुतः ॥१४४१॥ नचेत्त
द्विदितादन्यदेवेतिश्रुत्युपक्रमात् ॥ ज्ञेयंचब्रह्मनेतिस्तांज्ञानोपास्तीमृषार्थयोः ॥१४४२॥ साम
स्त्याज्ञानमात्रेणज्ञेयादन्यद्यदीष्यते ॥ तर्ह्युपास्यादन्यदस्तुसमस्तोपास्त्यशक्तितः ॥ १४४३ ॥
आत्मावेत्येकवाक्योक्तेज्ञानोपास्तीकथंद्वयोः ॥ अनंतोपास्तिविधयोबाध्यंतेनोक्तिमात्रतः ॥ १४४४ ॥

ह्णाति। उपास्यंब्रह्मनेतिवत्ज्ञेयंचब्रह्मनाभूदितिहेतोः ज्ञानोपास्तीद्वेअपिमृषार्थयोःस्तां। मिथ्याभूतस्योपासनवत्ज्ञानमपिमिथ्या भूतस्यैवस्यात्। उपास्यादन्यद्ब्रह्म विदितादन्यत्ब्रह्मेतिवाक्ययोस्समानार्थकत्वात् । उपास्यंब्रह्मनेत्युक्तेपिउपास्यादन्यद्ब्रह्मे त्यर्थस्यैवपर्यवसानादितिभावः ॥१४४२॥ शंकते ॥ सामस्त्येति॥ उत्तरमाह॥ तर्हीति ॥१४४३॥ आत्मावेत्यनेन आत्मावाअरे



द्रष्टव्यश्श्रोतव्योमंतव्योनिदिध्यासितव्यइतिवाक्यंगृह्णाति । द्रष्टव्यइत्यादिविशेषणपदचतुष्टयेपि आत्मेतिविशेष्यपदस्यैवयो जनीयत्वादितिभावः। उक्तिमात्रतः केवलंत्वद्वचनमात्रेण। श्रौतानेकविधीनांवादिवाक्यमात्रेणबाधायोगादितिभावः॥१४४४॥ अन्यार्थं उक्तविधयाजीवब्रह्मभेदार्थं । अनुकूलं उक्तविधयाउपास्यमानसत्यत्वानुकूलमर्थंवा ॥ १४४५ ॥ श्रुतेरर्थांतरं चाह ॥ साक्षीति ॥ हेजीव साक्षिसिद्धंइदंतेरूपं ब्रह्मन। किंतु ते उप समीपे व्याप्ततया त्वद्धृदि तवपरितश्च यआस

अतश्श्रुतिस्मृतिशतैर्विहितोपास्तिगौरवात् ॥ अन्यार्थमनुकूलंवाभजेदर्थमियंश्रुतिः
॥ १४४५ ॥साक्षिसिद्धमिदंजीव तेरूपंब्रह्म नो प ते ॥ यदासतत्परंब्रह्मेत्याहसेयंश्रुतिः
किल ॥ १४४६ ॥ तस्माज्जीवेशभेदस्यसाधिकेयमभूच्छ्रुतिः ॥ उपास्यस्यतुमिथ्यात्वंनिर्नि
मित्तमभूत्तव ॥ १४४७ ॥ तृणंदग्धुंनशक्तोग्निर्मरुच्चालयितुंकिल ॥ गतागतोक्तिप्रत्यु
क्तिव्यापारैश्चेतनौहितौ ॥ अशक्तमेवंचैतन्यंदेवानामस्तितद्धृदि ॥ १४४८ ॥ ॥

तत्परंब्रह्मेतिश्रुतिराहेतिसंबंधः। किलेत्यनेनास्मिन्नर्थेउपनिषद्भाष्यसंमतिंसूचयति ॥ १४४६ ॥ तस्मा दुक्तार्थस्यपदशक्तिलभ्य त्वात् ॥ १४४७ ॥ किंच स्वशक्त्यैवदैत्याजिताइतिदेवमनसिस्थितमहंकारंमोचयितुंयक्षरूपेणागतंभगवंतंविचारयितुंअग्निः को णाधिपतिर्वायुश्चेतिद्वौदेवौप्रेषितौतेनस्थापितंशुष्कतृणमपिदग्धुंचालयितुंचनशक्तौकिल । तौचउत्तरप्रत्युत्तराभ्यांचेतनौ। एवंच

एकत्रनिर्णीतश्शास्त्रार्थोपरत्रापीतिन्यायेनसकलजीवदेहेष्वपिअशक्तंजीवचैतन्यमस्तीतितलवकारोपनिषद्बलादेवसिद्धं । बहुशोभमानामुमांहैमवतीं तांहोवाचकिमेतद्यक्षमिति ब्रह्मेतिहोवाच। ब्रह्मणोवाएतद्विजयेदेवाअमहीयध्वमिति। पुनःपार्वत्युपदेशेनसर्वशक्तंदेवासुरयुद्धेकृष्णरामादिवद्बहिर्योद्धृब्रह्मरूपस्याश्रौतत्वेनसर्वदेवांतर्यामिरूपस्यैवाविष्टभूतवद्योद्धृत्वस्यार्थतःप्राप्तत्वात्ईश्वरचैतन्यमपिसर्वदेहेष्वस्तीतितस्यामेवोपनिषदिप्रतिपादितं । एवंचसुशक्ताशक्तचैतन्ययोर्द्वयोश्श्रुत्याश्रौतार्थापत्त्याचसिद्धंजीवेश्वरभेदंकथंतवोपास्तिर्हन्यादित्याह ॥ तृणमित्यादिना ॥ किलेत्यनेन तन्नशशाकदग्धुं तन्नशशाकवातुमितिवाक्यंस्मारयति ।

विलक्षणतमंह्येतच्चैतन्यद्वितयंयदा ॥ सुराणामपिहृद्यस्तिनराणांहृदिकाकथा ॥ १४४९ ॥
विरुद्धार्थक्रियाकारिवैलक्षण्यमिदंतयोः ॥ कथंह्युपास्त्यामिथ्यास्यात्किमुपास्तिर्विषांकुरः
॥१४५०॥ यथायथाज्ञानिनस्तमधीश्वरमुपासते ॥ वस्तुस्थित्यातथैवासौभवतीशोनचान्यथा
॥१४५१॥ इत्येकवचनांतस्यभवतीत्यस्यसत्त्वतः ॥ अर्थोयमपिचश्रौतोमिथ्योपास्तिस्ततोपिन ॥१४५२॥

तत्तस्मात्दाहादावसामर्थ्यात् । देवानांहृदि ॥ १४४८ ॥ १४४९ ॥ विरुद्धार्थक्रियाकारि शक्तत्वाशक्तत्वाख्यविरुद्धक्रियाकारि । वैलक्षण्यं भेदः । उपास्त्येति मिथ्यात्वेउपास्तिमेवहेतुंकुर्वतांश्रुतियुक्त्यादिकंनास्तीतिसूचितं । मास्तुप्रमाणं उपास्तिशक्त्यैवमिथ्यात्वमस्त्वित्यांशंकांसोपहासंपरिहरति ॥ किमिति ॥ १४५० ॥ अधुनातंयथायथोपासतइतिश्रुतेस्सयुक्तिकमर्थांतरंवदन्साक्षादुपास्यस्यैवसत्यत्वंस्थिरीकरोति ॥ यथायथेति ॥ उपासतइतिबहुवचनबलाज्ज्ञानिनइत्युक्तं । सइत्यस्यार्थकथनंअसावी

श्वरइति । एवकारस्यार्थकथनंनचान्यथेति ॥ १४५१ ॥ १४५२ ॥ संभावितानेकार्थकथनमपिपूर्वाचार्याभिप्रेतमेवेत्याह ॥ त्रय इति ॥ १४५३ ॥ नचरमंत्यहोअसदुपासनयाआत्महनोजनाइतिश्रुतिगीतावचनेनापिविनिंदितमसदुपासनमित्याह ॥ अहोइ ति ॥ आत्महनःपरमात्महनः ॥ १४५४ ॥ श्रुतिः नेदंयदिदमुपासतइतिश्रुतिः । तेन असदुपासनाविनिंदनेन ॥१४५५ ॥ श्रव

प्राग्विभक्तेर्विपरिणत्यार्थोत्रतुयथाश्रुतः ॥ त्रयोर्थास्सर्ववेदेष्वित्यस्तियद्व्यासशासनं ॥१४५३॥
अहोनचरमंत्येतेतथैवात्महनश्श्रुते ॥ उपासतेयेत्वसत्यमित्याहश्रुतिगीतिका ॥ १४५४ ॥ अतो
विनिंदितामेतांकथंवक्तिश्रुतिस्सती ॥ तेनोपास्यंसमस्तंचसत्यमित्यागतंबलात् ॥ १४५५ ॥
ध्यानायमननंतस्मैश्रवणंदर्शनायतत् ॥ इतितेपिमतंतस्मादृष्टिध्यानेनभिन्नयोः ॥ १४५६ ॥
नचेत्तवाश्रुतध्यानमश्रुतेक्षणमेववा ॥ आपतेतद्वयंचापिनयुक्तंनापितेमतं ॥ १४५७ ॥ श्रवणं
करणंतत्वसाक्षात्कारश्चतत्फलं ॥ श्रवणादेवचध्यानंतत्रान्योर्थःकुतोपतत् ॥ १४५८ ॥ ॥

णमननिदिध्यासनापरोक्षज्ञानानांत्वयाप्येकविषयत्वांगीकारादपसिद्धांतश्चेत्याह ॥ ध्यानायेति॥ तस्मै मननाय । तत् श्रवणं ॥ १४५६ ॥ नचेत् ध्यानापरोक्षज्ञानेएकस्यनचेत् । श्रवणदर्शनयोरेकविषयत्वे अश्रुतस्यध्यानं । सत्यार्थदर्शनानुगुणसत्यार्थ श्रवणस्यासत्यार्थध्यानाननुगुणत्वात् । एवमेवश्रवणध्यानयोरेकविषयत्वेअश्रुतस्येक्षणमितिभावः ॥१४५७॥ तत्रध्याने ॥१४५८॥

प्रकारांतरेणाप्यपसिद्धांतमाह ॥ किंचेति ॥ १४५९ ॥ १४६० ॥ नचे त्सत्यस्योपासनंनचेत् । पूर्वोत्तरविरुद्धभाषित्वा दितिभावः । एतदेवाभिप्रेत्यप्रागस्माभिस्संगतिकालेकथितं ॥ १४६१ ॥ ततूस्व ग्रंथएवोक्तत्वात् । दूषणांतरंचाह ॥ नचे दिति ॥ नचेत् ध्यानश्रवणयोरेकविषयतानचेत् । अंगांगिता । ध्यानस्यांगिता श्रवणस्यांगतेत्यर्थः ॥ १४६२ ॥ एत

किंचासंभावनोच्छित्यैमननंकिलतेमते ॥ध्यानंचविपरीतार्थभावनोच्छित्तयेकिल ॥ १४५९॥
तद्ध्यानंविपरीतार्थविषयंचेत्कथंततः ॥ विपरीतार्थविषयभावनोच्छिद्यतेवद ॥ १४६० ॥ नचे
दुन्मत्तवार्तास्याच्छास्त्रवार्तातवाखिला ॥ १४६१ ॥ तन्निर्गुणार्थश्रवणेध्यानंनिर्गुणगोचरं ॥
त्वयापिसर्वथावाच्यंनचेदंगांगितैवन ॥ १४६२ ॥ यतःफलैक्येसतिसाबोध्यैक्येचफलैकता ॥
सत्यार्थश्रवणेतस्मात्सत्यार्थस्यैवभावना ॥ १४६३॥ मिथ्यार्थश्रवणेतुस्यान्मिथ्यार्थस्यापिभाव
ना ॥ तस्मादुपास्योभेदोस्तुसत्योप्यस्तुश्रुतीरितः ॥ १४६४ ॥ ॥ ॥

देवोपपादयति ॥ यतइति ॥ सा अंगांगिता । फलवत्सन्निधावफलंह्यंगं अफलं फलांतररहितमित्यर्थः । सर्वथाऽफलत्वेऽकार्य त्वप्रसंगादितिभावः । बोध्यैक्ये बोध्यस्य श्रवणविषयस्यध्यानविषयस्यचऐक्ये । विषयप्रतिपादनेनैवदार्ढ्याख्यफलजनकयोःप्र माणद्वययोरेकविषयत्वनियमदर्शनादितिभावः । तस्मात् श्रुतस्यैवभावयितुंशक्यत्वात् ॥ १४६३ ॥ तस्मा त्सत्यश्रवणेसत्यो



पासननियमात् । मिथ्याश्रवणस्यत्वयाप्यनंगीकारात् ॥१४६४॥ उपास्ते र्विपरीतभावनानिवारकोपास्तेः । अतः असत्योपास नस्यायोगात् । पूर्वोक्तवेदः नेदंयदिदमितिवेदः । आपातार्थः उपास्यमिथ्यात्वं ॥ १४६५ ॥ तांश्रुतिं जगद्गुरुःश्रीमुख्यप्राणः । योग्यार्थस्यत्वयापिवक्तव्यत्वात्अस्मदाचार्योक्तप्रकारेणैवश्रुतेरर्थंवदेतिभावः ॥ १४६६ ॥ १४६७ ॥ अधुनायदापश्यःपश्यतेरु क्मवर्णंकर्तारमीशंपुरुषंब्रह्मयोनिं । तदाविद्वान्पुण्यपापेविधूयनिरंजनःपरमंसाम्यमुपैतीतिश्रुतेरर्थपर्यालोचनायांसर्वेमध्वमतरह

उपास्तेरेवबलतोमिथ्यात्वंतुतवापिन ॥ अतःपूर्वोक्तवेदर्चोप्यापातार्थोनयौक्तिकः ॥ १४६५ ॥
योग्यार्थेतांनिनीषोस्तेगुरुरासीज्जगद्गुरुः ॥ अतोभेदश्रुतेरर्थंनभेत्तुंकोपिशक्नुयात् ॥ १४६६ ॥
पदद्वयाविरुद्धोयंश्रुत्यर्थःकेनचाल्यते ॥ तत्पदाभ्यांविरुद्धंतुतदैक्यंचलनोचितं ॥१४६७॥ पश्ये
ज्जीवोयदारुग्मवर्णंकर्तारमीश्वरं ॥ पुरुषंब्रह्मपितरंतदात्यक्त्वातमोंजनं ॥ विधूयसकलंकर्मपरं
साम्यमुपैतिच॥१४६८॥इतिजीवेशभेदस्यसाक्षात्कारेणहिश्रुतिः॥परमंमोक्षमाचष्टमुक्तस्यापि
भिन्नतां॥१४६९॥ नह्यंजनाख्यतमसःकर्मणोःपुण्यपापयोः ॥ क्षयःपरमसाम्यंचमहामोक्षमृतेभवेत् १४७०

स्यंतस्यपारमार्थिकताचसिद्धेत्याह ॥ पश्येदिति ॥ कर्तृपदसूचितकर्तृकार्यभावेन ईशपदसूचितस्वामिभृत्यभावेनच सकलजीव भेदस्य ब्रह्मयोनिपदेनचचतुर्मुखाख्यजीवभेदस्यचश्रुत्यैवसयुक्तिकंसाधितत्वाज्जीवेशभेदस्येत्युक्तं । भेदसापेक्षसाम्यस्यैवफलत याकथनात्मुक्तस्यापिचभिन्नतामित्युक्तं ॥ १४६८ ॥ १४६९ ॥ अवांतरमोक्षत्वशंकांपरिहरति ॥ नहीति ॥ १४७० ॥ भेदा

देरस्येतिसंबंधः । अस्या कारवर्णकर्तृत्वेशत्वब्रह्मपितृत्वाख्यधर्मसमुदायस्य । विशिष्टसाक्षात्कारेविशेषणसाक्षात्कारस्याप्यवश्य
कत्वादितिभावः ॥ १४७१ ॥ यस्मिन्कालेदर्शनं तस्मिन्कालेसाम्यमुपैतीत्युक्त्यादर्शनमोक्षकालयोरव्यवधानलाभात्पारंपर्यनि
षेधनादित्युक्तं । अस्यज्ञानस्य भेदाकारादिज्ञानस्य ॥ १४७२ ॥ अतः साक्षान्मोक्षोपयोगिज्ञानविषयत्वात् ॥१४७३॥१४७४॥

साकारस्यसवर्णस्यकर्तुस्सर्वेश्वरस्यच ॥ साक्षात्कारोस्यभेदादेःकिंनसाक्षात्कृतिर्वद
॥१४७१॥ यदातदेतिशब्दाभ्यांपारंपर्यनिषेधनात् ॥ साक्षान्मोक्षोपयोगित्वंज्ञानस्यास्य
निगद्यते ॥१४७२॥ अतस्साकारतावर्णःकर्तृत्वेशत्वपूर्वकः ॥ महिमाब्रह्मपितृताभिदा
चाबाध्यतामगात् ॥१४७३॥ यतस्साम्यंद्वयोरेवततोमोक्षेपिभिन्नता ॥ १४७४॥ एवंचत
त्ववाद्युक्ततत्वसर्वस्वमेवहि ॥ तत्वमासीदतत्त्वस्यदर्शनान्नहिमुक्तता ॥ अतोपिशंकापं
कस्यनावकाशोत्रकश्चन ॥१४७५॥ भिन्नाभिन्नादिकल्पोक्तदूषणैर्भेददूषणं ॥ जात्युत्तरं
हितत्सर्वंयत्खंडनकृताकृतं ॥ व्यावहारिकभेदस्याप्यपलापप्रसंगतः ॥ १४७६ ॥ ॥

शंकापंकस्य बाधादिशंकापंकस्य । अत्र द्वासुपर्णेतिश्रुत्याप्रतिपादितभेदे । एतच्छ्रुतिसमाख्ययासाप्यबाधितभेदपरैवेतिभावः
॥ १४७५ ॥ प्राक्भेदेक्रियमाणभिन्नादिविकल्पस्यदूषणस्यचऐक्येपिवक्तुंशक्यत्वात्स्वव्याहतिरित्युक्तं । अधुना एवंविकल्प्य
भेददूषणेकृतेस्वांगीकृतव्यावहारिकत्वस्यापिभंगप्रसंगात्स्वव्याहतिरित्याह ॥ भिन्नाभिन्नादीति ॥ १४७६ ॥ प्राग्विकल्पानां

दूषणानांचस्पष्टमनुक्तत्वात्इदानीमाह ॥भेदभेदइति॥ भेदस्य धर्मिणस्सकाशात्भेदइत्यर्थः॥१४७७॥ भेदभिन्नधर्मिणःपुनर्भेदात्भिन्नत्वकथनेआत्माश्रयप्रसक्त्या अभेदपक्षेआत्माश्रयदोषस्यापिसत्त्वात्आत्माश्रयानवस्थादिदूषणैरित्युक्तं । अस्यभेदस्य । या व्यावहारिकता ॥ १४७८ ॥ १४७९ ॥ तत्तस्मात् घटादिव्यावहारिकपदार्थेष्वप्यात्माश्रयादेर्दोषत्वस्यत्वयाप्यं

भेद्भेदेऽनवस्थानमभेदेचैकशेषता ॥ भेदाभेदेविरोधश्चेत्येतद्धितवदूषणं ॥ १४७७ ॥
आत्माश्रयानवस्थाद्यैर्दोषैर्भेदस्यदूषणे ॥ व्यावहारिकताप्यस्यकथंस्याद्यामताव
॥ १४७८ ॥ किंघटःपटहेतुस्तेपटोवाघटहेतुकः ॥ किंस्वयंस्वोपरिघटःकिंस्याद्धटपरंपरा
॥ १४७९ ॥ तद्व्यावहारिकेप्यर्थेदोषानस्युरिमेकथं ॥ १४८० ॥ अतस्तेव्यवहारायसमा
धानंह्यिद्भवेत् ॥ तदेवपारमार्थ्येपिसमाधानंभविष्यति ॥ १४८१ ॥ किंचतेपरमार्थैक्येविकल्पोदूषणानिच ॥ भवंत्येतानिसर्वाणिततस्तच्चमरिष्यति ॥ १४८२ ॥ ॥

गीकारात् । अर्थे भेदरूपेऽर्थे ॥ १४८० ॥ व्यवहाराय भेदेव्यावहारिकत्वव्यवहाराय । पारमार्थ्ये भेदपारमार्थ्ये । भेदस्यमिथ्यात्वात्अनवस्थादिकंनदोषइतित्वयापिनवक्तुंशक्यं । मिथ्याभूतघटेष्वेवएषांदोषत्वांगीकारात् । प्रकारांतरेणपरिहारेममापिसएवपरिहारोभविष्यतीतिभावः ॥ १४८१ ॥ प्रागुक्तस्वव्याहतिंचस्मारयति ॥ किंचेति ॥ तत्ऐक्यं ॥ १४८२ ॥ तत्रैक्ये । एत

त् विकल्पोदूषणंच ॥१४८३॥ श्रुत्यंतरमपिभेदेप्रमाणयति ॥ याश्रुतिरिति ॥१४८४॥ योग्यशेषंपूरयित्वाश्रुतेरर्थमाह ॥ जडं नात्मेति ॥ एकमेवाद्वितीयं नेहनानेत्यादौ द्विधानिषेधस्याभावेनद्वौनञौवृथेतिसंबंधः ॥ १४८५ ॥ जडंनेतिआत्मागृ ह्यइत्युक्त्याभेदप्राप्तिर्भवतीत्यत्रदृष्टांतमाह ॥ यथेति ॥ १४८६ ॥ १४८७ ॥ पूर्वोक्तनिदर्शनं यथाघटोनेतिपटोगृह्यइतिनिदर्श

मृतसंजीवनंतत्रयत्स्याद्भेदेपितद्भवेत् ॥ अतोयत्किंचिदेवैतदितिसर्वंमनोरमं ॥१४८३॥
याश्रुतिर्नेतिनेत्यात्मागृह्यइत्यादिरूपिणी ॥ साप्यात्मानंजडाज्जीवाद्भिन्नंवर्णयतिस्फु
टं ॥ १४८४ ॥ जडंनात्माजीवचिन्नात्मेत्यर्थोभवेन्मम ॥ तवद्विधानिषेधस्याभावेनद्वौ
नञौवृथा ॥ १४८५ ॥ यथाघटोनेतिपटोगृह्यइत्युदितेसति ॥ घटादत्यंतभिन्नोसौपट
स्सिद्ध्येन्नचापरं ॥ १४८६ ॥ तथाजडजगन्नेतिगृह्योजीवजगच्चन ॥ इत्यात्मागृह्यइत्युक्ते
कथमत्यंतभिन्नता ॥ जडजीवाख्यजगतोनसिद्ध्येत्परमात्मनः ॥ १४८७ ॥ द्विर्निषेधब
लाज्जीवजडयोश्चग्रहोध्रुवः ॥ मिथ्यात्वाशानुपूर्वोक्तनिदर्शनपराहता ॥१४८८॥ अन्य
मीशमितिप्राहजीवादन्यमधीश्वरं ॥ श्रुतिःप्राग्द्वासुपर्णेतिप्रोक्तवाक्यसमाख्यया ॥ १४८९ ॥

नं । घटोनेतिपटोगृह्यइत्युक्तेयथाघटस्यमिथ्यात्वंनायाति । प्रत्युततद्भेदएवपटस्यायाति । तथाजगन्नेत्यात्मागृह्यइतित्वद्रीत्यो क्तेपिजगतोनमिथ्यात्वं किंतुजगद्भेदएवआत्मनिसिद्ध्यतीतिभावः ॥ १४८८ ॥ भेदेश्रुत्यंतरंचाह ॥ अन्यमीशमिति ॥ श्रुतिः



आथर्वणोपनिषत् । प्राक्पूर्वभागे ॥ १४८९ ॥ अतः जीवादन्यमित्युक्तं तंपरमात्मानं ॥ १४९० ॥ त्रितयज्ञानतः अन्यत्वस र्वेश्वरत्वसगुणत्वज्ञानतः । अन्य मीशं अस्यपरमात्मनःमहिमानंच इति द्वासुपर्णेत्यादिवाक्योक्तप्रकारेण योवेत्ति सवीतशो कोभवतीतिवाक्यार्थलाभात्त्रितयज्ञानतइत्युक्तं ॥ १४९१ ॥ तस्मादेतच्छ्रुतिबलात् ॥ १४९२ ॥ अस्याः श्रुतेः ॥ १४९३ ॥

घटकुड्यवदन्यत्वेसाम्यंस्यात्तेनतंश्रुतिः ॥ ईशमाहगुणाख्यंचमहिमानंपुनर्जगौ ॥ १४९० ॥
त्रितयज्ञानतोजीवोवीतशोकोभवेत्किल ॥ इतिशब्देनतज्ज्ञानंसप्रकारकमाहच ॥ १४९१ ॥
साक्षान्मोक्षप्रदत्वोक्त्यातत्वमासीदिदंत्रयं ॥ तस्माद्भेदस्साम्यंचनैर्गुण्यंचनिराकृतं ॥१४९२॥
वीतशोकइतिप्राहयतस्सज्ञानिनःफलं ॥ ततोजीवेशभेदेस्यास्तात्पर्यंचावगम्यते ॥ १४९३ ॥
एषसर्वेश्वरइतिकाचिद्व्यक्तितमीश्वरं ॥ ससर्वस्यवशीसर्वस्येशानइतिचापरा ॥ अतस्सयुक्ति
कःस्वामिभृत्यभेदश्श्रुतौश्रुतः ॥ १४९४ ॥ यआत्मनिसदातिष्ठन्नात्मनोंतरइत्यपि ॥ तेंतर्या
म्येषइत्याद्याश्श्रुतयस्सूत्रसूचिताः ॥ जगुर्जीवेशयोर्भेदंशतशोथसहस्रशः ॥१४९५॥ ॥

काचित् मांडूकोपनिषत् । अपरा सर्वस्यवशीसर्वस्येशानइत्यादिरूपाबृहदारण्यकोपनिषत् । मांडूकोपनिषदि एषसर्वेश्वरएषस र्वज्ञएषसर्वांतर्याम्येषयोनिस्सर्वस्येतिसर्वेश्वरत्वेसर्वज्ञत्वादियुक्तित्रयकथनात् बृहदारण्यकेच सर्ववशित्वादियुक्तिकथनात्सयुक्ति कइत्युक्तं ॥ १४९४ ॥ यआत्मनीत्यनेन यआत्मनितिष्ठन्नात्मनोंतरोयमात्मानवेदेतिबृहदारण्यकवाक्यंगृह्णाति । तेअंतर्यामीत्य

नेन एषतआत्मांतर्यामीतितत्रत्यंवाक्यांतरंगृह्णाति। एतेषांवाक्यानां शारीरश्चोभयेपिहिभेदेनैनमधीयते अंतर्याम्यधिदेवादिषुतद्ध र्मव्यपदेशादितिसूत्रद्वयविषयवाक्यत्वात्सूत्रसूचिताइत्युक्तं ॥ १४९५ ॥ योलोकत्रयमाविश्येतियुक्तिकथनात्सयुक्तिकमित्युक्तं ॥१४९६॥ आत्मपदार्थमाह ॥ चेतनेष्विति ॥ अथवाआत्मनिपरमात्मनिजीवादिभ्योभिदाबोधइतियोजना। छेदे पदच्छेदे। कथंबोधच्छेदइत्यतआह ॥ बोधाभावमिति ॥ काविद्येतिप्रश्नस्यबोधाभावोविद्येत्युत्तरस्यचविद्याभावएवविद्येत्यत्रपर्यवसानेन

उत्तमःपुरुषस्त्वन्यःपरमात्मेत्युदाहृतः ॥ योलोकत्रयमाविश्यबिभर्त्यव्ययईश्वरः ॥ इतिगी तासुभेदोयंसयुक्तिकमुदाहृतः ॥ १४९६ ॥ विद्यात्मनिभिदाबोधइतिभागवतेहरिः ॥ विद्या केतिपुराप्रष्टोभिदाबोधंकिलोक्तवान् ॥१४९७॥ चेतनेष्वात्मसुभिदाजात्येकवचनादियं ॥अबो धइतिचच्छेदेबोधच्छेदोभविष्यति ॥ बोधाभावंहिकोबोद्धाविद्यांबुद्धिमतेवदेत् ॥ १४९८ ॥ राजातत्पुरुषोमेनेनान्यस्यपदसेवनं ॥ बहुव्रीहेस्तुचोरस्यस्याच्चास्यान्यानुयायिता ॥ १४९९ ॥

परस्परविरुद्धत्वादितिभावः। उपलक्षणंचैतत्। भेदद्रष्टेतिप्रागुक्तसमाख्याबोधच्छेदोपिग्राह्यः ॥१४९७॥१४९८॥ ननुनबोधः अबोधइत्युक्तेभवत्येवविरोधः। नविद्यतेबोधोयस्मात्सइतिसमासेकथंविरोधइतिचेत्। न। तथापिबोधाभावप्रवेशस्यापरिहाराद्वि रोधएव। अन्यपदार्थप्रधानबहुव्रीहेस्स्वपदमात्रप्रधानस्यतत्पुरुषस्यश्रेष्ठत्वाच्चनासौसमासइत्येतमर्थंसाहित्यमुद्रयाऽऽह ॥राजेति॥

तत्पुरुषस्यश्रेष्ठत्वाद्राजेत्युक्तं । अन्यस्य यस्यसतथेतिवाक्यांतरस्य । पदं यस्येतिपदं । यद्वाअन्यस्यप्रतिपादकंवापदं तस्यसेवनं। बहुव्रीहिवदन्यपदार्थप्रधानोनभवतीत्यर्थः । राजायथाऽन्यपदानुसरणंनकरोतितथेतिध्वनिनाराजोपमा । चौर्येणबहुव्रीहिमांश्चो रोपिभवतीत्यतश्चोरस्येतिबहुव्रीहेर्विशेषणमुक्तं । स्वस्मिन्धनाभावात्चोरोप्यन्यानुयायी । अयमपितथेतिभावेनोक्तं अन्यानु यायितेति ॥ १४९९ ॥ तथापिप्रकृतेकिमित्यतआह ॥ श्रेष्ठमिति ॥ समारूढइशब्दःप्रधानसमासेसत्यप्रधानसमासायोगा दितिभावः । किंचतत्पुरुषपक्षेदमइंद्रियनिग्रहइत्यादाविवप्राक्शंकितविद्यांविद्यापदेनानूद्यभिदाबोधइतिभिदाबोधस्यैवविद्यात्व विधानंकरोतीतिवाक्यार्थःसंभवति । अस्यैवविशेष्यपदत्वात् । बहुव्रीहौत्वस्यविशेषणपदत्वात्विशेष्यपदांतरमध्याहार्यं ।

**श्रेष्ठंपदंसमारूढःकथंनीचोबुभूषति ॥ शंकास्कंदितमूर्तिस्साविद्यानोर्ध्वंययियासति ॥१५००॥**

**स्थानांतरेष्वदृष्टोस्यानस्थानद्वयसंगमः ॥ स्त्रीपुंसयोश्चयोगोयंस्सूतेदोषकुमारकं ॥ १५०१ ॥**

तथाअतोपितत्पुरुषएवश्रेयान् । तथाचप्रायपाठविरोधः । तत्पुरुषयोश्चभवत्तत्पुरुषस्यविरुद्धत्वेनाभावघटिततयागुरुत्वेनासमर्थ तयाक्लिष्टत्वेनचास्मत्तत्पुरुषएवश्लाघ्यः । नन्वनुवादकपदमेवविधायकवाक्येपिविशेष्यतयासंबध्यतइतिचेत् । तत्राह ॥ शंकेति॥ शंकायांशंकाग्रंथेआस्कंदिताप्राधान्येनविद्यमानामूर्तिर्यस्यास्सातथोक्ता । साविद्या तदनुवादरूपतयाऽस्मिन्वाक्येविद्यमानाविद्या। विद्यापदमित्यर्थः । ऊर्ध्वं विधायकवाक्यमूर्धनि । आवृत्तेरपिदोषत्वात्अयमपिपक्षोनसाधीयानितिभावः । शंकाग्रंथादपिनावृत्तिः तदनुवादरूपादस्माद्ग्रंथादपिनावृत्तिरितिसूचनायशंकास्कंदितमूर्तिरित्युक्तं ॥ १५०० ॥ अस्मिन्पक्षेदोषांतरंचाह ॥ स्थानांतरे

ष्विति ॥ जिह्वोपस्थजयोधृतिः । शमोमन्निष्ठताबुद्धेर्दमइंद्रियनिग्रहइत्यादावदृष्टः । स्थानद्वयसंगमः अनुवादस्थानेविधिस्था
नेचसंगमः । अस्याःविद्यायाः ।विद्यापदस्येत्यर्थः । नेतियोजना । स्थलांतरेष्वावृत्तेरदर्शनात्अत्रैवकथमावृत्तिरितिभावः। दोषां
तरंचाह ॥ स्त्रीपुंसयोरिति ॥ स्त्रीलिंगपुल्लिंगयोरित्यर्थः । बहुव्रीहेर्विशेष्यलिंगत्वनियमात् विशेष्यस्यचस्त्रीलिंगत्वात्भिदा
बोधेतिपदप्रयोगःस्यात् । तत्पुरुषेतुबोधस्यैवविशेष्यत्वात् तस्यचनित्यपुल्लिंगत्वात्नकाप्यनुपपत्तिरितिभावः । स्त्रीपुरुषयोगेपुत्रो
त्पत्तेरावश्यकत्वात्दोषकुमारकमित्युक्तं ॥ १५०१ ॥ क्रियापदादेरध्याहारसंभवेपिरूढिंविनायोगमात्रेणैवप्रवृत्तस्यसाकांक्षविशे

अध्याहारोबहुव्रीहिवृद्ध्यैकिंस्याद्विचारय ॥ १५०२ ॥ तर्हिसत्सदसच्चासन्नचकालजवोपिन ॥
यदाशास्त्रंसमाकृष्यशयीतसलिलेहरिः ॥ १५०३ ॥ आरुवन्देहिदेवेषुवायुस्तस्यप्रसादतः ॥ १५०४ ॥

षणपदरूपबहुव्रीहेःप्रधानभूतविशेष्यपदस्यैवाध्याहारोमहादोषइत्येतत्साहित्यमुद्रयोपपादयति ॥ अध्याहारइति ॥ यथाअधि
काहारेक्रियमाणेगृहस्थितबहुव्रीहेरेवनाशोभवति । तथाऽध्याहाराभावेपिपूर्वोत्तरवाक्यसमाख्ययासंभवत्प्रधानसमासेसति शाका
द्यध्याहारंविनाप्रधानान्नस्यैवाध्याहारेबहुव्रीहिनाशवत्प्रधानपदाध्याहारसापेक्षोबहुव्रीहिरेवायमनपेक्षस्स्यादितिभावः ॥१५०२॥
प्राग्भेदेप्रमाणतयोक्तश्रुतिगीतावाक्यस्यविस्तरेणार्थंवदंस्तत्समाख्यबलात्तेनैवकृतेऽस्मिन्नपिवाक्येतदनुसारेणैवार्थोवक्तव्यइत्याह॥
तर्हीति ॥ यदाशयीततर्हीतिसंबंधः । उभयमित्यस्यार्थस्सदसदिति । मूर्तामूर्तयोरेकत्वायोगात्सन्नित्य मसदनित्यमितिव्युत्प

त्त्या नित्यानित्यपुराणादिकमनेनगृह्यते । शयीतेत्यस्ययोग्यतयाशेषपूरणंसलिलइति । अपकृष्येत्यस्यार्थकथनंस्वहृद्गुहांप्रवश्येति
॥ १५०३ ॥ १५०४ ॥ तदाप्रलयकाले । तर्हीत्यस्यार्थोयं । ईशेतियोग्यतयाहरेस्संबोधनं । प्रलयेसंसारिणांसुप्तत्वेनस्मरणासंभ
वात्स्मृतेर्गताइत्युक्तं । जनिमृतिपदाभ्यांभगवन्निष्ठंतत्कर्तृत्वंलक्ष्यते । जगज्जन्मादिकारणत्वं। अतएवपरमात्मनिभेदंचयेस्मरंती

तदाप्रागसतोजन्मसतोमृतिमथात्मनि ॥ भिदांचयेपणमृतेस्मरंतीशस्मृतेर्गताः॥१५०५॥ तेषा
मुपविशाम्नायध्वनिंवैकुंठवासिनां ॥ इत्याहश्रुतिगीतायांभगवान्बादरायणः॥१५०६॥मूर्तामू
र्ताख्यभूतानांलयोब्रह्मलयःकिल ॥ कालस्यरूपमात्रंतुतदाप्यस्तिजवोस्यन ॥ जरामरणयोग्य
स्यजवार्हजगतःक्षयात्॥१५०७॥ नित्यवेदात्मकंशास्त्रमपकृष्यस्वहृद्गुहां॥ प्रवेश्यशेतेकिलसव
टपत्रपुटेप्रभुः॥१५०८॥एवंचब्रह्मकल्पांतेसंतिसंतस्स्मरंतिच ॥जगतांजन्ममरणेपरमात्मनिस
र्वतः ॥१५०९॥ भिदांचेत्यागतंस्पष्टंशयानस्यतुदेहिता ॥ स्मर्तृणांबहुताचार्थात्प्राप्ताशब्दार्थवि
न्मते ॥१५१०॥ यतोजडद्वयंमुक्तौमुक्ताश्चबहवोभवन्॥तेनाद्वितीयतामुक्तौशुक्तौरूप्यमभूत्तव॥१५११॥

त्यर्थः । प्रकारांतरेणपदच्छेदासंभवात्निरवकाशमिदंपद्यं ॥ १५०५ ॥ १५०६ ॥ १५०७ ॥ १५०८ ॥ एतद्वाक्यफलितमाह
॥ एवंचेति ॥ भिदांचस्मरंतीतिसंबंधः ॥ १५०९ ॥ १५१० ॥ जडद्वयं वेदकालात्मकं । तेनकारणेन । तवमते । मुक्तावद्वि

तीयता ॥ १५११ ॥ ननुजीवन्मुक्तिदशेयंभवत्वित्यतआह ॥ जीवन्मुक्तिर्हीति ॥ देहादौसति सत्येवजीवन्मुक्तिरंगीक्रियते। शुकनारदादौतथादर्शनात् । इयं चराचरसकलजगत्क्षयरूपापरममुक्तिः । परांतकालात् ब्रह्मणश्शतायुरात्मकपरस्यांतकालात् ॥ १५१२ ॥ भिदामित्युक्त्याभेदः स्मरंतीत्युक्त्यातद्बोधइतिविवेकः । श्रौतस्मृतेः श्रुतिमूलव्यासवाक्यात्मकस्मृतेः ॥१५१३॥ यत्यस्मात् । उदिता परमात्मनः। अतः मुक्तावपिभेदस्मरणकथनात् । तत् भेदात्मकंतत्वं । तद्बोधःभेदबोधः । तस्माद्भिदा

जीवन्मुक्तिर्हिदेहादौसतिमुक्तिरियंपरा ॥ परांतकालादपरोमुक्तेःकालोनयौक्तिकः ॥ १५१२ ॥ तदापिभेदस्तद्बोधश्चास्तिश्रौतस्मृतेर्बलात् ॥१५१३॥ आत्मनीतिहिसप्तम्या यद्भेदाधारतोदिता ॥ अतस्तत्परमंतत्वंविद्यातद्बोधएवहि ॥ १५१४ ॥ भेददृष्ट्याभिमानेननिस्संगेनापिकर्मणा ॥ इत्याहसप्रभुर्व्यासोमोक्षसाधनबोधने ॥ १५१५ ॥ ॥

याबोधइत्येवसमासोवक्तव्यः नत्वपरइतिभावः ॥ १५१४ ॥ भेददृष्टेर्मोक्षसाधनविरक्तिभक्तिभ्यांसहभागवतएवपाठात्भिदाबोधएवविद्या। नत्वबोधइत्याह ॥ भेददृष्ट्येति ॥ भेददृष्ट्या भगवतिभेदापरोक्षज्ञानेन । अभिमानेन तस्मिन्भगवत्येवममायंस्वामीतिस्नेहेन। भक्त्येत्यर्थः । इतरत्स्पष्टं । ज्ञानेनेत्येवोक्तेऐक्यज्ञानस्यापिप्राप्तेस्तन्निरासायभेददृष्ट्येतिज्ञानंविशिनष्टि । भक्तेस्स्वरूपापरिज्ञानात्अभिमानेनेतितांचविशिनष्टि । कर्मणोप्रधानसाधनत्वात्तस्यज्ञानभक्तिसाम्यंगर्हयितुमपिपदं । अनेनवैराग्यमुपल

क्ष्यते । एतदुपलक्षितवैराग्यसमुच्चयायवाअपिपदं ॥ १५१५ ॥ सैवनिवृत्तिरेव ॥ १५१६ ॥ यां ज्ञानाख्यभेददृष्टिं । पुरा भक्तेःपूर्वं । अकाराख्यकुठारेण अबोधइतिपदच्छेदेभेंददृष्टिनिंदकोयमकारः । तेनकुठारेण । तां ज्ञानभक्तिविरक्त्याख्यमोक्षसाधनेषुप्रथमांभेददृष्टिं ॥ १५१७ ॥ ततस्तस्मात् । अबोधः पूर्वोक्तरवाक्यार्थाबोधः ॥ १५१८ ॥ इममेवार्थंसाहित्यमुद्रयाऽलंकरोति ॥ द्विरूपेति ॥ द्विरूपा अबोधबोधाख्यरूपद्वयानुकूलेवस्थितापि एकरूपा समासप्राधान्यादिनाबोधइत्येवरूपवती ।

भगवत्यभिमानोहिभक्तिर्निस्संगकर्मच ॥ निवृत्तिस्सैवविद्वाद्भिर्विरक्तिरितिचोच्यते
॥ १५१६ ॥ भेददृष्टिंचतत्पङ्क्तौज्ञानाख्यांयांपुराजगौ ॥ अकाराख्यकुठारेणकिंतांहंति
मुरांतकः ॥ १५१७ ॥ तदबोधस्तवैवासीद्भेदोयमकुतोभयः ॥ १५१८ ॥ द्विरूपाप्येकरू
पायारथिसारथितांव्यधात् ॥ सेयंवाक्यार्थकल्पामेत्वंचापार्थोभवोध्रुवं ॥ १५१९ ॥

रथिसारथितां अंततस्सिद्धरूपेणपरंप्रतिरथित्वं स्वयुक्तिरूपेणसारथ्यंच । अथवा भेददृष्ट्या भिदांस्मरंतीति निरवकाशरूपं भिदाबोधइतिसावकाशरूपंचयस्याःभागवतवाचः साद्विरूपा । यद्वा आपाततोव्यावहारिकत्वशंकार्हा । साक्षान्मोक्षसाधनत्वसाक्षान्मोक्षकालीनत्वयुक्त्यातदनर्हाचेतिद्विरूपा । एतादृश्यपियापुनरेकरूपा निरवकाशवाक्यद्वयसमाख्ययाअस्याअपिनिरवकाशत्वप्राप्त्यासर्वापिनिरवकाशत्वाख्यैकरूपा । रथिसारथितां परंप्रतियुद्धायप्रयुक्तत्वात्भिदाबोधइतिश्लोकोरथी । निरवकाशसमाख्या

रूपतयाइमौश्लोकौसारथी । इमौवाश्लोकौ भेदसाधकतयापरंप्रत्यपिप्रयोक्तुंशक्यत्वाद्रथिनौ । मुक्तिकालीनत्वमोक्षसाधनपङ्क्तिस्थ
त्वाख्ययुक्तिगर्भत्वात्सारथिनौच । एवंच द्वेधाद्विरूपत्वमेकरूपत्वंच । त्रेधारथिसारथित्वं । एकंविचार्यवाक्यं समाख्यावाक्यद्वयंचे
तित्रयश्चपार्थालब्धाइतिद्रष्टव्यं । अतएवाह ॥ सेयंवामिति ॥ पार्थकल्पा पार्थत्रयकल्पा । एकपार्थेनेवईदृशनिरवकाशैकवाक्ये
नैवपरोजेतुंशक्यते । बहुतरवाक्येषुसत्सुकिंवक्तव्यमितिभावेनपार्थत्रयकल्पेत्युक्तं । अपार्थः प्रत्युत्तरासमर्थत्वाद्व्यर्थः । अस्माकमि
वनिरवकाशवाक्यरूपपार्थरहितत्वात्अपार्थश्च । पार्थस्यापिपिंडरूपेणसहप्राक्द्विरूपस्य पुनःपुंरूपस्यैवदर्शनात्द्विरूपत्वमेकरूपत्वं

अतोममगृहान्नीताभवतोप्युत्तराकृतीः ॥ गागृह्णामिनसंदेहस्त्वंतुदुर्योधनोभव: ॥ १५२० ॥
यथैषापुरुषेच्छायाएतस्मिन्नेतदाततं ॥ इतिश्रुत्यायतोबिंबप्रतिबिंबत्वमुच्यते॥ १५२१ ॥ श्रुत्या
सर्वोपसंहारीदृष्टांतोयमुदीरितः ॥ उपमाशास्त्रतत्वज्ञामुख्यांतामुपमांविदुः ॥१५२२॥ छाया
हिपुरुषाकारापुरुषाधीनचेष्टिता ॥ भिन्नाचजीवेतादृक्त्वंसिद्धंदृष्टांतशोधने ॥१५२३॥ ॥

चरथित्वंसारथित्वंचउत्तरगोग्रहणेप्रसिद्धमेव ॥ १५१९ ॥ अतः निरवकाशभगवद्वाक्यविरुद्धत्वात् । गाःतवैक्यश्रुतीः । दुर्यो
धनः युद्धासमर्थः ॥ १५२० ॥ बिंबप्रतिबिंबभावेनचजीवपरमयोर्भेदसाधिकांश्रुतिमेवोपादत्ते ॥ यथैषेति ॥ १५२१ ॥ सर्वो
पसंहारी सर्वप्रकारैस्साम्यंदार्ष्टांतिकेउपसंहरन् । अयं पुरुषरूपःछायारूपश्च । पुरुषोदेहः ॥ १५२२ ॥ कासादृष्टांतगतसर्वोपमा ।
यस्याःदार्ष्टांतिकेउपसंहारइत्यतआह ॥ छायेति ॥ तत्समाकारत्वं तदधीनसर्वचेष्टावत्त्वंतद्भिन्नत्वंचछायायांदृष्टं । अतस्तस्या



दार्ष्टांतिकेजीवेपितादृक्त्वंईश्वराकारसदृशाकारत्वं ईशाधीनसर्वचेष्टावत्त्वं ईश्वरभिन्नत्वंचसर्वोपसंहारिदृष्टांतसाधनेसिद्धमिति
भावः ॥ १५२३ ॥ दृष्टांतेभेदसिद्धिप्रकारंविवेचयंस्तदुपमयैवसिद्धस्यजीवेश्वरभेदस्य एतस्मिन्ब्रह्मणि एतज्जीवादिकंजगदातत
माहितमिति आधाराधेयभावेनापिसाधनात्श्रुतेर्भेदेमहातात्पर्यंचास्तीत्याह ॥ छायाख्येति ॥ पुंससकाशादित्यर्थः । सा भिन्न
ता ॥ १५२४ ॥ १५२५ ॥ अस्यजीवस्य । तच्छब्दात् उपमाबलागतच्छायाशब्दात् । अविरोधेसर्वोपसंहारिदृष्टांतस्थलेराजेव

छायाख्यतमसःपुंसोभिन्नतासर्वसंमता ॥ पुनराधेयतोक्त्यासासतात्पर्यमुदीर्यते ॥ १५२४ ॥
जीवस्यभृत्यताचायाच्छायाशब्दप्रयोगतः ॥ अनुकूलंप्रियंभृत्यंछायेत्याहुःप्रियंवदाः ॥१५२५॥
प्रतिबिंबत्वमप्यस्यतच्छब्दादेवसिद्ध्यति ॥ प्रतिबिंबंप्रतिच्छायेत्याहुर्यदनुशासने ॥ १५२६ ॥
साम्यंयत्किंचिदेवेतिदृष्टंदृष्टांतएवहि॥नहिज्ञानबलादेश्चच्छायापुरुषसंमिता ॥१५२७॥ ॥

राजतेचंद्रइत्यादाविवशब्दसाम्यमप्यायातीतिभावः । यत्यस्मात् । अनेनभगवत्प्रतिबिंबत्वाच्चजीवस्यछायापदवाच्यत्वमस्तीतिसू
चितं । अतोपिछायाशब्दइतियुक्तं ॥ १५२६ ॥ ननुसर्वोपसंहारिदृष्टांतात्सर्वसाम्येज्ञानबलादिनापिजीवपरमयोस्साम्यंस्यादित्य
तआह ॥ साम्यमिति ॥ यत्किंचिदल्पं प्रमाणविरुद्धसाम्यंविहायाविरुद्धंसर्वसाम्यमितिभावः । ज्ञानबलादे र्ज्ञानबलादिसह
कारित्वात् । यथादेहेज्ञानबलादिसहकारित्वमस्तितथाछायायामभावात्अविरुद्धसर्वसाम्यमेवेतिभावः ॥ १५२७ ॥ छायादृष्टां

तेनजीवेसिद्धंप्रकारमुक्त्वापुरुषदृष्टांतेनजगदीश्वरेसिद्धंप्रकारमप्याह ॥ आधारतेति ॥ तच्छब्दात् उपमाबलेनपरमात्मन्यागतपुरुषशब्दात् ॥ १५२८ ॥ प्रकारांतरेणापिपुरुषशब्दस्यदार्ष्टांतिकेआवृत्तिमुपपादयति ॥ यदिति ॥ यत्यस्मात् । दार्ष्टांतिके एतस्मिन्निितिवाक्येपि । तत् पुरुषपदमेवविशेष्यपदं । तस्मात्आवर्त्यमेव । एतस्मिन्निितिविशेषणपदस्यकिंचिद्विशेष्यपदमपेक्षितं । तच्चाध्याहारादप्यावृत्तेरेवांतरंगत्वात्पुरुषपदमेवेतिभावः ॥ १५२९ ॥ ननुराजेवचंद्रइत्यत्रापिकुतश्शब्दसाम्यमित्यतआह ॥ य

आधारतास्वामिताचतथासाकारताहरेः ॥ सिद्धापुरुषदृष्टांतात्तच्छब्दात्पूर्णतापिच ॥ १५२८ ॥ यद्विशेष्यपदंदार्ष्टांतिकेप्यावर्त्यमेवतत् ॥ १५२९ ॥ यथातथेत्युक्तसाम्यंशब्दसाम्येतिशोभते ॥ छायाख्योपमयाजीवमेवैतदितिवाग्जगौ ॥ १५३० ॥ साकारस्य सदृक्षोयत्साकारस्स्यान्नचापरः ॥ नचेद्यथातथाशब्दौवितथावितिमेमतिः ॥ १५३१ ॥ बाधितंतुविनासर्वसाम्यंतौनैवमुंचतः ॥ किंनसर्पोपमारज्जौसर्पाकारेणकेवलं ॥१५३२॥

थातथेति ॥ नन्वेतदाततमित्यत्रैतत्पदेनजीवस्यकुतःकथनमित्यतआह ॥ छायेति ॥ एतत्पदस्यसामान्यपदत्वेपितस्यछायोपमाबलात्जीववाचकत्वनिर्णयइत्यर्थः ॥ १५३० ॥ छायास्थानीयत्वेपिकुतोजीवइत्यतआह ॥ साकारस्येति ॥ पुरुषपदसामर्थ्येनबिंबस्यसाकारत्वेसिद्धे साकारस्यतस्यछायास्थानीयोपिसाकारोजीवएवभवेदितिभावः ॥ १५३१ ॥ तौ यथातथाशब्दौ ।

उपमायामाकारसाम्यस्याप्यावश्यकत्वेदृष्टांतमाह ॥किंनेति ॥१५३२॥ जीवस्यब्रह्मसदृशाकारत्वेश्रुतिमप्याह ॥रूपंरूपमिति॥ अनेन रूपंरूपंप्रतिरूपोबभूवतदस्यरूपंप्रतिचक्षणायेतिश्रुतिंगृह्णाति । इंद्राख्यहरेःरूपंरूपंप्रतीतिसंबंधः । तत्कृतोपमौ तेन बिंब प्रतिबिंबभावेन कृतोपमौ । तत्रश्रुतौ । इंद्रत्वं इंद्रोमायाभिरितिश्रवणात् । तत्इंद्रत्वं । तयाश्रुत्या । एतयोः बिंबप्रतिबिंबभू

रूपंरूपंप्रतींद्राख्यहरेर्जीवस्तनौतनौ ॥ प्रतिरूपोबभूवेतिस्पष्टंतद्रूपरूपिता ॥ १५३३ ॥
उक्ताश्रुतौततोप्येतौसाकारौतत्कृतोपमौ ॥ इतिसिद्धंतथातत्रबिंबस्येंद्रत्वमीरितं
॥ १५३४ ॥ परमैश्वर्यरूपंतज्जीवास्सर्वेप्यतादृशाः ॥ अतोविसदृशत्वंचतयैवप्रोक्तमे
तयोः ॥ १५३५ ॥ एवंचप्रतिरूपोयंरूपाद्भिसदृशत्वतः ॥ भिन्नश्छायावदित्यच्छारत्न
च्छायापिह्युत्तमः ॥ तिरस्करोतितेनोक्ताप्युपमाऽसकलोपमा ॥ १५३६ ॥ विष्णोश्चबिं
बतातस्माद्भिन्नस्यैवात्रवर्ण्यते ॥ १५३७ ॥ किंचित्साम्यादधीनत्वाज्जीवस्यप्रतिबिंबता॥
विष्णोश्चबिंबताकिंनभिन्नयोरेववर्ण्यते ॥१५३८॥ बिंबस्यप्रतिबिंबैक्यंनस्मरोक्तंनविस्मर ॥१५३९॥

तेंद्रजीवयोः ॥ १५३३ ॥ १५३४ ॥ १५३५ ॥ अतएवबिंबप्रतिबिंबयोर्भेदश्रुतिमूलमनुमानमप्यभूदित्याह ॥ एवंचेति ॥ छायाव त्पुरुषाद्भिन्नच्छायावत् । रत्नच्छाया अनुमानाख्यारत्नच्छाया। असकलोपमेतिपदच्छेदः॥ १५३६ ॥ तस्मा त्परमैश्व र्यस्यविष्णोरन्यत्रासंभवात् ॥ १५३७ ॥ १५३८ ॥ उक्तं यथैषापुरुषइतिप्राचीनश्रुतावुक्तं ॥ १५३९ ॥ तदेवविशिनष्टि ॥

छायापुरुषेति॥उक्तश्रुतौ प्रागुक्तश्रुतौ । उपलक्षणंचैतत् । अस्यामपिश्रुताविंद्रशब्देनवैसादृश्यसूचनादित्यपिद्रष्टव्यं ॥१५४०॥ बिंबप्रतिबिंबयोर्भेदेपरप्रक्रियायैवयुक्तिमाह ॥ प्रत्यगिति ॥ तेमूलभाष्ये । युष्मदस्मत्प्रत्ययगोचरयोर्विषयविषयिणोस्तमःप्रकाश योरिवविनेतरेतराभावइतिसंकरभाष्ये । प्रत्यक्पराग्भावतः विषयिणःअस्मत्पदोक्तप्रत्यग्भावात् । विषयस्ययुष्मदस्मत्पदोक्तपराग्भा वादित्यर्थः । कथंप्रत्यग्भूतमात्मतत्वंपराग्भूतंविषयतत्वंस्यादितितट्टीकायांव्याख्यानात्युष्मदस्मच्छब्दौपराक्प्रत्यग्भावपरौ । एवंच प्रत्यक्पराग्भावाख्ययुक्त्याविषयोविषयीनेतिभवद्भाष्यएवसाधितत्वात् । पराक्प्रत्यगभिन्नता पराक्प्रत्यग्भूतबिंबप्रतिबिं

छायापुरुषदृष्टांताद्बिंबस्यपरमात्मनः ॥ प्रतिबिंबात्मकाज्जीवाद्भेदस्योक्तश्रुतौश्रुतेः ॥ १५४० ॥
प्रत्यक्पराग्भावतोहिविषयोविषयीनते ॥ मूलभाष्येकथंतर्हिपराक्प्रत्यगभिन्नता ॥ १५४१ ॥
अतःप्रत्यक्पराग्भावात्प्रतिबिंबस्तुबिंबतः ॥ भिन्नोविसदृशत्वाच्चज्ञानज्ञेयवदेवहि ॥ १५४२ ॥
सत्यश्चायमबाध्यत्वाद्ब्रह्मवत्प्रतिबिंबकः ॥ नहिसादृश्यमप्यस्यकात्स्न्येनैक्येतुकाकथा ॥१५४३॥

बयोरभेदःकथंस्यात् । तत्रभेदसाधकहेतोरत्रव्यभिचारप्रसंगान्नकथंचित् । अतोबिंबप्रतिबिंबयोरैक्यंवदन्पूर्वोत्तरविवेकशून्यइ तिभावः ॥ १५४१ ॥ एवंचबिंबप्रतिबिंबभेदेपरप्रक्रियामूलंश्रुतिमूलंचेत्यनुमानद्वयमासीदित्याह ॥ अतइति ॥ ज्ञानज्ञेयवत् विषयविषयिवदित्यर्थः । प्रत्यक्पराग्भावेनवैसादृश्यस्यापितत्रैवविद्यमानत्वात्हेतुद्वयस्याप्येकएवदृष्टांतः ॥ १५४२ ॥ प्रागुक्त भेदानुमानेप्रतिबिंबस्यमिथ्यात्वमपियुक्तिविरुद्धमित्याह ॥ सत्यश्चेति ॥ अयंप्रतिबिंबः । अबाध्यत्वात् नायंप्रतिबिंबइतिबाधा



भावात् । नेदानींप्रतिबिंबइतिप्रत्ययस्तुनेदानींघटइतिवत्प्रागभावस्यनाशस्यवासाधकः । नतुत्रैकालिकनिषेधरूपबाधस्य । अनु कूलतर्कमाह ॥ नहीति ॥ अस्यप्रतिबिंबस्य। कात्स्न्येनसादृश्यमपिहियस्मान्न। तस्मादैक्येकाकथेतियोजना । अनेनयदिबिंबप्र तिबिंबयोरैक्यंस्यात्तर्हिवैसादृश्यमेवनस्यादितितर्कस्सूचितोभवति ॥ १५४३ ॥ वैसादृश्यमेवविस्तरेणदर्शयति ॥किंविमर्दइति॥ विमर्दःपरिमलः ॥ १५४४ ॥ परिमाणस्पर्शगंधगुरुत्वैकत्वतइतिपंचमीबहुवचनांतात्तसिल् । परिमाणात् परममहत्परिमाणात् व्योम्नि तद्रहितस्वप्रतिबिंबादन्यता । एवंस्पर्शाद्गुणस्पर्शात् । अग्नौ गंधात्पुष्पे । गुरुत्वाद्भाराद्गिरौ । एकत्वादर्के । बहुतटाकज

किंविमर्दोमृगमदेदर्पणप्रतिबिंबिते ॥ १५४४ ॥ परिमाणस्पर्शगंधगुरुत्वैकत्वतोन्यता ॥
व्योमाग्निपुष्पगिर्यर्केष्वस्त्येवप्रतिरूपतः ॥ १५४५ ॥ रूपमात्रेणसादृश्यंवैसादृश्यंत्वने
कधा ॥ किंतेवार्यंतरस्थाब्दस्तनितैर्वनिताहृताः ॥ १५४६ ॥ ॥

लादिषुशतशःप्रतिबिंबनेपिबिंबस्यार्कस्यैकत्वात् । एतैःपंचभिःप्रतिबिंबविरुद्धगुणैःबिंबभूतव्योमादिषुस्वस्वप्रतिबिंबेभ्यःअन्यतेत्य र्थः । व्योम दर्पणप्रतिबिंबितव्योम्नोत्यंतभिन्नं । ततोविसदृशत्वात् घटवत् इत्याद्यनुमानपंचकमनेनोक्तंभवति ॥१५४५॥ तर्हि सादृश्यंकेनेत्यतआह ॥ रूपमात्रेणेति ॥ आकारमात्रेणेत्यर्थः । परंपरिहसन्नेवपुनरपिबिंबप्रतिबिंबयोर्वैसादृश्यमनुभावयति ॥ किंतइति ॥ अब्दोमेघः तस्यस्तनितैर्निर्घोषैः । बिंबभूतमेघवत्प्रतिबिंबितमेघस्यनिर्घोषाभावाद्वैसादृश्यमितिभावः ॥ १५४६ ॥

अस्तुवैसादृश्यं तथापिभेदोमास्त्वितिवदतःप्रतिकूलतर्कमाह ॥ किंचिदिति ॥ अनेकस्मिन्वैसादृश्येसतीतिसंबंधः । यदिवैसा दृश्येप्येकतास्यात् तर्हिंगोगवययोरप्येकतास्यादितितर्कमनेनोत्थापयति ॥ १५४७ ॥ नन्विदंमुखमितिप्रतिबिंबेपिमुखशब्दप्रयो गान्मुखप्रतिमुखयोरैक्यमितिशंकांपरिहरति ॥ वृत्तीति ॥ वैचित्र्यतः मुख्यगौणीलक्षणादिवैचित्र्यात् । यथातीरेगंगापदप्रयो गेपिनगंगैक्यं । तथात्रापिमुखसादृश्यान्मुखपदप्रयोगेपिनमुख्यैक्यं । तीरेगंगापदप्रयोगवत्ऐक्याभावेपिपदप्रयोगमात्रस्यवृत्त्यं

किंचिद्वैसादृश्यतोह्निगौर्गवयता(मगा)मियात् ॥ वैसादृश्येत्वनेकस्मिन्दृश्येपश्यैकता
कुतः ॥ १५४७ ॥ वृत्तिवैचित्र्यतश्शब्दमात्रेणैक्यंविरुद्धयोः ॥ किंगंगापदसंगेपितीरस्य
स्यात्प्रवाहिता ॥ १५४८ ॥ द्वाविमावितिविस्पष्टदृष्टेरपितयोर्भिदा ॥ द्वाविमावितिपा
र्श्वस्थोयतःपश्यतितौसदा ॥ अतःप्रत्यक्षतोप्यत्रभेदस्सिद्धोविवेकिनां ॥१५४९॥ नद्वा
विमावेकएवेत्यैक्यधीरस्तिकिंक्वचित् ॥ तस्मादबाधितंभेदप्रत्यक्षमभवद्धितत् ॥१५५०॥

तरेणापिसंभवात् । अतएव प्रतिमानंप्रतिरूपंप्रतिबिंबंचप्रतिमुखंप्रतिच्छायेत्यादौ प्रतिमुखं प्रतिरूपं प्रतिबिंबमित्येवतेषामनुशा सनं । मुखपदस्यापिमुख्यतस्तद्वाचकत्वेतस्यापितत्रानुशासनंस्यादितिभावः ॥ १५४८ ॥ बिंबप्रतिबिंबभेदेप्रत्यक्षमपिप्रमाणय ति ॥ द्वाविमाविति ॥ तयोः बिंबप्रतिबिंबयोः । तौ बिंबप्रतिबिंबौ । स्वस्यस्पष्टंमुखप्रत्यक्षाभावेनद्वाविमावितिप्रतीत्यभावेपि

पार्श्वस्थस्यसदापितथैवप्रतीतिरस्ति । एकमिदमितितुनकदापिप्रतीतिः । एवंचबिंबप्रतिबिंबभेदःप्रत्यक्षेणापिसिद्धइतिभावः ॥ १५४९ ॥ १५५० ॥ दर्पणेमुखमितिप्रतिमुखेमुखपदप्रयोगस्यपुनरपिनिदर्शनद्वयंदर्शयन्गतिमाह ॥ तदेवेदमिति ॥ साम्यतः सादृश्यात् । चित्रस्थिताकृतौ चित्रलिखितरामप्रतिमायां । पुराणादौजीवेष्वपि हरिरेवायं कृष्णएवायं रामएवायमित्यादिनातत्रोच्यमानैक्यव्यपदेशानामपिइयमेवगतिरितिसूचनायसएवायंरामइतिप्राचीननिदर्शनंज्ञातव्यं ॥ १५५१ ॥ १५५२ ॥

तदेवेदंमुखमितिव्यवहारस्तुसाम्यतः ॥ सएवायंरामइतियथाचित्रस्थिताकृतौ ॥ १५५१ ॥ चित्रसिंहोयथासिंहोमुखंप्रतिमुखंतथा ॥१५५२॥ कथंनदृश्यतेवक्रंतप्तवार्यंतराविशत् ॥ कथंचनव्रणंवक्रेकांस्यादर्शप्रवेशिनि ॥ १५५३ ॥ करस्थेदर्पणेहस्तीयद्यष्टैश्वर्यतोविशेत् ॥ कथंशिशुस्तांबिभृयाद्गजशालोद्यमोवृथा ॥१५५४॥ अष्टाशीतिसहस्राणिविस्तीर्णोयोजनस्ययः ॥ दर्पणेऽल्पप्रमाणेसौकथंविशतिचंद्रमाः ॥ १५५५ ॥

बिंबस्यैवप्रतिबिंबत्वेसर्वानुभवसिद्धंबाधकांतरंचाह ॥ कथमिति ॥ तप्तवार्यंतः तप्तोदकस्यांतः । प्रतिमुखस्यैवमुखत्वेपिठरस्थोष्णोदकेस्वमुखंपश्यतोमुखस्यैवतज्जलांतःप्रवेशाद्दाहोपिस्यात् । नचैतदस्ति । अतस्तप्तजलांतस्स्थप्रतिमुखात्अन्यदेवमुखमितिभावः ॥ १५५३ ॥ अल्पपरिमाणेदर्पणेततोप्यतिस्थूलस्यगजस्यप्रवेशोष्टैश्वर्यशक्तौसत्यामेवस्यात् । नचसाऽस्ति । अतोपीद

मयुक्तमितिपरपरिहासायाष्टैश्वर्यतइत्युक्तं । रात्रौदर्पणएवप्रविश्यस्थातुंशक्यत्वात्गजशालोद्यमोपिवृथेत्यर्थः ॥१५५४॥१५५५॥
प्रागुक्तमपितप्तोदकदृष्टांतमल्पदाहेतापकारणाभावाद्विशदयितुंपुनराह ॥ यदीति ॥ अग्निस्तंभनशक्त्यभावसूचनायनृणामित्यु
क्तं । तस्यमुखस्य ॥ १५५६ ॥ शीतोदकेपिबहुकालंस्वमुखदर्शनेतावत्कालंमुखस्यापिजलेप्रवेशात्परस्यदूषणंस्यादित्याह ॥ यद्यं
बुनीति ॥ तस्करस्येव यथातस्करंशिक्षितुंबहुकालंजलेमज्जयंतितद्वदित्यर्थः । यत्मुखं ॥ १५५७ ॥ प्रतिबिंबस्यबिंबादुत्पन्नका

यदितप्तोदकेत्युष्णेवक्रमेवविशेन्नृणां ॥ तदादाहोभवेत्तस्यकवोष्णादपियस्यभीः ॥१५५६॥
यद्यंबुनिचिरंनृणांवक्रमेवविशेत्तदा ॥ शिक्षास्यात्तस्करस्येवयद्विभेत्यघमर्षणात् ॥ १५५७ ॥
नैमित्तिकंहितत्कार्यंनिमित्तेसतिजायते ॥ तदपायेनाशवच्चसूर्यातपद्मविकासवत् ॥ १५५८ ॥
त्रपुसीसस्वर्णसर्पिश्चंद्रकांतद्रवत्ववत् ॥ जलौष्ण्यवद्ग्रहग्रस्तमर्त्यसत्त्वविशेषवत् ॥ १५५९ ॥
औपाधिकंप्रतिमुखंमुखेसत्येवदृश्यते ॥ मुखस्यापगमेचास्यनदृष्टत्वाष्टताचन ॥ १५६० ॥ नि
मित्तंबिंबसान्निध्यंकर्तानारायणःप्रभुः ॥ उपादानमुपाधिश्चेत्कार्यंवार्यमिदंकथं ॥ १५६१ ॥

र्यत्वेबिंबापगमेपिकुतोनस्थितिरितिशंकांबहुभिर्दृष्टांतैर्धिक्करोति ॥ नैमित्तिकमिति ॥ पिशाचावेशेसतिबहुतरभारवहनादिशक्ते
रपिदर्शनात्सत्वविशेषवदित्युक्तं । एतानिसर्वाण्यपिस्वनिमित्तेसतिसंति निमित्तापायेनसंति । तद्वदिदमपिबिंबेसत्यस्ति बिंबाप
गमेनाशान्नास्तीतिकात्रानुपपत्तिरितिभावः ॥ १५५८ ॥ १५५९ ॥ १५६० ॥ कारणासंभवात्प्रतिबिंबस्यकार्यत्वंनेतिशंकांनि



वारयति ॥ निमित्तमिति ॥ १५६१ ॥ ननुदर्पणेमृत्पिंडादेरिवविकारादर्शनात्कथमुपादानत्वमित्यतआह ॥ कार्यात्मनावि
वरणादिति ॥ प्रागविद्यमानप्रतिबिंबाकारस्यविवरणादित्यर्थः । तंतोरिव यथातंतोस्स्पष्टविकाराभावेपिसूक्ष्मतरविकारमादा
ययथापटोपादानत्वं तथादर्पणस्यापिसूक्ष्मविकारोनुमंतव्यः । अर्थः प्रमाणदृष्टोर्थः ॥ १५६२ ॥ बहिर्विकारादर्शनेप्यंतर्मुखस

कार्यात्मनाविवरणाद्विकारोदर्पणस्यच ॥ तंतोरिवानुमंतव्योहंतव्योर्थःकथंवद
॥ १५६२ ॥ बहिर्विकारशून्यस्यजठरस्ययथांतरे ॥ गुल्मग्रंथिविकारस्स्यात्तथायंचभ
विष्यति ॥ १५६३ ॥ घटात्मनाविकरणंमनसोयोनुमन्यते ॥ प्रतिबिंबात्मनोपाधेर्वि
कारोयंकुतोस्यन ॥ १५६४ ॥ द्वारंविनायत्प्रवेष्टुंनालंमृण्मयभित्तिषु ॥ कथंकांस्यंदृ
ढद्रव्यंतद्विशेन्मृदुलंमुखं ॥ १५६५ ॥ यदिवक्रंजलस्यांतःप्रविष्टंसत्प्रदृश्यते ॥ परा
ग्भावस्तर्हिकुतोनहिमज्जन्मुखेस्त्यसौ ॥ १५६६ ॥ ॥ ॥

मानाकारविवरणाद्दर्पणस्यापिविकारित्वंभवतीत्यत्रदृष्टांतमाह ॥ बहिरिति ॥ १५६३ ॥ किंचकेदारघटाद्याकारेणानानुभवि
कोमनःपरिणामोयेनांगीक्रियतेतस्यदृश्यमानेस्मिन्विकारेकुतोद्वेषइत्याह ॥ घटात्मनेति ॥ अस्य मायावादिनः ॥ १५६४ ॥
प्रागुक्तंदूषणांतरंचोपपादयति ॥ द्वारंविनेति ॥ १५६५ ॥ मुखस्यैवजलांतःप्रवेशांगीकारेपुनरपिदोषद्वयमाह ॥ यदिवक्रमि

ति ॥ मज्जन्मुखे स्नानार्थजलांतःप्रवेशंकुर्वति । असौपराग्भावः ॥ १५६६ ॥ ततमुखं ॥ १५६७ ॥ उक्तमेवदूषणंविकल्पमुखे नद्दढयति ॥ यद्यादर्शइति ॥ सत् यथार्थतयाविद्यमानं । तेमते । नचेत् यथार्थतयाविद्यमानंनचेत् । भ्रमत्वात् दर्पणेमुख मितिप्रतीतेर्भ्रमत्वात् । साधिका प्रतिमुखस्यमुखत्वसाधिका ॥ १५६८ ॥ दर्पणसंयोगेसतिदारुप्रोतशरवत्तदाघातवशात्परावृत्त्यै वागतंनयनंमुखंपश्यतीतिचमायिनोवदंतितदनूद्यदूषयति ॥ याचेत्यादिना ॥ यच्चक्षुः शैला च्छिलामयादतिकठिनात्पर्वतात् ।

जलस्थंचेद्बहिर्नस्याद्बहिस्स्थंचजलेकुतः ॥ मज्जन्मुखमिवैकत्वादेकत्रैवभवेद्धितत् ॥ १५६७ ॥
यद्यादर्शेमुखंसत्तेदोषोयंदुस्तरस्तदा ॥ नचेत्तदाधारताधीर्भ्रमत्वान्नैवसाधिका ॥ १५६८ ॥ या
चदर्पणसंबंधाच्चक्षुषःपृष्ठतोगतिः ॥ मुखस्यैवेक्षणंचोक्तंतच्चित्रमितिमेमतिः ॥ १५६९ ॥ नय
च्छैलान्निववृतेनक्रूरादनलादपि ॥ तच्चक्षुःपश्यतस्स्वास्यंजलात्किलनिवर्तते ॥ १५७० ॥ यत
श्शिलायायोगेपिदारुप्रोतमुखश्शरः ॥ यथागतंतथायातिपृष्ठंपृष्ठंमुखंमुखं ॥ १५७१ ॥ ॥

किलेत्यपहासः । कठिनद्रव्यत्वाद्दर्पणान्निवर्ततेचेत्मृदुलाज्जलान्निवृत्तिर्नस्यात् । शैलाद्यादेश्चसुतरांनिवृत्त्यातत्रापीदंमुखमित्ये वप्रतीतिस्स्यात् । अयंगिरिरित्यादिप्रतीतिःकदापिनस्यात् । कठिनाद्वामृदुलाद्वानिवृत्तिस्वभावादेवनिवर्ततेचेत्तर्हिदूरस्थतटाक जलादपिनिवर्तेत । किंचैवंसतिचक्षुषासकलपदार्थदर्शनेपिमुखमित्येवप्रतीतिस्स्यात् । तत्तदर्थप्रतीतिःकदापिनस्यात् । एवंचत्व मंधोवास्याःमहोन्मत्तोवास्याइत्यपहासस्यावर्जनीयत्वात् ॥ १५६९ ॥ १५७० ॥ दूषणांतरंचाह ॥ यतइति ॥ १५७१ ॥ ईद

शी दारुप्रोतशरवत्यथागतमेवनिवृत्तिस्स्यात् । नतुमुखाभिमुख्येन । एवंचमुखप्रतीतिरपिनस्यादितिभावः । असंभावितंच जडस्यचक्षुषोविषयाभिमुख्येनप्राग्गतस्यमुखाभिमुख्येनपुनरागमनमित्याह ॥ पुंवदिति ॥ १५७२ ॥ असंभावितमपीदंनिवर्त नमंगीक्रियतेचेत्तर्हिंघटकुड्यादितोपिनिवर्तमानंचक्षुस्त्वन्मुखंपश्येत्किमितिपृच्छति ॥ एवंचेदिति ॥ अन्यत्रसर्वत्रस्वचक्षुषस्स्व मुखमयोग्यंचेदत्रैवकथंयोग्यमित्याह ॥ तस्येति ॥ तस्यचक्षुषः । इहदर्पणस्थले ॥ १५७३ ॥ दूषणांतरंचाह ॥ किंचेति ॥

ततश्चक्षुःपरावृत्तिरपिस्यादीदृशीपरं ॥ पुंवत्किंवकुमुचितानिवृत्तिस्स्वेच्छयाजडे
॥ १५७२ ॥ एवंचेत्कुड्यकुंभादिदृष्ट्वादृष्ट्वानिवृत्तिमत् ॥ किंचक्षुरीक्षतेस्वास्यंतस्ये
इनतपोधिकं ॥१५७३॥ किंचैवंसतितद्बुद्धेराकारस्स्यादिदंमुखं ॥ इत्येवदर्पणादीनां
सत्येवंदर्शनंचन ॥ दर्पणेमुखमित्येवमाकारस्त्वष्टमोरसः ॥ १५७४ ॥ अथार्धाधीभि
संबंधाद्द्विधाभूतस्यचक्षुषः ॥ धीद्वयंयदिजायेतहीयेततवधीस्तदा ॥ १५७५ ॥ ॥

तद्बुद्धेः दर्पणान्निवृत्तचक्षुर्जन्यबुद्धेः । सत्येवं एवंसतीत्यर्थः । दर्पणादितोनिवृत्तचक्षुषापुनर्दर्पणादिदर्शनायोगादितिभावः । आकारःबुद्धेराकारः । दर्पणस्यैवदर्शनाभावेदर्पणेमुखमितिदर्शनंसुतरांनस्यादितिभावः ॥ १५७४ ॥ पक्षांतरमुत्थाप्यदूषयति ॥ अथेति ॥ धीद्वयं इदंदर्पणमिदंमुखमितिदर्पणधीर्मुखधीश्च । तवधीर्हीयेत । एवंवदंस्त्वंबुद्धिमान्नभवसीत्यर्थः ॥ १५७५ ॥

विरुद्धदिग्द्वयं दर्पणदिक्मुखदिक् । एकदिग्गतयोर्योग्ययोरर्थयोरेकदैवचक्षुस्संबंधोदृष्टः । नतुविरुद्धदिक्स्थयोः । अतोपीदम संभावितमित्यर्थः ॥ १५७६ ॥ चक्षुर्द्वारामनसोपिबहिर्निस्सरणंवदतस्तवमतेअणोर्मनसोद्विधाभूतचक्षुर्भागसंयोगायोगाच्चेदमसं गतमित्याह ॥ किंचैवमिति ॥ पक्षांतरमुत्थाप्यदूषयति ॥ समूहेति ॥ सवदन्निति संबंधः । दर्पणेमुखमितिधियस्समूहालंब नतांवदन्नित्यर्थः । मोहालंबनंमोहस्यमिथ्याज्ञानस्यालंबनःमिथ्याज्ञानीत्यर्थः । अणुमनसोविरुद्धभागद्वयसंयोगानुपपत्तेरपरि

विरुद्धग्द्वियस्यार्थसंबंधस्त्वेकचक्षुषः ॥ यतोनदृश्यतेनॄणांततोप्येतदसंगतं ॥ १५७६ ॥ किंचै वमपिधीर्द्वंद्वंकथंस्यान्मनसाणुना ॥ समूहालंबनाधीश्चेत्समोहालंबनोवदन् ॥ १५७७ ॥ किं चावाङ्मुखपुंसोक्षिपरावृत्येक्षतांमुखं ॥ तद्रुद्धबहुदूरस्थमित्रमैत्रीकुतोवद ॥ १५७८ ॥ किंचैवं सतिभूषास्थरत्नलक्षेषुबिंबितं ॥ मुखंस्वमीक्षमाणस्यधीस्स्यादेकंमुखंत्विति ॥ १५७९ ॥ ॥

हारात् । मोहोऽज्ञानंवा ॥ १५७७ ॥ अपिचमध्याह्नकालेतटाकजलादाववाङ्मुखतयास्वमुखंपश्यतस्तत्रैवमुखदर्शनंसूर्यमंडलद र्शनंचजायते । तत्रत्वदुक्तरीत्यापरावृत्तमपिचक्षुर्मुखंपश्यतु । मुखेनप्रतिरुद्धांस्वशिखामप्यपश्यत्तत्प्रतिरुद्धंमुखोपरिभागेबहुदूर स्थितंसूर्यमंडलंकथंपश्यतीत्याह ॥ किंचेति ॥ तद्रुद्धस्य तेनमुखेनप्रतिरुद्धस्य । बहुदूरस्थस्य मित्रस्य सूर्यस्य । मित्रदर्शनमिति यावत् ॥ १५७८ ॥ दूषणांतरंचाह ॥ किंचेति ॥ भूषातःपरावृत्यागतेनचक्षुषाएकस्यैवस्वमुखस्यदर्शनादितिभावः ॥१५७९॥



ननुदोषादनेकत्वदर्शनमित्यतआह ॥ कपोलइति ॥ तत्तस्मात् परावृत्यागतेचक्षुषिउपाधिसंयोगाख्यदोषस्याप्यभावात् । चक्षु षोदोषयोगःकल्पकोन । किंतुतेकपोलएवकल्पकः । सचदोष्णःहस्तस्ययोग्यः त्वद्धस्तेनैवताडनयोग्यः । चक्षुषः त्वच्चक्षुषः योग्योन । स्वकपोलस्यस्वेनादर्शनादित्यर्थः ॥ १५८० ॥ अतः मुखस्यैवस्वप्रतिमुखत्वायोगात् । तत् प्रतिमुखं । बिंबो पाध्योर्मुखदर्पणयोः । तदेवमुखमेव । तत्प्रतिमुखं ॥ १५८१ ॥ कुतइत्यतःपक्षद्वयेपिप्रागुक्तरीत्यासंगृह्यतस्योभयतःपा

कपोलःकल्पकस्तत्तेदोष्णोयोग्योनचक्षुषः ॥१५८०॥ अतस्तत्तादृशंवस्तुलघुभूतंहिजन्य ते ॥ बिंबोपाध्योस्सन्निधानात्कथंस्याद्भितदेवतत् ॥१५८१॥ प्रतिबिंबस्यमिथ्यात्वेसत्य बिंबाद्भवेद्भिदा ॥ प्रतिबिंबस्यसत्यत्वेद्विस्वभावत्वतोभिदा ॥ १५८२ ॥ कथंचप्रतिबिंब स्यमिथ्यात्वंयौक्तिकंविदां ॥ नह्यस्तिबाधिकानायंप्रतिबिंबइतिप्रमा ॥ १५८३ ॥ दृष्टाबा धितकार्यस्याप्यन्यथानुपपत्तितः ॥ कल्प्यंस्यात्कारणंसर्वंयथेशःकलमांकुरात् ॥१५८४॥

शांरज्जुंकरोति ॥ प्रतिबिंबस्येति ॥ द्विस्वभावत्वतः परिमलापरिमलादिनाद्विस्वभावत्वात् ॥ १५८२ ॥ मिथ्यात्वेबाधकांतरं चाह ॥ कथमिति ॥ नायंप्रतिबिंबइतिबाधिकाप्रमानह्यस्तीतिसंबंधः । उपलक्षणंचैतत् । नेदानींप्रतिबिंबइतितुप्रमानबाधिका चेत्यपिद्रष्टव्यं ॥ १५८३ ॥ ननूपादानकारणादर्शनान्मिथ्यात्वमितिशंकांयथावस्तुकथनेनपरिहृतामपिपरमुखेनैवकारणंवाचयि तुंप्रतिबंदीमुखेनपुनःपरिहरति ॥ दृष्टेति ॥ अन्यथाकर्तुरदर्शनात्क्षित्यादेरपिमिथ्यात्वंस्यादितिभावः ॥ १५८४ ॥ विकाराद

र्शनात्कथमुपाधिरुपादानमितिशंकामपिप्रतिबंदीसूचनेनपरिहरति ॥ अस्त्विति ॥ तद्वद्रूपरसादिवत् दर्पणस्थरूपरसादिवत् । यथाबीजादंकुरवत्दर्पणरूपरसादीनांदर्पणात्पार्थक्येनाविकारेपि दर्पणविकारत्वं तथास्यादितिभावः । किंचयथाएकस्यप्रध्वंसस्यैवोपादानादर्शनान्निरुपादानककार्यत्वमंगीक्रियतेतथास्याप्यंगीक्रियतां । कल्पकन्यायस्योभयत्रसाम्यादित्याह ॥ निमि

अस्तूपाधिविकारोसौतद्वद्रूपरसादिवत् ॥ निमित्तमात्रजन्योवाभावोप्येकोस्त्वभाववत् ॥ १५८५ ॥ उपादानस्यचादृष्ट्याकार्यदृष्ट्याचतादृशी ॥ अवस्थाकल्प्यतेऽभावेभावेकिंनतथाविधे ॥ १५८६ ॥ सर्वथादृष्टकार्यस्यह्यपलापोनयुज्यते ॥ नचेदीदृशम्भुतंत्याज्यंनारिकेलफलेजलं ॥ १५८७ ॥ अतस्स्वाप्नपदार्थस्यप्राहुस्संस्कारजन्यतां ॥ नस्वप्नइतिबाधस्याभावादर्थक्रियाकृतेः ॥ १५८८ ॥ मुखशब्दःप्रतिमुखेसोपचारःकथंनते ॥ मुखंप्रतिस्थितंयत्स्यात्तद्धिप्रतिमुखाभिधं ॥ १५८९ ॥ ॥ ॥

त्तमात्रेति ॥ भावःप्रतिबिंबः ॥ १५८५ ॥ तादृशी निमित्तमात्रजन्यत्वरूपा । आदौअभावइतिपदच्छेदः । पश्चाद्भावइति ॥ १५८६ ॥ नचेत् कार्यान्यथानुपपत्त्याऽदृष्टकारणकल्पनंनचेत् ॥ १५८७ ॥ अतः दृष्टकार्यस्यापलापायोगादेव ॥ १५८८ ॥ प्रतिमुखेमुखशब्दस्यौपचारिकत्वेनिदर्शनान्युक्तानि । निमित्तंचाह ॥ मुखशब्दइति ॥ तेमते । तत् मुखंप्रतिस्थि

तत्वेनप्रतिमुखशब्दवाच्यं ॥ १५८९ ॥ मुखं मुखशब्दवाच्यं मुखाभिन्नंच । मुखप्रतिमुखयोर्विरुद्धार्थत्वेनोभयोरप्येकत्रमु
ख्यवृत्त्ययोगात् स्वस्यैवप्रतिस्थितत्वायोगाच्चेतिभावः । बिंबप्रतिबिंबवादमुपसंहरति ॥ तस्मादिति ॥ तस्मा दुक्तन्यायात्।
कर्मभेदात् शब्दव्यवहारदाहादिकर्मभेदात् । परिमाणगुरुत्वादिगुणभेदाच्चेत्यपिद्रष्टव्यं ॥ १५९० ॥ परिच्छेदमुपसंहरति ॥
वादिराजेति ॥ अथ शुद्धिसौरभानंतरं भगवतोब्रह्मशब्दसूचितंसकलगुणपूर्णत्वाख्यलक्षणमेव सजातीयविजातीयव्यावृत्त
तयाभगवदवधारणहेतुत्वा ल्लक्षणप्रमाणाभ्यांवस्तुसिद्धिरितिवदतापिलक्षणस्यैवादावुपात्तत्वाच्चप्रथमतोविचारयोग्यं । यत्रगुणा

कथंतदेवचमुखंतस्मात्प्रत्यक्पराक्स्थितेः ॥ संज्ञाभेदात्कर्मभेदाद्बिंबोन्यःप्रतिबिंबतः ॥ १५९० ॥
वादिराजाख्ययतिनासाधितायुक्तिमाल्लिका ॥ भेदसौरभसर्वस्वमथविष्णोर्न्यवेदयत् ॥१५९१॥

स्तत्रदोषाइतिन्यायेनभगवतिप्राप्तदोषाणांपरिहारायभगवतश्शुद्धिरेवतदनंतरंविचारयोग्या । एवंचोभयसौरभार्थयोरपिभगवद
साधारणधर्मत्वेनलक्षणत्वात्ताभ्यांकिंभगवतिसिद्धमितिबुभुत्सायां सजातीयविजातीयव्यवच्छेदात्मकलक्षणफलीभूतभेदएवभगव
तितदनुविचारयोग्यः । ततश्चभेदावधिभूतसजातीयविजातीयात्मकचेतनाचेतनरूपप्रपंचएवप्रपंचयितुंयोग्यः । तदुपरिविषयभूता
दस्मात्परमपुरुषान्ममापेक्षितफलंकथंसिद्ध्येदित्याकांक्षायांमोक्षसाधकतयाश्रुत्युक्तश्रवणमननजन्यापरोक्षजन्यमहाप्रसादएववि

चारयोग्यः । अंतेस्वामिद्रोहितयाभगवदैक्यप्राप्ते षड्बुद्ध्यभावेनजडत्वापादकदुःखध्वंसस्य सततोर्ध्वगमनादेश्चानाकाक्षितत्वे नतत्सर्वंनिरस्यसुखमेवमेस्याद्दुःखंमनागपिमाभूदितिसर्वापेक्षितमोक्षस्यस्वरूपमेवनिरूपणयोग्यमितिपंचसौरभक्रमोप्यथेतिवदतै

इतिश्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्वादिराजतीर्थश्रीमत्पूज्यचरणविरचितायां युक्तिमल्लिकायांभेदसौरभंसंपूर्णं ॥ ॥ ॥ ॥

वसूचितइतिज्ञातव्यं ॥ १५९१ ॥ इतिश्रीमद्वादिराजतीर्थश्रीपादकृतयुक्तिमल्लिकाटीकायांसुरोत्तमतीर्थकृतायांभावविलासिन्यां भेदसौरभसर्वस्वव्याख्यासंपूर्णा ॥ ॥ ॥ ॥



